# सागरिका

त्रैमासिकी

चतुर्दशवर्षे प्रथमाङ्कः

संपादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः

**संस्कृतपरिषद्, सागरविश्वविद्यालयः**

सागरम् ( म० प्र० )

मूल्यं रू० १०—०० वार्षिकम् ]          [ मू० रू० ३—०० प्रत्यङ्कम्

प्रकाशिका
सागरिका-समितिः
सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३—०० रूप्यकाणि |
| वार्षिकम् | १०—०० रूप्यकाणि |
| आजीवनग्राहकस्य | १५०—०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र-[ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

सूच्यम् : आजीवनग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्काः सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रकः
विद्याविलास प्रेस
के. ३७/१०९, गोपाल मन्दिर लैन
वाराणसी-२२१००१ ( उ० प्र० )
फोन ५२९३९

# विषय-सूची

# विषय-सूची

# विषय-सूची

# विषय-सूची

# श्रीकण्ठचरितस्य रचनाकालः

*श्रीबंकिमचन्द्रमण्डलः*

कश्मीर-कवि-मंख-रचितस्य श्रीकण्ठचरितस्य रचनाकालः ११३५–११४५ ख्रीस्ताब्दान्तर्वर्तीति बुधैः स्वीक्रियते। पण्डित-प्रवरेण श्रीमता ब्युलर-महोदयेनैष कालः प्राङ् निर्णीतः।[1]

एम० ए० स्टेइन्[2] तु ११२८–११४४ ख्रीस्ताब्दान्तर्गतस्तथा ११४४ ख्रीस्ताब्द-समीपवर्ती स्यादेष काल इत्याह।

विश्वनाथकृतसाहित्यदर्पणस्य भूमिकायाम् पी० वी० काणे इति ख्यातेन महामहोपाध्यायेन (१९६५ ख्रीस्ताब्दे प्रकाशितस्य पंचम-संस्करणस्य षष्ठ-पृष्ठम्) ११४० ख्रीस्ताब्द-समीपवर्ती एष काल इत्यभिहितम्। अन्ये कोविदा ब्युलर-मतमेवानुसरन्ति।[3]

---

१. "डिटेल्ड रिपोर्ट् आव् ए टूर् इन् सर्च आव् संस्कृत मैनस्क्रिप्टस् इन् कश्मीर, राजपूताना एण्ड् सेन्ट्रल् इण्डिया" इति डः जि० ब्युलर इत्यनेन विरचितस्य प्रबन्धस्य रायल एसियाटिक् सोसाइटी इत्यस्य मुम्बई–शाखायाः १८७७ मित-परिशिष्टसंख्याया [एक्स्ट्रा नम्बर]-उक्त-पत्रिकायाः (५० पृष्ठम्)।

२. "कह्लणस् राजतरंगिणी" इति एम० ए० स्टेइन् इत्यस्य १९६२ [१९६१] ख्रीस्ताब्दे मोतीलाल-बनारसी-दास-प्रकाशितस्य प्रथम-खण्डस्य भूमिकान्तर्गतद्वादश-पृष्ठम्।

३. 'हिष्ट्री आव् संस्कृत लिटरेचर् आव् काश्मीर' इति श्रीसुनीलचन्द्र राय इत्यस्य, 'इण्डियन् हिस्टोरिकाल क्वार्टरली' इत्यत्र ३१ खण्डे० २५२ पृष्ठम्; हिष्ट्री आव् संस्कृत लिटरेचर् इति एस० एन० दास गुप्त तथा एस० के० दे इत्यनयोः, प्रथमः खण्डः, द्वितीयं संस्करणम्, १९६२ ख्रीस्ताब्दः, ३२२ पृष्ठम् इत्यादि।

## ब्युलर-मत-समीक्षा

ब्युलर-मतस्यादरणीयत्वेऽपि तत्रास्ति समीक्षा-प्रयोजनम् यतः—

( १ ) ब्युलर-महोदयेनोक्तकालस्याद्यावधि-निरूपणे किमपि प्रमाणं न दर्शितम् ।

( २ ) अद्यावधि-निरूपकत्वेनोपन्यस्तं विवरणं न प्रमाणम् तत्रोर्ध्वावधि-निरूपक-प्रमाणमग्रे दर्शयिष्यामः । अधुना ब्युलर दर्शितावद्यावधि-प्रमाणं विचार्यते ।

मंख-वर्णितस्य ( श्रीकण्ठ-चरितम् २५।१०२ ) कान्यकुब्ज-नृपतेर्गोविन्दचन्द्रस्य कालः ११२०–११४४ ख्रीस्ताब्दान्तर्गत इति ब्युलर-मतम् ।

( द्रष्टव्यम् , पूर्वोल्लिखितस्य 'डिटेलड् रिपोर्ट्' इत्यादिकस्य ५१ पृष्ठम् ) । तत्-कालनिरूपणे ब्युलरेण जेम्स प्रिन्सेप् इत्यस्य विवरणं प्रामाण्येन गृहीतम् ( प्रिन्सेप-मतम तत्-कृते 'एसेस् आन् इण्डियन् एन्टिकुइटिस्' इत्यत्र द्वितीये खण्डे २५८ पृष्ठे द्रष्टव्यम् ) । अपितु तदप्रामाण्यमेवेतिहास-विरोधात् । यतः अद्यावधि लब्धा नृपतेर्गोविन्द-चन्द्रस्य ताम्र-लिपि-राजयः १११४-११५४ ख्रीस्ताब्दांकिताः परिलक्ष्यन्ते ( द्रष्टव्यानि, 'हिष्ट्री आव् कनौज्' इति डा० आर० एस० त्रिपाठी इत्यस्य, ३६६-३७४ पृष्ठानि ) ।

अतः गोविन्दचन्द्रस्य कालः श्रीकण्ठचरित-रचना-कालस्य निम्नावधि-निर्णये मानं चेत्तर्हि सोऽवरावधिः ११५५ ख्रीस्ताब्द-समीपवर्ती भवेत् ।

## स्थूलत ऊर्ध्वावर-काल-निरूपणम्

स्वकाव्यस्य तृतीय-सर्गान्तर्गते ६६ तमे श्लोके मंखेन सुस्सल-देव-नन्दन-जयसिंह-भूपति-नियुक्तः प्रजापालन-पुरुष इत्यात्म-परिचयः दर्शितः । स च जयसिंहः कश्मीर-नृपतिरिति स्फुटमवगम्यते । कह्लण-कृत-राजतरंगिणी-वर्णनानुसारेणास्य जयसिंहस्य राजत्व-कालः ११२८-११५० ख्रीस्ताब्दान्तर्गतो भवेत ( राजतरंगिणी—स्टेइन्-कृते संस्करणे-

८।३४०४) अपि तु कल्हण-वर्णिते काले जयसिंहः शासक आसीत्। तस्य राजत्वकालस्यान्तिमावधिः कल्हणेन न दत्तः। जोनराज-कृत-राजतरंगिण्यां तु (कलिकाता-संस्करणम्, १८३६ खीस्ताब्दः, श्लोकाः १७-३६) जयसिंहस्य राज्यकालः पंच-वर्षाधिक इति दृश्यते। तेन स कालः ११२८-११५५ खीस्ताब्दान्तर्वर्तीति प्रतिपद्यते। अतः जयसिंह-राज्यकाले मंख-काव्यस्य रचितत्वात् तत्-काव्य-रचना-कालोऽपि ११२८-११५५ खीस्ताब्दान्तर्गतो भवेत्।

## ऊर्ध्वावधि-निरूपणम्

(२) श्रीकण्ठचरितस्य रचनाकालः नैव ११२३ खीस्ताब्द-पूर्ववर्ती। तत्र वक्ष्यमाणं प्रमाणं विचार्यम्।

स्व-काव्य-रचनानन्तरं कश्मीर-भूपति-जयसिंहामात्यस्यालङ्काराभिधस्य स्वाग्रजस्य सभागृहे स्वकाव्य-समीक्षायै विदुषां सकाशे तत् पठितमित्युक्तं मंखेन (श्रीकण्ठ० २५।१, १४–१८ इत्यादयः)। तत्र सभायां राजपुरी-संधि-विग्रह-नियोगी कविर्जह्लणः समुपस्थित इत्युक्तं तेनैव (तत्रैव ७३-७५)। कल्हण-कृत-राजतरङ्गिण्या ज्ञायते कश्मीर-राजयो उच्चल-जयसिंहयोः राज्यकाले (११०१-११११, ११२८-११५५ खीस्ताब्दान्तर्गते) राजपुरी-राजः सोमपाल इत्यासीदिति (राजतरं० ७।१७१७, ८।२८८-२८६, ३४१, १५२६, १६४७ इत्यादयः)। यद्यपि सोमपालेन ११२८ खीस्ताब्दोत्तर-भागे जयसिंहेन सह संधिः कृतः (राजतरं० ८।१५२६, १५२५, १३४८) तथाप्यन्तरान्तरा सोमपाल-कृत-विरोधात् ११३३ खीस्ताब्दात् प्राक् तयोर्मैत्री न सुस्थितासीत् (राजतरं० ८।१६४२, १८५०-५३)।

पुनश्च सूक्तिमुक्तावली-कार-भिन्नेन केनचिज् जह्लणेन विरचितं सोमपाल-विलासमिति काव्यम् जह्लण-प्रभु-राजपुरी-राज-सोमपालचरित-मूलमित्यनुमितम् (पूर्वोक्तस्य एस० एन० दासगुप्त तथा एस० के दे इत्यनयोः हिष्ट्री इत्यादिकस्य ग्रन्थस्य ३६०, ६७७ पृष्ठयोः द्रष्टव्यम्)। अतः मंखोल्लिखितः राजपुरी-संधि-विग्रहनियोगी जह्लण एव सोमपाल-विलास-कर्ता भवेत्। 'स च जह्लणः सोमपालेनैव पूर्वोक्तायामलङ्कार-

सभायां प्रेरितो भवेत्। तत्-प्रेरणं च ११३३ खीस्ताब्दात् प्राक् नैव सम्भवेत् सोमपाल-जयसिंहयोः मित्रतायाः तत्-पूर्वं दृढीभवनाभावात्, अलङ्कारस्य जयसिंहाधीनत्वाच्च। अतो मङ्खकाव्यस्य रचनानन्तरमलङ्कार-सभायां पठितत्वात् तत्-काव्य-रचनाकालः ११३३ खीस्ताब्द-पूर्ववर्ती न स्यात् तत्-पूर्वं तत्र जह्लणोपस्थितेरसम्भवात्।

(२) किं नास्ति प्रमाणं येन वयं मंख-काव्य-रचना-कालोर्ध्व-सीमानम् ११३६ खीस्ताब्दात् प्राग्-भावित्वेन निर्णेतुं न सम्मताः। तत्रेदं विचार्यम्—

मंखः जयसिंह-नियुक्तः प्रजापालन-पुरुष आसीदित्युक्तं प्राक्। अतो जयसिंह-राज्यस्य प्रशान्ति-मये काले एव मंखस्य काव्य-रचनावसरः स्यात्, न तु संग्राम-मये काले। तेजकण्ठानुरोधेन मंखकृता जयसिंह-राज्य-प्रशान्ति-सूचिका राजस्तुतिश्चात्र मानम् (द्रष्टव्यम्, श्रीकण्ठ० २५।१२१-१२६)। तत्र चिन्त्यम्, को नाम जयसिंह-राज्यकालः संग्राम-मयः को वा प्रशान्तिमय इति। तत्र कह्लणोऽस्माकं शरणम्। राजतरङ्गिण्या ज्ञायते, ११२८ खीस्ताब्दादारभ्य ११३६ खीस्ताब्द-मध्य-भागावधिकः कालः संग्राममय इति (द्रष्टव्यम्, राजतर०—स्टेइन्, ८।१३४८–१३७५, विशेषेण १३४८, १३०६–३३, १३४०–४१, १३५१–५५, १३७५, अपि च मोतीलाल–बनारसीदास–कृत–संस्करणे प्रथम-खण्डस्य भूमिकायाः १६–१७, १२३–१२६ पृष्ठेषु)। अपि च ११३६ खीस्ताब्दान्तिम–भागादारभ्य ११४२ खीस्ताब्दान्तिम–भागं यावद् व्याप्तः जयसिंह–राज्य–काल–मध्य–भागः प्रशमन–मय आसीदिति (द्रष्टव्याः राजतरङ्गिणी–८।२३०६ तदग्रवर्तिनः श्लोकाश्च, २३७६ तदग्रवर्तिनश्च, २४८२, २४८८, २४६५, २५१४–१६, २६०७, २६४१, पूर्वोल्लिखिता भूमिका च)। एतदवर-कालस्तु नात्र विचार्यते ऊर्ध्व–सीमा–निरूपणे तदनावश्यकत्वात्। यद्यपि स्टेइन्–महोदयेन जयसिंहस्य राज्यम् ११३५ खीस्ताब्दे आपदो विरामं लेभे इत्युक्तम् (द्रष्टव्यम् राजतरं०–मोतीलाल०, प्रथमे खण्डे भूमिकायाः १७ पृष्ठम्), तथापि वक्ष्यमाण–कारणेभ्योऽस्माभिरनुमीयते, जयसिंह-राज्यस्य संग्राममयः कालः ११३६ खीस्ताब्द-मध्यभागावधिक आसीदिति।

कल्हण-कृत-राजतरङ्गिण्या ज्ञायते, जयसिंह-रिपुर्मल्लार्ज्जुनः लौकिकैकादशाब्दस्याश्विने मासि (११३५ खीस्ताब्दस्य आगस्त-सेप्तेम्बर-मासयोर्मध्ये) कारारुद्धोऽभवदिति (द्रष्टव्यम्, राजतरं० ८।२३०६)। ततो मल्लार्जुनः कोष्ठक-चित्ररथयोः वधाय जयसिंहमुपदिष्टवान् (द्रष्टव्यम् राजतरं० ८।२३११)। ततो जयसिंह-सैन्येन-रिल्हणेनाक्रान्तः कारारुद्धश्च कोष्ठको बहुदिवसानन्तरं ममार (द्रष्टव्यम् राजतरं० ८।२३१३, २३४०)। पलायितश्चित्ररथो मासाष्टकानन्तरं गतासुरभवत् (द्रष्टव्यम्, राजतरं० ८।२३४४, २३५५)। कालोऽयं सर्वथावनतिमय इति वर्णितः कल्हणेन (राजतरं० ८।२३७५)। अनन्तरं च जयसिंहस्य धर्मकर्माणि कश्मीर-देशस्य विपन्मुक्तिश्च वर्णितानि तेनैव (८।२३७६-८४)। अतो जयसिंह-राज्यस्य संग्राम-कालो न्यूनतः ११३६ खीस्ताब्द-मध्यभागान्तर्वर्ती भवेत्। एवमस्माभिर्मन्यते, मंख-काव्य-रचना-कालोर्ध्व-सीमा ११३६ खीस्ताब्द इति।

## निम्नावधि निरूपणम्

श्रीकण्ठचरित-रचना-कालस्यावरावधिर्नैव ११४२ खीस्ताब्दोत्तर-वर्ती। तत्र वक्ष्यमाण-प्रमाणानि समीक्षणीयानि।

कल्हण-कृत-राजतरङ्गिण्या ज्ञायते, शिरःशिलाख्ये दुर्गे जयसिंहेन लोडनो निबद्धो लौकिकोनविंशाब्दस्य फाल्गुने मासे (११४४ खीस्ताब्दस्य जानुयारी-फेब्रुयारी-मासयोर्मध्ये) [द्रष्टव्यम्, राजतरं० ८।२४६२, २६४२]। जयसिंहस्य योधा लोडन-बन्धनात् पूर्वं कदाचित् प्रागुक्त-दुर्गमवरुरुधुः [राजतरं० ८।२५५२ तदग्रवर्तिनश्च श्लोकाः, अपि च २५८५, २५८६, २६१२, २६२०, २६१६)। दुर्गावरोधात् कियत्कालं प्राग् जयसिंहामात्या अरिभिः संधि-करणाय तमुपदिष्टवन्तः (राजतरं० ८।२५४२)। जयसिंह-कटकैस्त्रिचतुरान् मासांस्तिष्ठद्भिरपि दुर्गाश्रिताः शत्रवः आदातुं नैवाशक्यन्त (८।२५१५) कति च जयसिंह-योधाश्चिर-प्रवास-निर्वेदाच्चलिताः (८।२५१४)।

## उपरिष्टादस्माभिरेवमुपलभ्यतेः

शिरःशिला-दुर्गावरोधात् प्राग् जयसिंह-वाहिनी तदन्तिके चिरं

स्थिता, न्यूनतस्त्रिचतुरान् मासान् । पुनश्च दुर्गावरोध–लोडन–बन्धनयो-र्मध्ये कति दिवसा गताः । एवं यतो लोडनः ११४४ खीस्ताब्दस्य प्रारम्भे बद्धस्ततो जयसिंहस्य शिरःशिला–यानारम्भ–कालः न्यूननः ११४३ खीस्ताब्द–शेषार्ध–वर्ती भवेत् । पुनश्चाकृष्यते प्रेक्षावतां प्रेक्षा राजतर-ङ्गिणीं प्रति । अलङ्काराभिधो मङ्खाग्रजो जयसिंह–सैन्यान्तर्गत आसीत् शिरःशिला–यानकाले (८।२५५७, २६२८)। तद्–दुर्गावरोध–काले-ऽलङ्कारस्य योधकृत्यानि ११४४ खीस्ताब्दस्य प्रारम्भे एव घटितानि, तत् कालस्य लोडन–बन्धन–काल–सामीप्यात् । तदा चालङ्कारः 'बाह्य–राजस्थानाधिकारभाक्' इति (८।२५५७), राजस्थानीय इति (८।२६१८) चाभिहितः । एवं परिलक्ष्यते, ११४४ खीस्ताब्दस्य प्रारम्भे अलङ्कारः 'राजस्थानीयः' आसीदिति । एतच्चानुमीयते, शिरःशिला-यानारम्भ–कालेऽपि (११४३ खीस्ताब्दस्य मध्यभागे) अलङ्कारस्तदेव राजपदमलङ्कृतवानिति ।

किञ्च जयसिंहस्य प्राथमिक–संग्राम–वर्णनानन्तरं कल्हणेन वर्णि-तानि तस्य तदमात्यानां च धर्म–कर्माणि ११३६ खीस्ताब्द–प्रथमार्धो-त्तर–वर्तिनि काले सम्भूतानि । तदा चालङ्कारो बृहद्–गञ्जाधिप' इत्य-भिहितः (८।२४२३) ।

अतो निश्चीयते, राजस्थानीय–पद–लाभात् (११४३ खी०) पूर्वमेव अलङ्कारो बृहद्–गञ्जाधिपत्वं लेभे इति ।

पुनश्च श्रीकण्ठचरिते मंखेनालङ्कारः सुस्सल–जयसिंहयोः सांधि-विग्रहिक–रूपेण वर्णितः (३।६२, २५।६१) कल्हणेन तु मङ्ख एव जय-सिंहस्य सांधिविग्रहिक इति वर्णितः (राजतर० ८।३३५४)। अतोऽव-गम्यते, मङ्खात् पूर्वमेवालङ्कारः सांधिविग्रहिकपदं लेभे इति, सुस्सलेन सांधि–विग्रहिकत्वेन कृतोऽलङ्कारो जयसिंहकालेऽपि तदेव पदमलञ्च-कारेति च ।

दृष्टमस्माभिरुपरि, अलङ्कारः ११४३ खीस्ताब्दात् प्राक् कदाचित् 'बृहद्–गञ्जाधिप' आसीदिति । कल्हणेनालङ्कारस्य एतत्–पूर्ववर्ति पदं किमपि नोल्लिखितम् । अतोऽनुमीयते, बृहद्–गञ्जाधिप–पद–लाभात्

( ११४३ खीस्ताब्दात् प्राक् ) प्रागेव कदाचिदलङ्कारः सांधिविग्रहिकत्वं लेभे इति ।

एवमस्माभिर्निश्चीयते, मंखेन स्वकाव्येऽलङ्कारस्य सांधिविग्रहिक-रूपेण वर्णनात्, अलङ्कारस्य च ११४३ खीस्ताब्दात् प्राक् सांधि–विग्र-हिक–पद–लाभात् मङ्ख–काव्य–रचना–कालो नून–मेव ११४३ खीस्ताब्द-पूर्ववर्ती स्यादिति ।

अतः मङ्खकाव्यरचनाकालस्योत्तरावधिः ११४२ खीस्ताब्द इति स्थिरीक्रियतेऽस्माभिः ।

## अधिकतर-सम्भाव्य-काल-निर्णयः

काव्यस्यास्य रचनाया अधिकतर-सम्भाव्य-काल-निर्णये स्टेइन्-महोदयाभिमताद् भिन्नमस्माकं मतम् । मंखेनापरादित्यस्योल्लेखात् अपरादित्येन ११८६ खीस्ताब्देऽपि राजत्वकरणाच्च मङ्खकाव्यकालः ११४४ खीस्ताब्द-समीपवर्ती, न तु ११३५ खीस्ताब्द-समीपवर्तीति स्टेइनाभिमतम् ( एतत्-प्रबन्धस्य प्रथमे पृष्ठेऽस्य प्रसङ्गो द्रष्टव्यः ) । तत्तु न समीचीनम् । यतो मङ्खोल्लिखितस्यापरादित्यस्य ( द्रष्टव्यम्, श्रीकंठ० २५।१०८-१११ ) राजत्वकालो नैव ११८६ खीस्ताब्द-व्यापी, तस्य जयसिंह-समसामयिकत्वात्, अद्यावधिज्ञात-तत्ताम्रलिपीनां १११८-११३६ खीस्ताब्दान्तपातित्वाच्च । किञ्च यदपरादित्यशिलालेख-कालः ११८६-११८७ खीस्ताब्दान्तर्वर्तीति ज्ञातः, स हि द्वितीयः, मङ्खोल्लिखितोऽ-परादित्यस्तु प्रथमः ( द्रष्टव्यम्, इण्डियन् कल्चर्, दि जनरल आव दि इण्डियन रिसार्च इन्ष्टिटिउट, कलिकाता, द्वितीयः खण्डः, ४११, ४१३, ४१४, ४१६ पृष्ठेषु ) । अतो द्वितीयापरादित्यकालो मङ्खकाव्यकाल-निर्णये न मानम् । अपि तु वक्ष्यमाण-हेतोः श्रीकंठचरित-रचनाकालः ११४२ खीस्ताब्दापेक्षया ११३६ खीस्ताब्दस्याधिकतर-समीपवर्तीत्यस्माकं निश्चयः ।

( १ ) महामहोपाध्यायेन पी० वी० काणे इत्याचार्य-प्रवरेण लक्ष्मी-धरकृतस्य कृत्यकल्पतरोः रचनाकालः ११००-११३० खीस्ताब्दान्तर्वर्ती तथाचापरार्क-कृत-याज्ञवल्क्य-धर्मशास्त्र-निबन्धस्य रचनाकालः १११०-

११३० खीस्ताब्दान्तर्वर्तीत्युक्तम् ( द्रष्टव्यम् , हिष्ट्री आव धर्मशास्त्र—पी० वी० काणे, १६५३ खी० चतुर्थः खण्डः, भूमिकान्तर्गत दशम-पृष्ठम् ) ।

एष च लक्ष्मीधरः कनौज-राजस्य गोविन्दचन्द्रस्य सांधिविग्रहिक आसीत् ( द्रष्टव्यम् , हिष्ट्री एण्ड कल्चर आव इण्डियन पीपल , साधारण-सम्पादकः—डा॰ रमेशचन्द्र मजुमदार इति, पञ्चमः खण्डः, ३३२ पृष्ठम् ) । उक्तापरार्कश्च प्रथमापरादित्यादभिन्नः ( द्रष्टव्यम , इण्डियन कल्चर, द्वितीयः खण्डः, ४१३-४१४ पृष्ठयोः ) ।

अतो लक्ष्मीधरापरार्क-समसामयिको मङ्खः स्व-सामयिकयोः ग्रन्थ-रचना-कालस्य समकाले एव स्व-काव्यं रचितवान् । तेन च मङ्ख-काव्य-रचना-कालः ११४२ खीस्ताब्दापेक्षया ११३६ खीस्ताब्दस्याधिकतर-समीपवर्त्येव भवेत् ।

( २ ) अपि च ११५६-६० खीस्ताब्दयोर्माणिक्य-चन्द्रेण रचिते काव्य-प्रकाश-सङ्केतेऽलङ्कार-सर्वस्वस्योल्लेखोऽस्ति ( द्रष्टव्यम् , हिष्ट्री आव संस्कृत पोयेटिक्स् , पी० वी० काणे इत्यस्य, २८५ पृष्ठम्) । अलङ्कार-सर्वस्वे पुनः श्रीकण्ठचरितस्य श्लोका उद्धृताः ( दर्शनीयाः, श्रीकण्ठचरितम् , काव्यमाला—३ इत्यस्य २।४६, ५।२३, ६।७० तथा ६।१६, १०।१० इत्येते श्लोकाः काव्यमाला ३५ चिह्निते अलङ्कारसर्वस्वे क्रमेण २५, ११४, १११-११२ तथा ११५ पृष्ठेषु ) । अत उक्त-ग्रन्थ-त्रयस्य-रचनाकालानां मध्ये सर्वाधिक-व्यवधानानुमानेन श्रीकण्ठचरित-रचना-कालः ११४२ खीस्ताब्दापेक्षया ११३६ खीस्ताब्द-समीपवर्तीत्यस्माभिर्मन्यते ।

## सिद्धान्तः

श्रीकण्ठचरितस्य रचना-कालः ११३६-११४२ खीस्ताब्दान्तर्वर्ती तथा ११४२ खीस्ताब्दापेक्षया ११३६ खीस्ताब्दस्याधिकतरसमीपवर्तीति ।



# रसतत्त्वम्

*श्रीबालशास्त्री*

द्रुहिणादिभिराचार्यैर्भरतेन महर्षिणा ।
निरूपितो रसः सोऽत्र सोपपत्ति विचार्यते ॥

इह तावत् रससम्बद्धाः संक्षेपतश्चत्वारः प्रश्नाः समुत्पद्यन्ते—१. रसः किं प्रमाणकः) २. किम्प्रयोजनकः, ३. किंस्वरूपः, ४. कथं चोपलब्धव्यः इति । ते चात्र यथामति विचार्य्यन्ते ।

## १. रसः किंप्रमाणकः

तत्र "मानाधीना मेयसिद्धिः, मानसिद्धिश्च लक्षणात्" इत्यभियुक्तोक्तदिशा रसो येन प्रपित्सितव्यस्तदीये हि स्वरूपे यथार्थज्ञानसाधनत्वात्मके फलतः सर्वसिद्धान्तरीत्या पर्यवसिते, तत्संख्यायां तैर्थिकानां सगोत्रकलहस्यानपेक्षणीयत्वेनोत्थापनानर्हत्वात् प्रकृताचार्यानुमोदितानामेव प्रमाणानामुपगन्तव्यतायां रसप्रस्थानिभिराचार्यैः प्रत्यक्षानुमानागमा एव प्रमाणत्वेनोपयन्त इति वक्तुं युज्यते तथापि प्रमेयविशेषनिरूपणप्रवणतावशंवदेन शास्त्रकारेण परमतमप्रतिषिद्धमनुमतं भवतीति नयमनुरुध्य प्रकृतविपयकसर्वोक्तिव्रातस्यानुसर्त्तव्यताप्रसक्तावपि स्वरनादाभिन्नतानिबन्धनसमानतन्त्रसिद्धान्तन्यायादरेण सङ्गीतशास्त्रोदितत्वप्रयुक्त, रसप्रत्यायनधूर्वहतया अत्यादृतव्यञ्जनायां यदुपज्ञताऽस्ति, तेषां वैयाकरणानां राद्धान्ते महाभाष्यकारादिभिर्व्यवहृतत्वायत्तं चरमोपेयताया पारमार्थिकस्वरूपप्रदर्शनपरायणानां महर्षिशाण्डिल्यादीनां सूत्राक्षरतो वा लब्धं त्रैविध्यमुक्तनिष्ठमेवेति प्रकृते निर्दिष्टा प्रमाणत्रय्येवेहानुमोद्यत इति पक्षः शक्यस्वीकरणः, परेषामत्रैवान्तर्भावात् , एतत्त्रिकेणैव रसः प्रमातव्यः' इति ।

यद्यपि रसस्य प्रकाशाभिन्नतया नापरेण प्रकाश्यताऽपेक्षा, तथापि कथमपेक्षेत्यादिकं निपुणतरमुपरिष्टादुपपादयिष्यते ।

तत्र 'प्रत्यक्षं तावन्नाट्यप्रदर्शिनां सहृदयानामानुभविकमेवेति नेह किमपि विवक्षणीयम् । अनुमानमपि पक्षीकृतात्मनि आत्मनस्तु कामाय सर्वं प्रियमित्यादिभिः श्रुतिभिः प्रमापितेन निरतिशयप्रेमास्पदत्वेन हेतुना खल्वानन्दात्मकत्वसाधकतया स्वभ्युपगममेव, निरतिशयानन्दस्य रसात्मकतया, आत्मनश्च रसाभिन्नतया तदभिन्नाभिन्नस्य तदात्मकताया औत्सर्गिकत्वादित्यादिकमपि स्वरूपविवेचने विवेचनीयमास्ते । आगमस्तु "रसो वै सः" इत्यादिः किलोपक्रमोपसंहारादिभिर्निर्णीततत्परताको नैव तिरोहित इति प्रमाणत्रयसिद्धे रसतत्त्वे न काचिद् विमतिरुदेतुमर्हति ।

## २. रसः किम्प्रयोजनकः

प्रयोजनं चेदमीये निश्चिकीर्षितव्ये अयमेव प्रयोजनात्मा इति सिद्धान्तः । तथा हि प्रयोजनं हि फलम् । तच्च गौणमुख्यभेदेन द्विविधम् । फलान्तरेच्छानधीनेच्छाविषयो मुख्यम् । फलान्तरेच्छाधीनेच्छाविषयश्च गौणम् । एवं च मुख्यत्वं सुखे एव विश्राम्यति इत्यत्र नैव विवादो, विश्वजनीनानुभवसिद्धत्वात् ।

यद्यपि लोके सुखत्वेन व्यवह्रियमाणं न वस्तुतः सुखं, विनाशित्वेन दुःखाधायकत्वात् ।

यदाहुर्महर्षिपतञ्जलिपादाः—परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः (२।१५) इति । अत एव दुःखमिश्रितत्वेन सुखस्याऽपि मधुसम्पृक्तविषवद्धेयत्वात् तदपि दिध्वंसयितव्यमेवेति महर्षिगोतमपादा व्यवातिष्ठिपन्, तथापि वास्तविकं सुखमलभमानाः संसारिणः तदाभासेनैव कृतकृत्यं मन्यमानाः समवलोक्यन्ते ।

वस्तुतः सुखन्तु 'आनन्दं ब्रह्मणो विद्वान्', 'तस्यैवानन्दस्य मात्रामुपजीवन्ति' इत्यादिभिर्भगवतीभिः श्रुतिभिरेवावगमितं, तच्च आत्मस्वरूपघटकतया परिणामादिदुःखकालुष्यासम्पृक्तमित्यात्मस्वरूपावगत्या सुज्ञानमौपनिषदप्रस्थानाध्वनीनैः । अत एवेदं विविच्यमानं रस-

तत्त्वं साहित्यदर्शनपरमजीवातु-रूपात्मस्वरूपमुपजीव्यतया आश्रित्य प्रवृत्तानां चतुर्मुखादि-भरतान्ताचार्याणामार्षप्रमाणोपबृंहितं रसशास्त्रत्वेन व्यपदेश्यं न दर्शनान्तरैर्गतार्थमाशङ्कितव्यम् ।

दर्शनान्तरेषु किल लौकायतिक-सौगतानामात्मनः शाश्वतिकतैव दुर्लभेति निर्दिष्टदूषणं जागरूकमेव । विवसनसमये कथमपि नित्यत्वेऽपि तस्यानन्दता शशविषाणायमानैव । नैयायिक-वैशेषिकाणां मते आत्मनो नित्यत्वेऽपि निरानन्दतैवास्य स्वरूपम्, सानन्दता तु दुःखवत्ताऽऽवृतैवेति नाभिमतसिद्धिः । कापिल-पातञ्जलानामपि तथात्वेन तथात्वमेवेति नाभीष्टपूर्त्तिः । अध्वरमीमांसाविदां नयेषु अपि प्रायेण उक्तचर्य्यैवाशान्तिः । क्वचिन्मुक्तौ नित्यसुखाभिव्यक्त्यभ्युपगमेऽपि दुर्निवारा अर्थान्तरता । मुक्तेः पूर्वं तदीयव्यक्तेरसत्कल्पत्वात् । अनयैव रीत्या आत्मनोऽनानन्दतावादिनामवशिष्टदर्शनानां सिद्धान्तेभ्योऽप्यगतार्थता स्फुटैव ।

औपनिषदसिद्धान्तिनां त्वद्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-द्वैताद्वैत-द्वैतवादिनां पञ्चानामपि प्रस्थानेषु खलु आत्मतत्त्वस्य नित्यतया आनन्दतया च महतः संवादस्य सत्त्वेऽपि न तथाऽऽनुकूल्यं यादृशं स्वाभीष्टसम्पिपादयिषया आचार्या रसशास्त्रमुपनिबिभन्तस्तत्र एनदाविरबीभवन् । एतच्चानुपदमेव स्वरूपनिर्णयेऽभिधास्यते । ततश्च निरतिशयानन्दसाक्षात्कारप्रयोजनत्वेनावधार्य्यतेऽत्रेत्यास्माकीनः समयः ।

## ३. रसः किंस्वरूपः

रसस्वरूपजिज्ञासायां तावद् 'आत्मैव रसः' इति रसदर्शनिनां राद्धान्तः ।

'रसो वै सः', 'आनन्दं ब्रह्मणो विद्वान्', 'आनन्दाद्ध्येवेमानि भूतानि' इति श्रौतवचनानि स्वरूपतटस्थलक्षणाभ्याम् आत्मानमेव लक्षयन्ति । आत्मा चात्र यद्यपि ब्रह्मपरमात्मपर्य्यायो भगवानेवोपक्रमोपसंहारादिभिस्तात्पर्यास्पदतयाऽवजिगमिषितः, तथापि प्रतिबिम्बतया परिच्छिन्नतया, वस्तुतया वा 'यथाग्नेर्विस्फुलिङ्गाः', 'ममैवांशो जीवलोके', 'अंशो नानाव्यपदेशात्' इत्यादिश्रुति-स्मृति-ब्रह्मसूत्रादिभिर्व्यवस्थापितो जीवोपि तत्त्वदृशा सच्चिदानन्दात्मा, परन्तु

सिन्धोर्बिन्दुरिवं तत्स्वभावः कणकल्पः सुतरां तदुपात्तमरणितः सर्वांशे एव तादृशो, नातो जगत्कर्तृत्वाद्यापत्तिः। अर्थम् चैनं तर्कोपष्टव्यानि 'जगद्व्यापारवर्जम्' इत्यादिवचनान्युपोद्बलयन्ति। अत एवायं तदीय-तटस्थशक्त्यात्मकतया शास्त्रेषु व्यवह्रियते। सच्चिदानन्दरूपस्य भगवतः किल तिस्रः शक्तयः शास्त्रप्रमिताः स्वरूपा-तटस्था-बहिरङ्गाख्याः। आसु स्वरूपाख्याया अपि तिस्रो भिदाः, संधिनी-संविद्-ह्लादिनीनामिकाः। तथा च तत्वतो भगवत्स्वरूपसजातीयः, सर्वथा तद्विजातीयबहिरङ्गा-तोपि विलक्षणः सन् जीवः, तटस्थ इति गीयते। एवं चोक्तस्वरूपो जीवोपि रसवाच्यतां नार्हतीति नाशङ्कनीयम्। न खलु रससमुद्रस्य बिन्दू रसान्यो भवितुमर्हति। एतदेवाभिप्रेत्य रसशास्त्राचार्याः प्राकृता-प्राकृतभेदतो द्वैविध्यं रसस्य सङ्गिरमाणास्तथैवोपापीपदन्। मूलं चैतदी-यम् आग्नेयादिषु व्यक्तमेव।

भरतमुनिना तु यान् उपचिकीर्षुणा न्यबन्धि नाट्यशास्त्रम्, ते किलानादिकालतो बम्भ्रम्यमाणप्रपञ्चचक्रचङ्क्रममाणताचणा, अपरि-शीलितचरपरमपुमर्थप्रापकपद्धतयः सुकुमारमतयो द्विविधवासनावासित-हृदयाः काव्यार्थचिन्तनालङ्कर्मीणयोग्यतापरिपचेलिमचातुरीका विनेयाः, तान् एतान् 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इत्यादिस्व-रूपेण गुडजिह्विकान्यायेन चरमगन्तव्यदिगुन्मुखीनीकर्तुकामेन परम-रसास्वादमाधुरीसंपल्लेशोपि यदवधि नानुभवगोचरी कार्यते, तदवधि कथमिवादसीयमर्मस्पृहयालवोऽमी क्रियेरन्निति विचिन्त्य, दुष्करप्रवृत्त्या-स्पदानि निःश्रेयसप्रापणपटूनि श्रवणादीनि साधनान्यव्यापार्यापि निखि-लानर्थनिदानाज्ञानमनुन्मूल्यापि, चिरसञ्चितचरकर्मकलापानपरिप्लु-ष्यापि जनैर्यथा तादृशं वस्त्वास्वादपदवीं नीयेत, यादृशं तत् तानि व्यापार्य, तदुन्मूल्य, तान् परिप्लुष्य सूरिभिस्तथा क्रियते, स प्रकारो दिव्यज्ञानमन्दरेण निगमपयोधीन् प्रमथ्य, नाट्याम्नायपीयूषाभ-वपुराविर-कारि।

सुतरां प्रथमभूमिकारूढानामधिकारिणामुपकारः प्राकृतरसपरिच-येन यथा सुकरो, न तथा अप्राकृतरसज्ञानेन इत्यधिकारानुरूपमुपदेष्टारः श्रद्धेयवचनाः फलेग्रहियत्नाश्च भवन्ति नापरथा। अतो मुनिना प्राकृत-

स्यास्यैव रसस्य प्रबन्धो निबन्धेनान्वबन्धि, नापरस्य, नैतावता स नास्त्येव, नानुमत एव वेत्यवगन्तव्यम्। कथमन्यथा आत्मदर्शनसाधनताभावादस्य शास्त्रस्य दर्शनता कथं चोपक्रमे एव चतुर्वर्गाप्तिप्रयोजकत्वप्रतिश्रुतिरस्य सङ्गच्छेत, कथं च रसतापि जीवस्वरूपघटकानन्दस्य। रसत्वप्रतिपादिका हि भगवती श्रुतिः उपक्रमोपसंहारादिपरिचारकवृन्दसेविता खलु स्वेष्टमाप्तुं प्रभवति।

न च तत्सध्रीचीनश्रुतितात्पर्यविषयाभिन्नत्वाज्जीवस्य नोक्तापत्तिरिति वाच्यम्। तयोरभेदस्य याथातथ्यचिन्तायामिदानीमुदस्यापि सम्प्रतिपन्नभेदकाले अभेदोक्तेरनुपयुक्तत्वात्। प्रदर्शितविधया शास्त्रप्रवृत्त्युपजीव्यविरोधाच्च।

एतेन ज्ञानकाण्डेन रसकाण्डस्य गतार्थतया काण्डान्तरारम्भचर्चा मुधैवेति प्रलपन्तो निरस्ताः। प्रयोजनपार्थक्यं हि प्रस्थानपार्थक्यं प्रयोजयति। तच्च प्रयोजनमैहिकम् आमुष्मिकं वा, उत्कृष्टमपकृष्टं वा अंशतः इत्यन्यदेतत्।

इत्थं चैष रसः प्राकृतालम्बनकतया 'प्राकृत' इति व्यवह्रियते, अप्राकृतालम्बनको हि 'अप्राकृत' इति शास्त्रविदां मर्यादा व्यवहारासङ्करार्थमादरणीयैव। द्वैविध्यं चैतद् आचार्यभरतेनापि बहुशो ध्वनितमप्यनधिकार्यत्वेन नाभिहितम्। तदेव पुनराग्नेयादौ स्पष्टमुक्तम्, नेयता कापि क्षतिः।

यत्तु प्राकृताप्राकृतौ रसौ क्रमेण लौकिकालौकिकौ कथ्येते इति तन्न समीचीनम्, द्वयोरप्यलौकिकत्वात्। न हि जातु लौकिको रसोऽध्यात्मविद्यानां प्रधानत्वेन प्रतिपाद्यो भवितुमर्हति। स हि तृतीयपुमर्थगृह्योऽन्यथा प्रस्थानभेदानुपपत्त्या बाभ्रव्यादिसंहितानामानर्थक्यमापतेदित्यादिर्भूयानुपप्लवः स्यात्।

अलौकिकत्वञ्चैनयोर्लौकिकमर्यादातिशायित्वाद्, दर्शयिष्यते चानुपदमेतत्। प्राकृतत्वं च पादविभूतिविलासविजृम्भितत्वम्, त्रिपाद्वैभवं चाप्राकृतमिति वस्तुस्थितिः। अत एवायं प्राकृतो 'रस' इति कथ्यते, अप्राकृतस्तु 'भाव' इति नाट्यशास्त्रे भरतपरिभाषा। वस्तुतस्तु अप्राकृतो

भक्तिरस उच्यते, रसत्वव्यपदेशजीवातोस्तादृशानन्दात्मकतया उभयत्राप्यविशेषाद् इति ।

## ४. रसः कथं चोपलब्धव्यः

रसोपलब्धिप्रकारस्त्वेषः—'वक्ष्यमाणस्वरूपकैर्विभावानुभावव्यभिचारिभिर्व्यक्तः स्थायी एव रसतां भजते' इति सिद्धान्तस्य सकलरसदर्शिभिराचार्यैरनुमोदितत्वेपि स्थायिस्वरूपे, तद्व्यक्तौ च मतभेदनिबन्धनो मार्गभेदो विद्यत एव । तथा हि:—तत्र आहङ्कारिके चित्ते कारणविशेषोद्बुद्धे सत्वे स्वेतरगुणावभिभूय प्रकाशमाने जातु चिदनुभूतरत्यादिस्थायिसंस्कारोप्युद्बुद्धीभूय प्रतीयमानः, उपचीयमानः, पुष्यमाणः, अभिन्नायमाननेदिष्ठचिच्छक्त्या आत्मीयत्वेन भुज्यमानो रसव्यपदेशभागिति कापिली प्रक्रिया । परन्त्वसौ जडत्व-परप्रकाश्यत्व-प्राकृतत्वादिमत्वाद् भिन्नमेव वस्तु , नास्माकीनो रसः । भौतिके चित्ते हेतुविशेषाद् द्रुतिमति उदितम्रदिमनि मुद्रितो रत्यादिस्थाय्याकारः संस्कारः स्वोद्बोधकमहिमतिरस्कृतावृतिकश्चिद्विशिष्टो रस इत्यौपनिषदैकदेशिनां सरणिः । अत्र पूर्वोक्तदोषासत्वेपि चितोऽङ्गत्वोक्त्या श्रुतिस्वारस्यभङ्गो वर्तत एव । एतद्दोषं परिहर्तुकामैः कैश्चित् स्थाय्यवच्छिन्नभग्नावरणचिदेव रसः इत्यभिहितम् । अस्मिन् पक्षे गौणत्वभानप्रयुक्तास्वारस्यरूपदोषस्य परिहारेऽपि तदव्यवहितोत्तरवाक्यसहितैकवाक्यतास्वारस्यभङ्गरूपदोषस्य विद्यमानत्वेन नास्यापि युक्तिसहत्वम् । तद्वाक्यं च 'रसं ह्येवायं लब्ध्वा आनन्दी भवती'ति । तथा हि :—एतद्वाक्यघटकायंपदार्थकर्तृकलाभकर्मैव भवता रसत्वेन विवक्ष्येत । ततश्च स्पष्ट एव स्वारस्यभङ्गः । भग्नावरणचैतन्यस्यैवायम्पदार्थतया कर्तृकर्मणोरभेदापत्तेः । न च सावरणस्यैवायम्पदार्थत्वेन कर्तृता, अनावरणस्य कर्मतयौपाधिकभेदेन अविरोधान्न स्वारस्यभङ्ग इति वाच्यम् । स्वप्रकाशवादे किलावरणभङ्गमन्तरेणेतरस्यानपेक्षणादावरणभङ्गादेव आनन्दीभवनप्राप्तेः पूर्वांशवैयर्थ्यस्य वज्रलेपायितत्वात् । एतेन 'सावरणोऽयं ह्यनावरणं रसं लब्ध्वा' इत्यादिव्याख्यानं कुर्वन्तः परास्ताः । सावरणो निरावरणः सन् इत्येतावतैव तदभीष्टसिद्धेः ।

तस्मादखिलानि कण्टकितवर्त्मान्युत्सृज्य परिष्कृतघण्टापथेन सञ्च-

रिष्णूनां रसविदामेष खलु सिद्धान्तः—सः = प्रकृतः, स्वरूप-तटस्थ-लक्षणलक्षितो ब्रह्म-परमात्मपर्यायो भगवान् , वै = निश्चयेन रसः = रस-पदार्थः। तमेनं = रसमेव, नापरं, लब्ध्वा, अयम् = स्वल्पानन्दो जीवः, आनन्दी भवति = प्रशस्तानन्दो भवतीति। रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवतीति वाक्ययोरेतयोरेकवाक्यतया इत्थमेव व्याख्याने प्रकृतशास्त्रस्य दर्शनतापि परमपुमर्थप्रापकतया सङ्गच्छते। न च आव-रणभङ्गवैशिष्ट्येपि परमपुमर्थप्रापकतया सङ्गच्छते। न च आवरणभङ्ग-वैशिष्ट्येपि परमपुमर्थसम्पादकत्वाक्षतिरिति वाच्यम्। तथा सति उत्तर-मीमांसयैव गतार्थतायां रसशास्त्रस्यानारम्भणीयत्वापत्तेः। न चेष्टापत्तिः। अन्यैरपि भवदभिमतोत्तरमीमांसाशास्त्रानारम्भणे तुल्ययुक्त्या इष्टापत्तेः सुवचत्वात्। न चोत्तरमीमांसायामपि प्रस्थानान्तरे कथङ्कारं नाम रस-शास्त्रारम्भणीयतानिर्वाहः इति शङ्क्यम्। गुडजिह्विकान्यायेन, तथा च उपेयप्रतिपत्त्यर्था' इत्यादिपूर्वोक्तयुक्तेः सार्थक्यसम्भवात्। न चास्मा-भिरपि सार्थक्यमेवं सुसम्पादमिति साम्प्रतम्। अपारमार्थिकतापिशाची-भयादेवमुपगन्तुं भवतः असामर्थ्यात्। प्रकृतशास्त्रकृदभिमतरसस्य भवन्मते चरमोपेयत्वाभावाच्च।

तथा च परमर्षिभरताचार्यस्य सूत्रम् :—'विभावानुभावव्यभिचारि-संयोगाद् रसनिष्पत्तिः' इति। अत्र विभावयन्ति = उद्बोधयन्ति प्रसुप्त-स्थायिनमिति विभावाः, आलम्बनानि, उद्दीपनानि च। एवं च विषय-तासम्बन्धेन स्थायिविशिष्टमालम्बनम् , स्वोद्बोधजनकतासम्बन्धेन स्था-यिविशिष्टमुद्दीपनम्। स्थायिपोषकत्वे सति आलम्बनचेष्टारूपोऽनुभावः। आलम्बनावच्छेदेनाविर्भूष्णुतिरोभूष्णुत्वे सति स्थायिपोषकभावो व्यभि-चारीति बोध्यम्। सूत्रे पञ्चमी हेत्वर्था। हेतुत्वं च कारकत्व—ज्ञापकत्वा-न्यतरस्याम्। ज्ञापकत्वं च तद्विषयकज्ञानजनकज्ञानविषयत्वम्। ज्ञानं चात्र त्रिविधम् ; प्रत्यक्षम् , अनुमितिः, शाब्दधीश्चेति। प्रत्यक्षं तु द्विविधम् यथार्थमयथार्थं चेति। अयथार्थमपि द्विधा, दोषजन्यं भ्रमत्वेन प्रसिद्ध-मेकम् , द्वितीयन्तु इच्छाजन्यमारोपत्वेन ख्यातम्।

एवं च दमयन्त्यादिदर्शनजनितनलादिसमवेतरत्याद्युद्बोधस्य तत्कार्य-कटाक्षादिकस्य सहचरितोत्कण्ठादीनां चानुकार्यनलादिनैव सम्बन्धात्त-

त्रैव रस उत्पन्नो, नटे तु तत्तदनुकृत्या सादृश्यमूलकारोप इति भट्टलोल्लटादयोऽवादिषुः ।

केचन नाट्यादिषु प्रकटविभावादिषु व्यञ्जनया नलादौ दमयन्त्यादिरतौ ज्ञातायां भावनादोषेण कल्पितनलत्वावच्छिन्ने स्वस्मिन् समुत्पन्नोऽनिर्वचनीयो दमयन्त्यादिविषयकरत्यादिरेव रस इति समगिरषत ।

अन्ये तु व्यञ्जनाऽनिर्वचनख्यात्यनभ्युपगमाद् भावनादोषेणात्मनि नलाद्यभेदग्राही दमयन्त्यादिरतिमदभेदबोधो विषयासत्वेऽपि मानसो भ्रम एव रस इत्यवोचन् ।

परे तु श्रीशङ्कुकानुयायिनः—नलत्वेन गृहीते नटात्मके पक्षे अकृत्रिमत्वेन गृहीतैर्विभावादिहेतुभिर्नलादिगतरत्यादिरनुमीयमानो रस इत्युपागमन् ।

अपरे च भट्टनायकानुवर्त्तिनः—नाट्यादिना व्यक्तिविशेषवृत्तित्वनिरूपितत्वाभ्यां जनितेऽपि स्थायिज्ञाने भावनया तयोः प्रमोषाद् रतित्वादिनैव प्रतीतरत्यादेः स्ववृत्तिरत्यादिसाजात्येनानुभूतचररत्यादिसंस्कारोद्बोधे ज्ञानस्य स्वप्रकाशत्वेन सत्वोद्रेकेण आनन्दरूपो रसः शब्दस्य भोगाख्य—तार्तीयीकव्यापारेण साक्षात्क्रियत इत्यभ्युपागुः ।

इत्थं स्वस्वशेमुषीविकाससाहायकमवलम्ब्य, पारमर्षसूत्रघटकसंयोगपञ्चमीनिष्पत्तित्रिकस्य विविधार्थानुररीकुर्वन्तोऽभियुक्ताः स्वस्वमतानुरूपेण रसतत्वं प्रहेलिकान्यायेन प्राचीकशन् ।

परन्तु मुनिसम्मतरहस्यानाकलनाद् रसशास्त्रसिद्धान्तमार्मिकाणामश्रद्धेयान्येवाखिलान्येवोक्तमतानि, तदनुसारीणीतराणि चानिर्दिष्टान्येकदेशिमतानि अपि तथैव । तथा च अश्रद्धाबीजानि :—

तत्र प्रथमे तावद् विप्रकृष्टत्वात्, लौकिकत्वात्, काल्पनिकारोपविषयत्वाद् अर्थान्तरता । द्वितीयस्मिन् विमतानिर्वचनीयत्वाद् भ्रमविषयत्वात् तथात्वम् । तृतीयेऽपि भ्रमास्पदत्वमेव तादृशम् । तुरीयेऽपि भेदग्रहणेन बाधात् कथमपि भेदाग्रहेऽपि नलादौ भैम्यादिरतिग्रहस्य सामाजिकप्रवृत्त्यनौपयिकत्वात्, श्रव्यस्थले पक्षताज्ञानविरहाच्च अभि-

मतरसपरिपन्थिता दुर्निवारा। पञ्चमे तु प्रमाणाप्रतिपन्नस्य शब्दनिष्ठ-क्रमिकव्यापारत्रयाभ्युपगमस्यैवारुन्तुदतेति।

श्रीमदभिनवगुप्ताचार्यास्तु—विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनाद् रसस्य = स्थाय्युपहितचिदानन्दात्मनः, निष्पत्तिः = स्वरूप-प्रकाश इति सूत्रार्थं सिद्धान्तयन्तिस्म। फलबलकल्पनेन विभावादीनां साधारणीकरणात्मना व्यापारेण सर्वथा हि विशेषांशप्रमोषात् सामाजिका-त्मनि स्थायी व्यज्यमानो रसः। दशमस्त्वमसि इत्यादिरीतितः शब्दादप्यपरोक्षज्ञानाभ्युपगमान्न पारोक्ष्यप्रयुक्तमपि वैरस्यम्। उक्ता-लौकिकव्यापारमहिम्ना लौकिककार्यकारणभावप्रसरावरोधाद् दुःखजनक-तया कलप्तेभ्योऽपि सुखोत्पत्तेः सुरतक्षणवर्त्त्यधरदशनादाविवानुभविक-त्वाद् अन्तःकरणावृत्तित्वाच्चालौकिकत्वं निष्प्रत्यूहमेव।

## रसतत्त्वविमर्शः

कार्यत्वज्ञाप्यत्वाभावाद् भूतवर्तमानभविष्यत्ववैधुर्यात्, सविकल्पक-निर्विकल्पकवेद्यत्वविरहाच्च तादृशत्वं सुवचम्। नित्यत्वानन्दत्वस्वप्रका-शकत्वादिकं च रसस्य आत्मत्वादेव निर्विवादमेव। उत्पाद-विनाश-कादाचित्कत्वादिव्यवहारास्तु विशेषणचर्वणाविषयका एव इत्येव निष्कर्षं तत्र भवन्तो मम्मटभट्टप्रभृतयः समाद्रियन्ते स्म, अन्येऽपि रसशास्त्र-निबन्धारः प्रायेण एनामेव दिशमनुसस्रुः।

इयांस्तु विशेषः—सर्वमप्येतद्दिग्दर्शनविधया विनेयोन्मुखीकरणाय श्रीभरताचार्येण प्राकृतरसनिरूपणव्याजेन प्रदर्शितं, वास्तविकतया उद्दे-श्यभूतोऽप्राकृतरसस्तु श्रीभगवदालम्बनक एव, तस्यैवाखिलशेषित्वेन चरमप्राप्यतया परमपुमर्थफलत्वेन चोपनिषत्स्मृतिपुराणादिषु व्यवस्था-पिततया निखिलशास्त्रदर्शनानां यथायथं साक्षात्परम्परासाधारण्येन तन्निरूपणौपयिकान् भूयः प्रकारानाश्रित्य तत्रैव पर्यवसानस्याखिलतत्त्व-विवेचकसार्थसम्मतत्वाद्, एवं च निसर्गतोऽलौकिके तस्मिन् यादृग-लौकिकताविधित्सया नाट्यादिषु लोकाधिकानन्दानुभवानुगुणसाधारणी-करणोररीकरणमुपेयते, तादृशत्वस्य औत्सर्गिकतया आनन्दव्यक्तिप्रयो-जकत्वांशे फलानुपधानेऽपि परत्वोपयोगित्वेनः, नाप्रयोजन अत एव

प्रकारभेदोन्नयनाय आचार्य्यैरेष भक्तिरसनाम्ना व्यपदिश्यते। व्यतानि चायम् इतोऽपि बृंहिष्ठविधाभिः श्रीकृष्णद्वैपायनादिभिराचार्य्यैरिति न तिरोहितं विदुषाम्।

रसमात्रस्य चास्य गौणमुख्यादिभेदाः, तत्प्रभेदाः, विभावादीनां चातिभूमानं प्राप्ताविभेदप्रकाराः विद्वद्भिः प्रबन्धेन बहुषु निबन्धेषु निरूपितचरा इति सर्वं सुस्थमित्योम्॥



# सांख्यदर्शनस्य प्रयोजनम्

*ठाकुरदत्तजोशी*

आत्मतत्त्वस्य परमात्मतत्त्वस्य चान्वेषणे व्यापृतैर्महर्षिभिरुपदिष्टानि वचनानि अग्रे गत्वा षड्दर्शननामभिरिह प्रथितानि। तन्मध्ये सांख्यमपि एकं दर्शनं विद्यते। तेनापि दुःखं सकारणं मत्वा तस्य दुःखस्य विनिवृत्तये स्वमतं प्रकटीकृतम्। सांख्येन स्वविषये प्रत्यपादि—

'ज्ञानेन चापवर्गः' इति ( सां० का० ४४ स ),

'व्यक्ताव्यक्तज्ञविज्ञानात्' ( सां० का० २ ) इति च।

यद्यपि अन्यैरपि अस्मिन् विषये भणितं किन्तु तेषामुपाया नैव पूर्णतो दोषरहिताः। सांख्यशास्त्रे प्रतिपादितोपायेन जीवः सर्वथा दुःखाद् विमुच्यते। उक्तं च—

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसन्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

'विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता नेतरात्'।

( सांख्य-सूत्र० ३।८४ )

कानि तानि पञ्चविंशतितत्त्वानीति शङ्कायां कारिकात्रोच्यते—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥

( सां० का० ३ )

एवं येषां पञ्चविंशतितत्त्वानां सांख्यशास्त्रे गणना विहिता तेषां त्रिधा विभागो विधीयते। 'व्यक्तम्, अव्यक्तं, ज्ञ' इति च। सांख्याचार्यैरिदमनुभूतं यत् पञ्चविंशतितत्त्वानां स्वरूपस्य अज्ञानमेव दुःखस्य एकमात्रं कारणम्। उक्तं च—

'विपर्ययादिष्यते बन्धः' ( सां० का० ४४ ) ।

तस्य हेतुरविद्या, (योगसूत्र-२।२४) अतः एतत्तु निश्चितरूपेण कथयितुं शक्यते यदि व्यक्ताव्यक्तज्ञरूपाणाम् अर्थात् पञ्चविंशतितत्त्वानां वास्तविकं ज्ञानमभविष्यत्तदा दुःखमपि नाभविष्यत्। अतो दुःखस्य न कापि वास्तविकी स्थितिर्विद्यते। तत्त्वानां सम्यग्ज्ञानेन दुःखाद् विमुक्तिः सुनिश्चिता, अतः सांख्ये प्रकृतिपुरुषान्यताख्यातिः प्रतिपादिता प्रमुखरूपेण ।

सांख्यानुसारेण प्रकृतिपुरुषौ द्वावप्यनादी विद्येते। शेषाणि त्रयोविंशतितत्त्वानि प्रकृतेरेव रूपाणि विद्यन्ते ।

तत्र—

सांख्यशास्त्रं द्वैतमतस्य प्रतिपादनं कुरुते। एतन्मतानुसारेण प्रकृतिः पुरुषश्च मूलतत्त्वे स्तः, द्वयोः संयोगेन समस्तायाः सृष्टेरभिव्यक्तिर्भवति। बौद्ध-जैन-नैयायिक-मीमांसकादीनां मतेनानेकनित्यपरमाणूनां संयोगेन सृष्टिर्भवति। वेदान्तमते तु एकमात्र ब्रह्मविवर्तेन एव सृष्टिर्जायते, किन्तु सांख्यानुसारेण एकया नित्यप्रकृत्या समस्तसंसारस्य अभिव्यक्तिर्भवति। इदं दृश्यमानं जगदेकस्य अचेतनस्य परिणामो विद्यते। पुरुषश्चैतन्यस्वरूपं भजन्नपि विकाररहितस्तटस्थो निर्लिप्तश्च विद्यते पुष्करपलाशवत् इति मान्यता तु सांख्ये निर्विवादा।

एवं प्रकारेण स्पष्टं प्रतिभाति यत्पुरुषश्चैतन्यस्वरूपश्चिद्रूपो वा, प्रकृतिश्च जडा, चेतना च विद्यते। एतौ द्वावपि भिन्नौ स्तः, किन्तु अज्ञानस्य कारणाद् द्वयोः स्वरूपयोः सुस्पष्टम् अवभासनं नैव जायते। एवं तयोः पृथक् पृथग्रूपेण ज्ञानस्याभावेन बन्धनम्। यथा—

> तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
> गुणकर्त्तृत्वे च तथा कर्तेव भवत्युदासीनः॥ ( सां०का० २० )

'उपरागात्कर्तृत्वं चित्सान्निध्यात्' ( सांख्य सूत्र १।१६४ )।

एवं तटस्थश्चिद्रूपश्च पुरुषो दुःखसुखादेरनुभवं करोति तथा कर्तृत्वादिधर्मेण युक्तश्च प्रतीयते तथा लोकेऽपि पुत्रस्य व्याधिजन्यपीडायां पिता

दुःखमनुभवति। तथैव 'पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादि वाक्य-श्रवणानन्तरमेव अपत्यस्य दुःखादीनि अविवेकेन आत्मनः परिकल्प्य मानवः सुखदुःखादिकमनुभवति। तथैव अज्ञानमयत्वात् पुरुषः प्रकृते-र्दुःखानि आत्मनः परिकल्पयति। एतमेवाधिकृत्य गीतायामप्युक्तम्—

प्रकृतेः क्रियमाणानि गुणकर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ ( गीता ३।२७ )

'मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदा' इत्यादिकं सर्वमपि एतत् प्रकृतेर्विलासो विद्यते।

उच्यते च—

सत्वरजस्तमसां साम्यावस्था एव प्रकृतिपदवाच्या भवति। विषयेऽस्मिन् न कस्यापि काचित्प्रतिपत्तिः। अनया एकया प्रकृत्या महत्त्वाहङ्कारेन्द्रियतन्मात्रस्थूलमहाभूतादिरूपेण समग्रस्य जगतोऽभिव्यक्तिर्भवति। सत्त्वरजस्तमांसि तु अस्यास्त्रिगुणात्मिकायाः प्रकृतेः स्वरूपाणि विद्यन्ते, न तु धर्माः।

एतेषां गुणानां संज्ञा प्रधानपदवाच्या भवति। अतः प्रकृतिपुरुषयोः स्वरूपज्ञानमेव दुःखनिवृत्तौ कारणं भवितुमर्हति। अस्य सम्यग्विश्लेषणम् अस्मिन् सांख्यदर्शने प्रतिपादितमस्ति। अतो दुःखनिवृत्तये अस्य सांख्य-दर्शनस्योपादेयता प्रतिपादितास्ति, अतो दुःखनिवृत्तये अस्य शास्त्रस्य उपादेयता स्पष्टमेव प्रतिभाति। शास्त्रेऽस्मिन् येषां तत्त्वानां पूर्णरूपेण विवेचनं विहितमस्ति, तेषामभ्यासे न कश्चनापि विप्रतिपत्तयः समायान्ति। यतोऽभ्यासं विना पार्थक्यज्ञानमशक्यम्, इति विषये न विसंवादो विदुषां पार्थक्यज्ञानं विना कैवल्यम् अर्थात् दुःखात्यन्त-निवृत्तिरसम्भवा, अतस्तत्त्वज्ञानाय सांख्यप्रतिपादिततत्त्वानामभ्यास एव वरम्।

एवं दुःखनिवृत्तये तत्त्वज्ञानं परमावश्यकम्, तथा तानि तत्त्वानि पञ्चविंशतिसंख्यात्मकानि विद्यन्ते, तेषां ज्ञानाय सांख्यशास्त्रस्य ज्ञानं परमावश्यकम्। येन मानवो दुःखाद् विमुच्यते। इदमेव सांख्यशास्त्रस्य प्रयोजनम्।

सम्प्रति मनस्येका शङ्का समुत्पद्यते ? दुःखानि त्रीणि विद्यन्ते ।

१. आध्यात्मिकम् ।
२. आधिभौतिकम् ।
३. आधिदैविकञ्चेतिरूपेण । तत्र

**१. आध्यात्मिकं दुःखम्—**

आत्मनि देहे मनसि च जायमानं दुःखमाध्यात्मिकं शारीरं मानसं च अर्थात् आध्यात्मिकं दुःखं शारीरं मानसं च वर्तते । उभे अपि दुःखे आन्तरिकेणोपायेन च दूरीकर्तुं शक्येते । व्यर्थं किमर्थं सांख्ये प्रयतनीयम् । एवमेव

**२. आधिभौतिकं दुःखम्—**

मनुष्य–सरीसृप–पशु–स्थावरनिमित्तकं दुःखमाधिभौतिकमुच्यते ।

**३. आधिदैविकं दुःखम्—**

राक्षसग्रहादिभ्यो जायमानानि दुःखानि आधिदैविकानि दुःखानि प्रोच्यन्ते । एतानि दुःखानि लौकिकोपायैरपि निवारयितुं शक्यानि । तर्हि शास्त्रसदृशस्य गहनविषयस्य अध्ययनाय जिज्ञासा किमर्थं कार्या ? लौकिकाः सरलाः सुलभाश्चोपायाः स्वीकर्तव्याः यतः प्रायेण समेषां मानवानां प्रवृत्तिः सुलभेषु उपायेषु जायते । अत्र विषये न विसंवादो विदुषाम् । यथा चोक्तम्—

अक्के चेन्मधुविन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ इति ।

वास्तविकरूपेण नैवेदृशम् ।

यद्यपि लौकिकैरुपायैर्दुःखस्य निवृत्तिः सम्भाव्या किन्तु यादृशी दुःखस्य निवृत्तिरपेक्षिता वर्तते तादृशी निवृत्तेराशा एभिर्लौकिकैरुपायैः स्वप्नेऽपि कर्तुं नैव शक्या । अत्र कः हेतुरिति चेत् हेतुस्तत्र 'एकान्तात्यन्ताभाव' नामकौ दोषौ चात्र विद्येते । सूत्रकारेणापि अनयोर्दोषयोर्विषयमधिकृत्य लिखितम्—

न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात् । ( सां० सू० १।२ )

अर्थात् एतादृशः न कोऽपि नियतेर्नियमो विद्यते यत् कृतेऽप्युपाये दुःखानां निवृत्तिरवश्यमेव भवत्येव, यथा वातपित्तकफादिभिर्जायमानस्य ज्वरस्योपशमनाय वैद्यः समाहूयते, किन्तु कृतेऽप्युपचारे रोगस्य निवृत्तिर्नैव जायते। अतः नैव कोऽपि एतादृशः सार्वत्रिको नियमः यत् कृतेऽप्युपचारे रोगस्य निवृत्तिर्भविष्यत्येव निश्चितरूपेण। अतः कृतेऽप्युपाये रुग्णो नैव रोगमुक्तो भवति। अतोऽयं दोषः 'एकान्ताभावः'। कौमुदीकारेणाऽपि कथितं—"एकान्तो दुःखनिवृत्तेरवश्यम्भावः' (सां० का० १) इति। तथा यत्र दुःखानिवृत्तेर्नास्त्यत्यन्ताभावः स एव एकान्ताभावो भविष्यति।

द्वितीयः प्रबलतमो दोषः अत्यन्ताभावनामकश्चात्र विद्यते। यश्चैवं प्रकारेण प्रतिपाद्यते। ननु स्वीकुर्मो वयं यदौषधादिना भवेन्नाम रोगस्य निवृत्तिः किन्तु तस्य रोगस्य जीवनपर्यन्तं पुनरागमनं नैव भविष्यति। नात्र कोऽपि शाश्वतिको नियमो यद् यदि कोऽपि व्याधिः सम्प्रति औषधादिना पूर्णरूपेणोपशामितो भवति, किन्तु कालान्तरे स एव व्याधिः पुनः प्रकटितो भवति। एवं प्रकारेण पौनःपुन्येन जायमानेन दुःखेन ज्ञायते लौकिकोपायेषु 'अत्यन्ताभाव-' नामकोऽपि दोषो विद्यते।

किन्त्वस्य तात्पर्यन्तु नैवेदं यल्लौकिकोपायानां सदोषत्वात् कुत्रापि निरर्थकत्वाच्च तान् प्रति न कस्यापि प्रवृत्तिर्मा भवतु। भोजनात् क्षणिकक्षुधा निवृत्तेः सदृशं क्षणिकसुखस्य प्राप्तये जनानां लौकिके उपायेऽपि प्रवृत्तिरासीत् अस्त्येव च, भवन्तु नाम क्षणिकसुखान्येतानि साधारणजनानां कृते। किन्तु विशिष्टा नरपुङ्गवा एनं क्षणिकं पुरुषार्थं इति अमत्वा तस्मिन् प्रवर्तमानाऽपि न तं बहुमन्यन्ते, अपि तु देशकालाभ्यां क्षणिकं स्वीकुर्वन्तो त्याज्यमेवावगच्छन्ति।

एनमेव विषयमधिकृत्य योगसूत्रे कथितम्—

"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"

(योगसूत्र २।१५)

यथा च गीतायामप्युक्तम्—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ (गीता २।६९)

'विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः' ( गीता २।७२ )।

अतः सुनिश्चितमेतत् यल्लौकिका उपायाः सरला एवं सुलभाश्च भवन्तु नाम, किन्तु दुःखस्य ऐकान्तिकत्वेन वास्तविकरूपेण एवं आत्यन्तिकरूपेण सार्वकालिकरूपेण विनाशाय चोपशमनाय च नैव समर्थाः, अतः शास्त्रविषयिकी जिज्ञासा सार्थका, नैव अपार्था।

एवं निर्णीतेऽपि एकान्या शङ्का पुनर्जायते। यदि लौकिकैरुपायैस्त्रिविधदुःखस्य अत्यन्तनिवृत्तिर्न संभाव्येत नाम, किन्तु वैदिकैरानुश्रविकैः यागादिभिरुपायैरवश्यमेव दुःखस्यात्यन्तनिवृत्तिर्भवितुमर्हति, प्रायः यत्र तत्र प्रमाणान्युपलभ्यन्ते। 'स्वर्गकामो ज्योतिष्टोमेन यजेत, वैदिकसंस्कृतेः प्राच्यकाले स्वर्गकामा जना यज्ञैः स्वाभीप्सितं स्वर्गादिकं प्राप्नुवन्ति स्म, एवं स्वर्गकामनया पुरा ऋषिभिर्यज्ञादयो विहिताः। किं नाम स्वर्गः ? इत्याकाङ्क्षायां स्वर्गस्यापि स्वरूपं यथा—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्॥

ऐकान्तिकसुखस्य नाम स्वर्गो विद्यते, यत्र दुःखस्यांशोऽपि नैव विद्यते, तत्सुखमेव स्वर्गपदेनोच्यते, सोमयागेन अस्य प्राप्तिर्भवति। कथितं च—

'अपाम सोमम् अमृता अभूम'। ( ऋग्वेद ८।४८।३ )

एवं यज्ञादिभिरानुश्रविकैरुपायैर्दुःखस्य निवृत्तिर्भवति, अतो दुःखस्य सार्वत्रिकं विमुक्तये वैदिककार्यजिज्ञासा सुतरां कार्या। वैदिकेषु उपायेषु

न कापि कठिनता विद्यते । कार्येऽस्मिन् संवत्सरद्वयं त्रयं वा पर्याप्तम् । तच्च शास्त्रोपायापेक्षया वरम् । अतः सांख्यशास्त्रविषयिकी जिज्ञासा निरर्थका । यतः वैदिकैरुपायैर्दुःखात्यन्तनिवृत्तिर्भविष्यति । इति चेन्न ।

यतो वैदिका उपाया अपि नैव दोषमुक्तास्तत्रापि अविशुद्धित्वं विनाशित्वम् अतिशयित्वं चेति त्रयो दोषा विद्यन्ते । अर्थात् दुःखनिवृत्तये क्रियमाणेषु यागेषु प्रधानफलेन सह पशुघातादिजन्यभवान्तरमनिष्टमपि फलं भविष्यति । प्रायश्चित्तेन तस्य हिंसारूपपापस्य निराकरणाभावात् तद् यागादिजन्यं फलमेकान्ततः नैव शुद्धम् । अतः आंशिकरूपेण अविशुद्धिदोषयुक्तं तद्यागकर्म । यस्य फलं नैव सुतरां स्वर्गेऽपि दुःखात्यन्तनिवृत्तिकारकम् ।

द्वितीयस्तु दोषः क्षयित्वं वर्तते—

यद्यपि यज्ञादिसाधनैः स्वर्गप्राप्तिः सुनिश्चिता—,
अपाम सोममृता अभूम अगमन्ज्योतिरविदाम देवान् ।
किन्नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतमर्त्यस्य ॥
( ऋग्वेदे ८।४८।३ )

इत्यादि प्रमाणानि दृष्टिपथे समायान्ति । किन्त्वपरतस्तज्जन्यफलस्य क्षीणतायाः प्रमाणान्यपि सन्ति । यज्ञफलानुसारेण मनुष्यः स्वर्गफलं भुक्त्वा क्षीणे पुण्ये कर्मफले कर्मभूम्यामेव समायाति । उक्तं च गीतायाम्—

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
( गीता० ९।२१ )

अथ अतिशयितनामको दोषः—

अतिशयित्वं नाम तृतीयो दोषोऽपि दूरी कर्तुं नैव शक्यते । यतः कर्मफलानुसारेण जन्मान्तरे लोकान्तरे वा फलप्राप्तेर्नियमः प्रमाणं वा सर्वत्र विद्यते ।

उक्तं च—

> बहूनिन्द्रसहस्राणि देवानां च युगे युगे।
> कालेन समतीतानि कालो हि दुरतिक्रमः॥ ( गीता ४।५ )

यथा उत्तमकर्मणोऽपेक्षया उत्तमोत्तमकर्मणः फलं नूनम् आधिक्यरूपेण भवति। यथा राजसूययागेन राजा भवति वाजपेययागेन स्वाराज्यस्य प्राप्तिर्भवति। अतः राजसूययागापेक्षया वाजपेययागस्य फलम् अधिकं भवति। यथा लोकेऽपि धनवान् मनुष्यः स्वापेक्षया अधिकधनवन्तं पुरुषं वीक्ष्य दुःखीभवति तथैव यागादिभिरर्जितेऽपि स्वर्गे दुःखाभावो नैव दृश्यते। अर्थात् तत्रापि स्वर्गे अर्जितानां कर्मणामनुसारेण फलेऽपि न्यूनाधिकभावो भवत्येव। अतः स्वर्गोऽपि अतिशयित्वदोषेण नैव मुक्तो विद्यते। ईर्ष्यादयो दुःखस्य समुत्पादकास्ते तु स्वर्गेऽपि विद्यन्त एव।

अनेन स्पष्टं प्रतीयते यद् यज्ञादिविधानमपि नैव सर्वथा दुःखनिवृत्तेरुपायः। अतः शास्त्रवर्णितेषु उपायेषु जिज्ञासा सुतरां समीचीना भवति। सा जिज्ञासाऽपि एतादृशेषु शास्त्रेषु लौकिकप्राणिनां दुःखनिवृत्तये स्वानुरूपं कमप्युपायमन्वेष्टुं प्रेरयति, सैव तत्त्वस्य निरूपणं च करोति। एतादृशं शास्त्रं सांख्यशास्त्रमेव विद्यते, यतस्तस्मिन् लौकिकतत्त्वानां निरूपणं विधाय सरलया रीत्या तत्त्वज्ञानस्य साधनं निरूपितमस्ति। सांख्यानुसारेण प्रकृतिपुरुषयोरभेदप्रतीतिरेव दुःखस्य मूलकारणमस्ति। येन विना पुरुषः कैवल्यं नैवाप्नोति, तथा कैवल्यस्य केवलः प्राप्त्युपायस्तु 'प्रकृतिपुरुषान्यताख्यातिः'। यदि प्रकृतेस्तथा प्रकृतिपरिणतानां तत्त्वानां वा बोधः समष्टिरूपेण व्यक्तपदेन भवति;, एवं चास्य पुरुषस्य इत्यस्य पृथक्-पृथक् ज्ञानं भवेत् अर्थात् प्रकृतिपुरुषयोर्भेदज्ञानं भवेच्चेत् दुःखत्रयस्य आत्यन्तिका निवृत्तिर्भविष्यति।

अतएव सांख्यकारिकायाम् ईश्वरकृष्णेन निगदितम्—

> 'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
> तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥ (सां० का० २)

पूर्वोक्तपञ्चविंशतितत्त्वानां पारिभाषिकशब्देन व्यक्ताव्यक्तज्ञ इति त्रिपदेन निरूपणं सांख्याचार्यैर्विहितम् । व्यक्तेन कार्यस्य अव्यक्तेन कारणस्य ज्ञ इत्यनेन चैतन्यस्वरूपपुरुषस्य अवबोधो जायते ।

एवं प्रकारेण त्रयाणां पदानां पृथक्पृथग्जायमानेन ज्ञानेन तेषां कार्यस्यापि ज्ञानाद् दुःखनामकं न किमपि अवशिष्यते वस्तुजातम् । यतः पुरुषः स्वरूपज्ञानं कृत्वा बन्धनादिजन्य-दुःखानां कथमप्यनुभवं नैव करिष्यति । वास्तविकरूपेण सुखदुःखादीनां प्रतीतिः त्रिगुणात्मिकायाः प्रकृतेः साहचर्येण जायते । कथितञ्च—

तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥

( सां० का० ६२ )

तत्त्वज्ञानानन्तरं कैवल्यप्राप्तिर्भविष्यत्येव । यथा निरूपितम्—

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति पुरुषः ॥

( सां० का० ६८ )

एवं पूर्वोक्तप्रकारेण लौकिकोपायेषु आनुश्रविकेषु च ऐकान्तिकाभावस्तथा आत्यन्तिकाभावश्च दोषद्वयं विद्यते । उपायानां सदोषत्वात् कृतेऽप्युपचारे नैव दुःखाद्विमुक्तिः । अतः परमात्मतत्त्वस्य प्राप्तये स्थायिरूपेण च दुःखस्य निवारणाय सांख्यशास्त्रे जिज्ञासा सार्थका नैवापार्था यतः सांख्यप्रतिपादितोपायेनैव जीवनं दुःखात्प्रमुच्यते । अतएव कथितमीश्वरकृष्णेन कारिकायाम्—

दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताऽव्यक्तज्ञविज्ञानात् ॥

( सां० का० २ )

अपि च—

विवेकान्निशेषदुःखनिवृत्तौ कृतकृत्यता नेतरात् ॥

( सां० सू० ३।८४ )

कैवल्यमात्यन्तिकदुःखत्रयप्रशमलक्षणम् ।

( सांख्यतत्त्वकौमुदी १७ )

कैवल्यं दुःखत्रयविगमम्—( सांख्यतत्त्वकौमुदी ६८ )

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ।

( सां० सू० १।१ )

आत्यन्तिको दुःखत्रयाभावः कैवल्यम् । ( सा० त० कौ० १६ )

दुःखनिवृत्तिरेव कैवल्यमत्र । अतः सा निवृत्तिरेव साध्या । अस्याः सिद्ध्यर्थं लौकिकोपाया आनुश्रविकाश्च न सर्वथोपयोगिनः । सांख्यप्रतिपादितेन प्रकृतिपुरुषविवेकेनैव सम्यग्रूपेण साध्यस्य सिद्धिर्भवति । अतः सांख्यदर्शने मुमुक्षूणां जिज्ञासा स्वाभाविकी एव ।

इदमेव सांख्यदर्शनस्य प्रयोजनं तथा मानवजीवनस्यापि ।



# शुद्धाद्वैतवेदान्ते ज्ञानविमर्शः प्रमाणमीमांसा च[1]

डा० राधारानी सुखवाल[2]

अस्मिन् निबन्धे शुद्धाद्वैतवेदान्तमनुसृत्य ज्ञानविमर्शः प्रमाणमीमांसा च प्रस्तूयेते। निबन्धोऽयं मया द्वयोर्भागयोर्विभक्तः। प्रथमे भागे ज्ञानविमर्शः करिष्यते, द्वितीयस्मिन् भागे च प्रमाणमीमांसा। शुद्धाद्वैतवेदान्तमतेन ज्ञानस्य प्रमाणस्य चामूलचूलमालोचनं नाद्यावधि पूर्णविस्तरेण केनापि कृतमिति कृत्वा, ज्ञानप्रमाणयोश्च परस्परसापेक्षत्वात् द्वयोरपि सहैव विवेचनं नितरामावश्यकमिति कृत्वा ज्ञानविमर्शः प्रमाणमीमांसा चेति द्वयं विदुषां परीक्षणार्थमुपस्थापयामि।

## १. ज्ञानविमर्शः

तत्रादौ भावकरणव्युत्पत्तिमधिकृत्य प्रमाणशब्दस्य द्विधा व्युत्पत्तिर्विचार्यते। (१) 'प्रमीयते इति प्रमाणम्', इति भावव्युत्पत्त्या, आहोस्वित् रूढस्य प्रमाणशब्दस्याबाधितं ज्ञानमेवार्थः पर्यवस्यति।[3] वस्तुतः अबाधितं ज्ञानमेव ज्ञेयमास्ते। (२) 'प्रमीयते अनेन इति प्रमाणम्', इति करणव्युत्पत्तिपक्षे प्रमाणशब्दस्यायमभिसन्धिः—यद् येन ज्ञायते

---

१. अयं निबन्धो लेखिकायाः १९७३तमेऽब्दे उदयपुरविश्वविद्यालयतः 'पी०-एच० डी०' इत्युपाधिकृते स्वीकृतं 'वल्लभ सम्प्रदाय और उसके सिद्धान्त' इति नामकं शोधप्रबन्धमाश्रित्य गीर्वाणगिरा समुपस्थापितः।

२. लेखिका जोधपुरविश्वविद्यालयीयसंस्कृतविभागाध्यक्षप्रोफेसररसिकविहारिजोशिमहाभागाय नानृण्यमवगाहते तत्तैः सम्पूर्णो निबन्धः अवहितेन चेतसा प्रपठ्य भूयांसो विचारा आलोचनापद्धतिमनुसृत्य प्रदत्ताः, संस्कृतभाषायाश्च सम्यग् परिमार्जनं कृतम्।

३. प्रमाणशब्दो भावव्युत्पन्नो रूढो वा अबाधितज्ञाने वर्तते, बाधयोग्यव्यतिरिक्ते च। करणव्युत्पन्नस्तु तादृशज्ञानकरणे।

—प्रस्थानरत्नाकरः पुरुषोत्तमस्य, पृ० १.

तत्प्रमाणमिति । करणव्युत्पन्नप्रमाणशब्दः ज्ञानमुत्पादयति । यथार्था-यथार्थभेदाभ्यां प्रमा हि तावत् द्विधा सम्पद्यते । प्रमायाः करणमपि द्विधा । तस्मात् प्रथमं ज्ञाननिरूपणं नाप्रासङ्गिकम् । तैत्तिरीयोपनिषदि ज्ञानमेव ब्रह्मणः स्वरूपमङ्गीकृतम् , 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विदित-मेव वेदान्तविदां विदुषाम् । यदा भगवान् सिसृक्षति तदा भगवत आविर्भावो बहुधा सम्पद्यते । एवं ज्ञानस्यानन्तेषु भेदेषु सम्भवत्सु सत्स्वपि वल्लभाचार्यप्रणीतां श्रीमद्भागवतमहापुराणस्य सुबोधिनीमधि-कृत्य ज्ञानस्य दश प्रधानभेदाः परिगण्यन्ते ।[1]

## ज्ञानस्य प्रमाया वा दश प्रकाराः

*चतुर्धा नित्यज्ञानम्—*

( १ ) निखिलस्यापि चराचरस्यात्मभूतं सर्वेषामुपास्यं निर्विकार-मात्मस्वरूपमेव ज्ञानस्य प्रथमो भेदः । अयमेव ईश्वरस्य शुद्धप्रकृति-नाम्नाभिधीयते । अयमेवाऽद्वितीयो मोक्षप्रदाता चाङ्गीक्रियते ।[2] सजा-तीयत्वेन हेतुना सर्वेषां जीवात्मनामस्मिन्नेव भेदे अन्तर्भावः सम्पद्यते । इमे जीवात्मानः योगसाधितदृष्ट्या, भगवद्दृष्ट्या, दिव्यदृष्ट्या वा प्रकाशन्ते । ईश्वरस्य इदमेव स्वरूपं श्रीमद्भगवद्गीतायां सर्वेषु भूतेषु संस्थितं सत् सर्वेषामात्मा निगद्यते ।

( २ ) एतदेव ज्ञानं यदा भगवतो मरीचिमालिनः प्रकाशवद् प्रकाश-रूपेण प्रकाशते तदा भगवद्गुणः कथ्यते । भगवति ज्ञानमिदं नित्यम् । जीवेषु भगवत्पार्षदेषु च भगवत्प्रदत्तत्वेन हेतुना समुदेति । जीवस्य गुणरूपं ज्ञानमप्यस्मिन्नेव ज्ञाने सन्निविष्टं सञ्जायते । जीवेषु गुणात्मकं सर्वं ज्ञानं भगवत्कृपयैव भवति । यथोक्तं पुरुषोत्तमेन प्रस्थानरत्नाकरे 'तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्' (पृ०३) । भगवत उत्तमोत्तमानां श्रेष्ठानां प्रेष्ठानां च गुणानां प्राकट्यमस्मिन्नेव ज्ञाने समुपलभ्यते ।

---

१. 'अथ ते तदनुज्ञाता…', सुबोधिनी श्रीमद्भागवते, तृतीयस्कन्धः ।

2. History of Indian Philosophy, S. N. Dāsagupta, Vol. IV. p. 336.

३. एतदेव ज्ञानं यदा सृष्टेः निमित्तेन भगवतः मनोमयनाडी-द्वारेण वेदरूपं शरीरं धारयति तदा तृतीयं ज्ञानं कथ्यते । श्रीमद्भागवते महापुराणे स्पष्टमेतदुद्‌घोषितं यत् परमात्मा परोक्षरूपेण संवर्णितः, स एव साक्षादपरोक्षप्रत्यक्षविषय अस्ति, यतो हि स एव परमात्मा सर्वेषां वस्तूनां सत्तां स्फूर्तिं जीवनञ्चोत्पादयति । स एवादावानाहतनादस्वरूप-परावाचा प्राणैः सह मूलाधारचक्रे प्रविशति । ततः मणिपूरे समागत्य पश्यन्त्या वाचः मनोमयं सूक्ष्मातिसूक्ष्मरूपं गृह्णाति । तदनन्तरं कण्ठे स्थिते विशुद्धाख्ये चक्रे मध्यमया वाचाविर्भवति । क्रमशः मुखे प्रकटितः सन् मात्रास्वरवर्णरूपेण वैखरीं वाचं प्रकटयति ।[1] इदं ज्ञानं वेदस्वरूपे शरीरेऽपि भगवतः विराट्‌रूपवदनन्तमिति वल्लभानुयायिनां मतम् ।

४. एतदेव शब्दात्मकशरीररूपमनन्तं विराट्‌ज्ञानं विशिष्टया शक्त्या परिपूर्णं सत् सृष्टेः जीवरूपतामापद्यते । तदा व्यष्टिवत् सर्वेऽपि विकृताः शब्दाः सृष्टेः प्रारम्भे समुत्पद्यन्ते । भगवदाश्रितत्वेन हेतुना इदं ज्ञानं तुरीयं ज्ञानं कथ्यते । अयमाशयः ईश्वरस्य रूपस्य शब्दब्रह्मरूपेण विवेचनमेव तुरीयं ज्ञानम् ।

एतदेव शब्दात्मकं शरीरं संसारमाविर्भावयितुं लौकिकं प्रमातारं लौकिकं प्रमेयञ्चाश्रयते । अस्यैव शरीरस्य पश्यन्ती नाम्नी शब्दावस्था प्रमातारमाश्रयते । अतएव महावैयाकरणे भर्तृहरिः स्वकीयस्य वाक्य-पदीयस्य प्रथमे काण्डे समुद्घोषितवान् यन्नास्ति संसारे किञ्चिदपि तादृशं ज्ञानं यन्नानुविद्धं शब्देन । अनन्ताः प्रमेयाः । अतः प्रमेयमाश्रयितृ शब्द-शरीरविशिष्टं ज्ञानमप्यनन्तम् । यदा सर्वं ज्ञानं शब्दानुविद्धं तदा शब्दोऽपि नित्यः । शब्दार्थयोर्नित्यः सम्बन्धो व्याकरणशास्त्रसम्मतः, इति केन वा न ज्ञायते व्याकरणशास्त्रविदां विदुषाम् । अस्मिन् प्रसङ्गे एतदपि स्मर-णीयं यत् वल्लभाचार्यस्य सिद्धान्तेन एकमात्रं ब्रह्मैव प्रमेयमङ्गीकृतम् ।

५. ज्ञानस्य पञ्चमोऽयं प्रकारः यत्र शब्दार्थौ ज्ञानाभिभूतौ स्तः ।

---

१. स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ।।

—श्रीमद्भागवत, ११।१२।१७ः

एतत् तु पूर्वमेव प्रतिपादितं यत् शब्दार्थयोः शब्दज्ञानयोर्वा सिद्धः सम्बन्धः। अतः शब्दविशिष्टं ज्ञानं प्रमेयमवलम्बते। शाब्दिकज्ञानरूपेणैवैतत् प्राणिमात्रे प्रकटितं भवति, यतो हि ज्ञानस्य तु सर्वदा शब्दानां योगे मूलम्। शाब्दिकाया अयोग्यताया अभावेऽपि अभिनयसङ्केतादिभावानामाश्रयणेन ज्ञानं प्रकटयितुं शक्यते।

ज्ञानस्यास्य पञ्चमप्रकारस्याधोलिखिताः पञ्च भेदाः सन्ति। प्रमातुरन्तःकरणस्येन्द्रियाणाञ्चाश्रयणेन ज्ञानं पुनः पञ्चधा भवति।

( क ) एकप्रकारकं ज्ञानमिन्द्रियाणामाश्रयणेन, चतुःप्रकारकं ज्ञानञ्चान्तःकरणस्याश्रयणेन भवति।

( ख ) मनसः समुत्पद्यमानं ज्ञानं सङ्कल्पविकल्पात्मकेन हेतुना संशयात्मकं कथ्यते। इदं ज्ञानं मनस आश्रयणेन प्रकटीभवति।

( ग ) शरीराभिमानात्मकं ज्ञानमहङ्कारादुत्पद्यते, बुद्ध्याश्रितञ्च तिष्ठति। बुद्धिस्तावत् निश्चयात्मकं ज्ञानमुत्पादयति। विपर्यासो निश्चयो स्मृतिश्च बुद्धिवृत्तेरेव रूपाणि सन्ति। अतोऽस्मिन् ज्ञाने बुद्धिरेवाश्रयः।

( घ ) स्वाप्निकं ज्ञानमहङ्काराश्रितं भवति, अहङ्कारादुत्पद्यते। यतो हि अहङ्कार एव बुद्ध्या सह स्वप्नमवलोकयति।

( ङ ) निर्विषयकं ज्ञानं चित्तमवलम्बते। चित्तादेव निर्विषयं ज्ञानमुत्पद्यते। सुषुप्तौ चित्तमात्मानमात्मनः पृथकवलोकयति। एवं ज्ञानस्य दश भेदाः वल्लभवेदान्ते स्वीकृताः।

श्रीमद्भागवतमहापुराणस्याध्ययनेनैतत्सर्वथा स्पष्टं सम्पद्यते यत् ज्ञानमेव भगवतो यथार्थं लक्षणम्। एतदेव ज्ञानं भगवल्लीलामाध्यमेन सृष्टिस्थितिप्रलयेषूपयोगितां भजते। जगतः उत्पत्तिस्थितिप्रलयेभ्यो भगवाननन्तकोटिब्रह्माण्डनायको नन्दनन्दनः श्रीकृष्णचन्द्रः स्वकीयया योगमायया यदा स्वीया अलौकिका लीला विस्तारयति तदा सृष्टेः पूर्वं स्वयमद्वितीय आसीत्, यथोक्तं श्रुतौ—**'एकमेवाद्वितीयं ब्रह्म'**। तदानीं सर्वमसदेवासीत्, नासीद् कोऽपि द्रष्टा, न वासीत् किमपि दृश्यम्। तदानीं स्वयं भगवान् द्रष्टृरूपेण द्रष्टुमारेभे। किन्तु कुत्रापि दृश्यं नयनगोचरतां नागच्छत्, यतो हि भगवान् केवलमासीदद्वितीयरूपेण

प्रकाशितः। एवमेव भगवतो द्रष्ट्टृदृश्यरूपानुसंधात्री ज्ञानशक्तिः कार्य-कारणरूपेण मायाशक्तिः कथ्यते। अनयैवानिर्वचनीयया सदसद्विलक्ष-णया भावाभावविलक्षणया मायाशक्त्या ज्ञानस्वरूपो भगवान् श्रीकृष्णः सृष्टिं सृजति[1]। अनेन प्रकारेण इन्द्रियान्तःकरणाश्रयेण प्रतिपादितं षट्प्रकारकं ज्ञानमन्तःकरणस्यैव धर्मत्वेनानुमतं, न त्वात्मनः[2]। वस्तुतः अस्थिरं ज्ञानमिदं, तथापि ज्ञानस्यान्येभ्यस्तत्त्वेभ्यः पृथक् कृतं सत् सुस्थिरं सम्पद्यते, तथा च संस्कारनाम्नाऽभिधीयते। यश्च स्मृत्योप-लब्धुं शक्यते। एतत् सम्भाव्यते यत् कदाचित् स्मृत्या वस्तुज्ञानं विस्मृ-तिपथमुपगच्छेन अशुद्धं वा स्मृतिपथमायात्। स्वरूपतः पुनः विनष्टे सति पुनः स्मर्यते, विपर्यस्तरूपतां वा, लभते। एवं यद्यपि सति गुणनाशे सत्यं सत्फलस्याभावस्तथापि अस्यामवस्थायां ज्ञानं सर्वथा न विन-श्यति, केवलं मायापरिणामस्वरूपेण प्रच्छन्नं तिष्ठति। अनेन पर्यवस्यति यत् वल्लभवेदान्ते उत्पन्नं ज्ञानं घटादिवत् स्थिरं मन्यते, न तु त्रिक्षणा-वस्थायि। शब्दः विषयाश्च केवलं उत्पन्नज्ञानस्योद्दीपकाः।

## ज्ञानस्यापरे भेदाः

( १ ) *सात्त्विकं ज्ञानम्*—प्रमापरपर्यायं सात्त्विकं ज्ञानमेव यथार्थं ज्ञानमास्ते। सत्त्वमेव प्रमाणकं भवति। अतः सत्वजन्यं ज्ञानमेव प्रमाणम्, प्रमाणसम्बन्धिज्ञानमेव सात्त्विकं ज्ञानम् यथार्थमबाधित-ज्ञानमेव प्रमा। यस्मिन् ज्ञाने नास्त्यौत्तरकालिको बाधः[3]। सत्व-गुणस्य वृद्धिः अनेकधा कर्त्तुं शक्यते। येन यथार्थज्ञानस्य प्रमतिरू-

---

१. ( क ) श्रीमद्भागवते, ३।५।२२–२५.

( ख ) History of Indian Philosophy, S. N. Dasgupta. vol. IV, P. 336–7,

२. कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीः धीः भिरि-त्येतत्सर्वं मन एवेति।

—प्रस्थानरत्नाकरः, पुरुषोत्तमकृत, पृ० ४.

३. अबाधितं ज्ञानत्वं, बाधयोग्यव्यतिरिक्तत्वं वा तल्लक्षणम्। तत्रैव, पृ० ६.

त्पद्यते। आगमापप्रजादेशकालकर्मजन्मध्यानमन्त्रसंस्काराः दशगुणहेतवः सात्विकाः सन्तः सत्वगुणं, राजसिकाः सन्तः रजोगुणं, तामसिकाः सन्तश्च तमोगुणं प्रवर्धन्ते। शास्त्रज्ञाः विद्वांसः सत्वं प्रशंसन्ति, तमो विगर्हन्ति रजश्चोपेक्षन्ते[1]। प्रस्थानरत्नाकरस्य लेखकाः श्रीमन्तः पुरुषोत्तममहाभागाः श्रीमद्भागवतमहापुराणादस्मिन् प्रसङ्गे श्लोकद्वयीमुदाजह्रुः। किन्तु श्रीमद्भागवतीया 'आगमोऽपः' इति पाठपाठस्य स्थाने 'आगमोऽर्थः' इति पाठं स्वीचक्रिरे। अयं पाठः श्रीमद्भागवतस्य प्रकाशितेषु संस्करणेषु कुत्रापि नोपलभ्यते। पाठपरिवर्तनस्यार्थः स्पष्टः। मन्ये भागवतस्यैव पाठः शुद्ध इति। सत्वेन यद् यथार्थं ज्ञानमुत्पद्यते, तत् प्रमाणयति यत् सृष्ट्यात्मकं तत्त्वं सर्वत्रैवानुस्यूतम्। एतदेव ज्ञानं सर्वथा प्रामाणिकम्। सत्वस्य करणोपकरणोपस्थितौ सत्वं वर्धते। सति सत्वलये तेभ्य एवोपकरणेभ्यः भ्रमः सञ्जायते। एवमन्वयव्यतिरेकाभ्यां सत्वेनैव प्रमाणं निश्चीयते, सत्वोपन्नमेव ज्ञानं प्रमाणं मन्यते वल्लभमतानुसारेण।

(२) *राजसिकं ज्ञानम्*—राजसिकोपकरणेनोत्पन्नं ज्ञानं राजसिकं ज्ञानं कथ्यते। यद्यपि नानाप्रकारकमिदं तथापि रजः प्रधानत्वेन हेतुना पूर्णरूपेण प्रमाणिकं नाङ्गीक्रियते। व्यवहारोपयोगि वैकल्पिकञ्च ज्ञानमिदं दृश्यजगतः समुपलभ्यते। वस्तुतः अस्मिन् ज्ञाने अहन्त्वममत्वयोरभिमानो मिश्रितो विद्यते- मनोमात्रेन्द्रियासुभिः स्वाभाविकेन

---

१. (क) आगमोऽपः प्रजा देशः कालः कर्म च जन्म च।
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः॥
तत्तत् सात्त्विकमेवैषां यद् यद् वृद्धाः प्रचक्षते।
निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम्॥
—श्रीमद्भागवतमहापुराणम्, ११।१३।४–५.

(ख) The Three qualities of the saṁkya system, Rasik Vihari Joshi, Gopinath Kaviraj Abhinandana Gratnha, lucknow, 1967, pp. 131–32.

व्यापारेण चात्र व्यवहारसन्निपातः[1] । अतएव राजसिकं ज्ञानं मोक्षोपलब्धावकारणम् । शास्त्राणां नैरन्तर्येणाभ्यासेन यदा साधकभक्तस्य अहंत्वममस्वरूपिणी बुद्धिर्निवर्तते तदा रजस्तमसी प्रक्षीणे सम्पद्येते । क्षीणगुणे च रजस्तमसी सर्वथा बलहीने भवतः, तदा केवलं सत्वप्राधान्यमवशिष्यते । एतदेव सत्वप्रधानं ज्ञानं मोक्षोपयोगि ज्ञानं मन्यते वल्लभपरम्परायाम् । अस्यामवस्थायां यद्यपि बुद्धिः पृथक् तिष्ठति तथापि प्रबलेन सत्वेन नाधिकान्ना भवति । अनेन हेतुना सत्वप्रधानमपि ज्ञानं लौकिकं ज्ञानं कथ्यते । राजसिकज्ञानवत् राजस्या प्रमाया अपि परमार्थतोऽप्रामाण्यम् । तामसिकं ज्ञानं तु सर्वथाऽप्रामाणिकमित्यत्र नास्ति कापि विप्रतिपत्तिः । शिष्टजननिन्दितत्वादिदं राजसिकं ज्ञानं हेयमभिमन्यते । ज्ञानमिदमधोलिखितप्रकारेण द्विविधं भवति ।

*( क ) सविकल्पकं राजसिकं ज्ञानम्*—राजसं सविकल्पकं ज्ञानं लौकिके व्यवहारे उपयुज्यते । यद्यपि ज्ञानं प्रथमं सात्विकं निर्विकल्पकञ्च भवति किन्तु तेन लोकव्यवहारः न सम्पद्यते । अस्मिन् ज्ञाने पूर्वानुभवस्य आधारेणैव विषयाणां स्वरूपं निर्धार्यते । सविशेषं ज्ञानमेव सविकल्पक ज्ञानम् । वस्तुनि निर्विकल्पकं ज्ञानं बीजावस्थायामनुस्यूतमास्ते । केवलं सविकल्पे एव ज्ञाने संस्काराः प्रस्फुटन्ति । तथापि निर्विकल्पकं ज्ञानं सविकल्पकज्ञानात् पूर्वं तिष्ठदपि प्रमाणाभावे तस्य कारणतां नोपलभते[2] ।

*( ख ) निर्विकल्पकं ज्ञानम्*—वस्तुतः ज्ञानमिदं सात्विकमेव यत् सविकल्पात् पूर्वं इन्द्रियेभ्यः उत्पद्यते । जागरितवृत्तेः सात्विकत्वेन हेतुना सत्वानुग्रहेण इन्द्रियेभ्यः उत्पन्नं ज्ञानमेव निर्विकल्पकं ज्ञानं कथ्यते । राजसज्ञानकोटौ अस्य केवलं परिगणनमात्रम् । सत्पदार्थ एव प्रत्यक्ष-

---

१. सन्निपातस्त्वमिति प्रमेत्युद्भव या मतिः ।
व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः ॥
—प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ७.

२. तत्रैव, पृ० ८.

विषयतां भजते। यदा कस्यापि विषयस्य इन्द्रियेण सह संसर्गः सञ्जायते तदा आत्मा तं विषयं प्रत्यक्षीकरोति। इन्द्रियसंयोगे अति विषयप्रतीतिः सम्पद्यते, किन्तु वस्तुनः वैशिष्ट्यस्य आभासो न जागर्ति। एतादृशं निर्विशेषं ज्ञानमेव निर्विकल्पकं ज्ञानं कथ्यते।

( ३ ) *तामसिकं ज्ञानम्*—इदं ज्ञानं सर्वथा अप्रमाणकोटिमाटीकते। पामराणां जनानां नास्तिकानाञ्च कुतर्कवादिनां ज्ञानं तामसिकं ज्ञानं कथ्यते। शिष्टजनविगर्हितत्वात् हेयमेवेदम्। कुमारिभट्टमतेन अक्षि-सन्निपातानन्तरमविविक्तसामान्यविशेषभागं संमुग्धवस्तुमात्रगोचरमा-लोचनज्ञानमेव निर्विकल्पक ज्ञानम्[1]।

धर्मराजाध्वरीन्द्राः वेदान्तपरिभाषायां विशेषणविशेष्यसंसर्गविषय-शून्यं ज्ञानं निर्विकल्पकं ज्ञानमङ्गीकुर्वन्ति। तथा च 'स एवायं रामः', 'स एव त्वम्' एतादृशं वाक्यजन्यं ज्ञानं निर्विकल्पकज्ञानस्य उदाहरण-रूपेण स्वीक्रियते। वाक्यजन्यं ज्ञानं पदार्थसंसर्गाभावेऽपि निर्विकल्पकं ज्ञानमभिमन्यते। यतः शब्दज्ञाने न केवलं संसर्ग एवापि तु तात्पर्यमपि विषयीभवति। स एव शाब्दज्ञानस्य विषयः[2]। यत्र अनेकार्थवाचकानां शब्दानां वाक्ये प्रयोगः संलक्ष्यते। एतादृशेषु स्थलेषु निर्विकल्पकज्ञान-स्य लक्षणं न संगच्छते, यथा 'सुरभिमांसं भुङ्क्ते' इत्यस्मिन् वाक्ये तात्पर्यविषयाभावेऽपि सुरभिसंसर्गमात्रेणैव ज्ञानमुत्पद्यते, इति दुर्निवा-रता ज्ञानविषयतायाः[3]।

नैयायिकानामनुसारेण विशेषणविशेष्यावगाहि ज्ञानं निर्विकल्पकं ज्ञानं स्वीक्रियते। यद्यपि निर्विकल्पे ज्ञाने इन्द्रियं प्रमाणं नास्ति तथापि 'अयं घटः' इत्यस्मिन् घटत्वविशिष्टघटविषयकज्ञानरूपिणा कार्येण तदनुमीयते। न्यायशास्त्रीयोऽयं नियमः यद् विशिष्टबुद्धिः विशेषणज्ञान-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ८.

२. वेदान्तपरिभाषा, धर्मराजध्वरीन्द्रः, (श्री अनन्तकृष्णशास्त्री, कलकत्ता) १९२७, पृ० ७६–९२.

३. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ०९.

विशिष्टा भवति। यथा 'दण्डी पुरुषः' इत्यत्र दण्डरूपकं विशेषणं दण्डविशिष्टं पुरुषं बोधयति। तथैव 'अयं घटः' इत्यस्मिन् वाक्ये घटज्ञानात्पूर्वं घटत्वविशेषणरूपवैशिष्ट्यस्यावगाहनं न सञ्जायते। इयमेव निर्विकल्पकता निर्विकल्पकज्ञानस्य[1]। प्राभाकराः मीमांसकाः निर्विकल्पकं ज्ञानमेव नानुमन्वते। यत. विशेषणविशेष्यज्ञानं केवलं समानसंवित्संवेद्यमस्ति।

वल्लभवेदान्तानुसारिणामाचार्याणां मतेन विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणता इन्द्रियग्राह्यत्वेऽपि स्वीकरणीया विद्यते। अन्यथा दण्डस्य निर्विकल्पकज्ञानानन्तरं 'दण्डी पुरुषः' इति विशिष्टबुद्धिरपि स्वीकरणीया भविष्यति[2]।

सविकल्पकं ज्ञानं निम्नलिखितप्रकारेण पञ्चधा भवति। विभागोऽयं वल्लभपरम्परायां श्रीमद्भागवतमतानुसारीति नास्ति संशयकणिकापि[3]। यद्यपि सर्वेऽपीमे पञ्च प्रकाराः बुद्धेः लक्षणमात्रम्, अतः एतेषां प्रकाराणां बुद्धिवृत्तिनाम्नोपस्थापनं समधिकमौचित्यमवलम्बते। ज्ञानस्य भेदरूपेणाङ्गीकरणं न प्रतिभाति बहुयुक्तिसंगतं तथापि बुद्धिरपि ज्ञानरूपिणीति कृत्वा बुद्धेः स्वरूपलक्षणत्वेन दोषः परिह्रियते। बुद्धिस्तावत् विशिष्टज्ञानसमानाकारा। अतः वल्लभपरम्परायां सविकल्पकज्ञानस्याधोलिखिताः पञ्चभेदाः स्वीकृताः सन्ति[4]।

(१) *संशयात्मकं ज्ञानम्*—एकस्मिन् धर्मिणि विरुद्धनानाकोट्यवगाहि ज्ञानं संशयः। आहोस्वित् समानानेकधर्मोत्पत्तेः विप्रतिपत्तेः उपलब्ध्यनुपलब्ध्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः। इत्येतादृंशि लक्षणानि संशयस्योपलभ्यन्ते न्यायशास्त्रे। यथा हि दूरतः कश्चित्

---

१. Tarkabhāshā, Keshave Mishra, ( Ed. S. M. Paranjpe ) Poona. 1909, P. 27.

२. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ९-१०

३. संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्॥ –श्रीमद्भागवते, ३।२६।३०

४. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० १४.

पदार्थमवलोक्य तस्मिन् 'स्थाणुर्वा पुरुषो वा' इति ज्ञानं संशयः। एकस्मिन्नेव धर्मिणि स्थाणुविनिश्चायकवक्रकोटरादीनां पुरुषत्वनिश्चायककरचरणदीनां परस्पर विरुद्धानां धर्माणां समवगाहनमेव संशयः।

( २ ) *विपर्यासात्मकं ज्ञानम्*—भिन्नार्थमात्रप्रतिपादकं बाह्यं ज्ञानमेव विपर्यासः, यथा शुक्ताविदं रजतमिति विपर्ययः।

( ३ ) *निश्चयात्मकं ज्ञानम्*—प्रमाशब्दव्यवहारभाक् यथार्थानुभवापरपर्यायं निश्चयात्मकं ज्ञानम्। यथार्थपदस्यायमर्थः यत् यः पदार्थः यादृशः तस्य पदार्थस्यार्थस्य ज्ञानं केनाप्यन्येन प्रकारान्तरेण अर्थान्तरेण वा अतिक्रमेण कर्तुं न शक्यते। अनेन संशयविपर्ययनिद्रादीनामयथार्थज्ञानानां निरासः। निश्चयात्मकं ज्ञानमपि द्विधा।

( क ) *प्रत्यक्षं निश्चयात्मकं ज्ञानम्*—इन्द्रियार्थसंयोगेनोत्पन्नं ज्ञानं प्रत्यक्षं निश्चयात्मकं ज्ञानं कथ्यते। लोके साधारणाः शास्त्रज्ञानशून्याः जनाः एतदेव साक्षात्कारशब्देन निगदन्ति। ईश्वरविषयकं ज्ञानं कदाप्यस्य ज्ञानस्य विषयो भवितुं नार्हति।

( ख ) *परोक्षं निश्चयात्मकं ज्ञानम्*—यद् ज्ञानं इन्द्रियार्थसंयोगेन नोत्पद्यते तत् परोक्षं निश्चयात्मकं ज्ञानं कथ्यते।

( ४ ) *स्मृत्यात्मकं ज्ञानम्*—संस्कारमात्रोत्पन्नं ज्ञानं स्मृतिः। इदं केवलं प्राक्तनेभ्यः संस्कारेभ्यः समुत्पद्यते, निद्रायाः बाह्येन्द्रियाणां व्यापारेभ्यश्च कदापि नोत्पद्यते।

( ५ ) *स्वापात्मकं ज्ञानम्*—स्वाप्निकसृष्टिविषयकं ज्ञानमेव स्वापः। परमेश्वरस्य मायया विरचितमिदम्। स्वापस्यैवात्रान्तरो भेदः सुषुप्तिः। अस्मिन् स्वापे स्वत एवात्मस्फूर्तिः[1]। अभ्यासजन्ये दृढप्रतीतिरूपे ज्ञाने यथा पूर्वानुभवसंस्कारः सहकारी तथैव प्रत्यभिज्ञायां स्मृतिः सहकारिणी।[2] चिन्ता हि नाम विकल्पसंमोहात्मिका ध्यानात्मके स्मरणे

---

१. तत्रैव, पृ० २५.

२. अभ्यासजन्ये दृढप्रतीतिरूपे ज्ञाने यथा पूर्वानुभवसंस्कारः सहकारी तथा प्रत्यभिज्ञायां स्मृतिः सहकारिणी। तत्रैव, पृ० २५.

अन्तर्भवति। निश्चयज्ञानमेव प्रत्यभिज्ञा। यथा अभ्यासजन्ये प्रतितिज्ञाने पूर्वपूर्वानुभवजन्य संस्कारः सहकारिज्ञानमस्ति तथैव प्रत्यभिज्ञायां स्मृतिः सहकारिणी। स्मृत्यैव प्रत्यभिज्ञा भवति। पूर्वेण संस्कारेणापीयं सम्भाव्यते। स्मृतिः पूर्वसंस्कारात् साक्षादुत्पद्यते। प्रत्यभिज्ञा संस्कारजन्यत्वेन। स्मृतिसहयुक्तानुग्रहेणोत्पद्यते निश्चयविपर्यासयोः अत्यन्तं भेदः। विपर्यासे भ्रमः, यथा शुक्तौ रजतम्। शुक्तौ शुक्ति ज्ञानं निश्चयः। शुक्तौ रजतज्ञानं विपर्यासः[1]।

शुद्धाद्वैतसिद्धान्तधिया सम्पूर्ण जगत् ब्रह्मणः सदंशः। तस्मात् ब्रह्मणः कार्यं तथा च सत्यम्। अविकृतपरिमाणवादेऽपि ब्रह्मैव जगत्कारणम्। ब्रह्मैव-जगतः निमित्तकारणं समवायि कारणञ्च अभिन्ननिमित्तोपादानकारणत्वेन हेतुना, एवं वल्लभमतानुमतप्रमालक्षण-प्रतिपादनप्रसङ्गेन ज्ञानस्य भेदोपभेदानां संक्षिप्य विवेचनं दार्शनिकानां परीक्षणार्थं मयोपस्थापितम्।

साम्प्रत ज्ञानस्य करणं कारणञ्च विचार्यते। यतो हि प्रमाकरणं प्रमाणम्, इति प्रमाणलक्षणं सकलविद्वज्जनसम्मतमिति कृत्वा करणकारणविचारः प्रस्तूयते।

*करणकारणविचारः—*

'व्यापारवदसाधारणम् कारणं करणम्', इत्यन्नम्भट्टस्य लक्षणं तर्कसंग्रहे। प्राचीनैः नैयायिकैः करणस्य लक्षणे 'व्यापारवत्' इति पदं सन्निवेशितम्। षोडशशतकस्यारम्भे दीधितिकाराः श्रीमन्तः रघुनाथशिरोमणिभट्टाचार्यपादाः नव्यन्यायपरम्परायां एतदेव लक्षणं प्राचीचरन्। प्रस्थानरत्नाकरस्य लेखकाः वल्लभवेदान्तशास्त्रपारङ्गताः श्रीमन्तः गोस्वामिपुरुषोत्तमचरणाः अनेनैव लक्षणेन प्रभाविताः प्रतिभान्ति। तदेव हि कारणं यत् कमपि पदार्थमाविर्भावयित्र्याः शक्तेः आधारः स्यात्। 'उपादानस्य कार्यं या व्यवहारगोचरं करोति सा शक्तिराविर्भाविका। आविर्भावश्च व्यवहारयोग्यत्वम्। तिरोभावश्च तद-

---

१. भ्रमप्रमासमूहालम्बने तु एकदेशविकृतमनन्यवद्भवतीति न्यायेन भ्रमाधिक्ये विपर्यास एव। तत्रैव, पृ० २५–२६.

योग्यत्वम्' ( प्रस्थानरत्नाकरे, पृ० २६ )। एवमाकृतेः प्रादुर्भाव एव आविर्भाव-पदार्थः। वस्तूनां तत्स्वरूपमाविर्भावः येन वस्तून्यनुभूयन्ते, येन वा व्यवहारयोग्यतामापाद्यन्ते। या शक्तिः परिणामं व्यवहारयोग्य सम्पादयति स एवाविर्भावः। या शक्तिः परिणामं विपरिणमय्य दर्शयति, स एव तिरोभावः। उभावपि प्राधान्येन भगवत एव शक्ती स्त.। प्रधानरूपेण इमे तेषु कारणेषु स्थिते स्तः ययोः आविर्भावतिरोभावौ भवतः।अमाशयः—अप्रधानरूपेण आविर्भावतिरोभावशक्ती योग्यवस्तूनां शक्तिरूपेण तिष्ठतः। व्यवहारदशायामपि यत्र यत्र आविर्भाविका शक्तिः सन्निधत्ते तत्र तत्रैव सा परिणामस्य कारणतामधिगच्छति। एतत्स्मरणीयमास्ते यन्न्यायशास्त्रे कारणं परिणामात् नियतपूर्ववर्ति स्वीक्रियते, तथापि स्वतन्त्रनिरपेक्षकारणशक्तिरूपेण नाङ्गीक्रियते।

वल्लभसम्प्रदाये कारणं समवायनिमित्तभेदाभ्यां द्विविधम्। यथा—

( १ ) *समवायि कारणम्*–तादात्म्यसम्बन्धावच्छिन्नत्वेन यदाश्रयत्वेन हेतुना कार्योत्पत्तिः सञ्जायते तदेव समवायि कारणम्[1]। समवायशब्दः तादात्म्यसम्बन्धापरपर्यायः। समवायसम्बन्ध एव नित्यसम्बन्ध इति विदितमेव विदुषाम्। वल्लभवेदान्तानुसारेण भगवानेव अविकृतरूपेण स्वांशेन जगतः समवायिकारणम्। अनेन प्रकारेण अद्वयज्ञानस्वरूपं श्रीकृष्णात्मकं ब्रह्मैव जगत्यन्वितमनुस्यूतं सत् जगतः समवायि कारण सिध्यति।

वैशेषिकदर्शने स एव समवायसम्बन्धः यः आधाराधेयभूतायुत-

---

1. According to Vallabha Samavāya is not a relation of inherence which exists between cause and effect such as admilled by Naiyāyikas; with him it means identity. Samavāyi kāraṇa, according to Vallabha means universal and unconditional pervasion. —Chaitanya, His life and doctrine, A. K. Mujumdar, Bombay, 1969. N B 47, P. 74.

सिद्धानां प्रत्ययकारणमास्ते । अथ परस्परमन्तर्व्याप्तसम्बन्धः, यथा तन्तुषु पटः, पटे शुक्लो गुणः, गवि गोत्वम् । अवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः जातिव्यक्त्योः विशेषनित्यद्रव्ययोश्च सम्बन्धः अयुतसिद्धः कथ्यते । स एव समवायः सम्बन्धः । यस्मिन् समवायेन कार्यमुत्पद्यते तत् समवायिकारणम्[1]।

वेदान्तशास्त्रे समवायिकारणस्य अवस्थाविशेष एवोपादानकारणं स्वीक्रियते । एतत्तु मया नातिचिरं प्रतिपादितं यत् भगवानेव अविकृतरूपेण जगतः समवायिकारणम् । स एव कदाचित् कालरूपेण, कदाचित् प्रकृतिरूपेण स्वांशमुपादानकारणरूपेण प्रकटयति । एवं भगवान् उपादानमाधारीकृत्य सृष्टिं सृजतीति हेतुना ब्रह्मैव जगतः उपादानकारणमिति निश्चयम् । एवं परिच्छिन्नकार्यकारणव्याप्तिरूपकः सम्बन्ध एवोपादानकारण फलितम्, यथा मृदो घटेन सम्बन्धः । उपादानमिदं परिणामविवर्तभेदाभ्यां द्विविधम् ।

( क ) *परिणामोपादानम्*—स्वात्मतुल्यमेव कार्यकारणयोराविर्भावः परिणामो हि उपादानवत् सत्ताया अन्यथाभावः । एतदपि अविकृतविकृतभेदाभ्यां द्विविधम् । (अ) स एवाविकृतपरिणामः यः पुनः स्वकीये कारणे परिवर्तितः स्यात् ; यथा सुवर्णस्य कटककुण्डलादीन्याभूषणानि पुनः सौवर्णभावं लभन्ते । ( आ ) विकृतपरिणामस्तु स एव यस्मिन् कार्ये परिणामे वा कश्चिद् विकार उत्पद्यते । कारणञ्च पुनः कदापि कार्यरूपं नैव लभते । यथा दुग्धस्य दधिरूपेण विकृतिः । (ख) विवर्तोपादानं हि उपादानविषयसत्ताकोऽन्यथाभावः । कारणविकारस्य आभासमात्रमेव विवर्त्त । अस्मिन्नुपादाने पारमार्थिकः विकारः नोत्पद्यते यथा शुक्तौ रजतमिति प्रतीते ।

( २ ) *निमित्तकारणम्*—अयं समवायकारणभिन्नं कारणं भवति । यथा घट प्रति कुलालदण्डचक्रादयः, ज्ञानस्य विषयाः इन्द्रियस्य च

---

१. तर्कभाषा, केशवमिश्रः ( सं० आचार्यविश्वेश्वरः ). पृ० २६–३२.

व्यापाराः ज्ञानस्य निमित्तकारणानि सन्ति। इयं निमित्तकारणतापि द्विधा, (क) दण्डचक्राद्युपकरणरूपेण (ख) तृणारणिमण्यादिरूपेण, प्रत्येकं परिणामे परिवर्तनशीला।

## द्वितीयो भागः–प्रमाणमीमांसा

श्रीमद्भागवते महापुराणे श्रुतिप्रत्यक्षैतिह्यानुमानानीति चत्वारि प्रमाणानि प्रतिपादितानि सन्ति। एतेषु चतुर्षु प्रमाणेषु निकषोपले निकषितेषु सत्सु समस्तं दृश्यं प्रपञ्चजातमस्थिरं नश्वरं विकारित्वेन हेतुनाऽसत्यं सिध्यति। अतः विवेकिनः पुरुषाः अस्मात् शब्दमात्रप्रपञ्चात् विरक्ताः सम्पद्यन्ते[1]। श्रीमद्भागवतमहापुराणस्य अमुमेव प्रमाणाधारमधिकृत्य गोस्वामिपुरुषोत्तमपादाः स्वकीये प्रस्थानरत्नाकराख्ये ग्रन्थे एतान्येव चत्वारि प्रमाणानि नाममात्रेण समकीर्तयन्। किन्तु वस्तुतः स्वयं त्रीण्येव प्रमाणानि स्वीचक्रिरे। ऐतिह्यन्तु शब्दप्रमाणे अन्तर्भावितवन्तः। एतेन सिध्यति यत् वल्लभीया वेदान्तपरम्परा सांख्यपरम्परानुयायिनी, यतो हि सांख्यशास्त्रेपि प्रत्यक्षानुमानागमभेदेन त्रीण्येव प्रमाणानि सर्वतः सांख्यतत्त्वतत्त्वज्ञेषु सुप्रसिद्धानि सन्ति। एतान्येव त्रीणि प्रमाणानि मनुरपि मनुस्मृतौ स्वीचकार[2]।

कारणात् कार्योत्पत्तिकालेऽपि या क्रिया विद्यते सैव व्यापारः, यथा विषयाणमिन्द्रियसंयोगः इन्द्रियव्यापारः कथ्यते। ईश्वरस्य सृष्टिसिसृक्षायाः सम्बन्धे अयं व्यापारः नावश्यकः, इत्यस्ति वैष्णववेदान्तिनां सर्वसम्मतं मतम्।

---

१. श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्।
प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते॥
—श्रीमद्भागवतमहापुराणम्, ११।१९।१७.

२. प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सिता॥
—मनुस्मृतिः १२, (सं०) नारायणरामः, मुम्बयी, १९४६.

(१) *शब्दप्रमाणम्*—अथ प्रमाणानि विचार्यन्ते । वल्लभसम्प्रदायानुसारेण वेदा एव प्रमुखं प्रमाणम् । 'वेदोऽखिलो धर्ममूलम्' इति वचनस्य प्रमाणिकतामङ्गीकृत्य वल्लभीयाः तस्य सर्वस्यापि शास्त्रस्याप्रामाणिकतामुद्घोषयन्ति यत् वेदमूलकं नास्ति । वेदा एव परमेश्वरप्रोक्तत्वात् परमाप्तोपदिष्टत्वात् प्रामाणिकाः । परमेश्वरः परमाप्तः । तत्प्रोक्तत्वात् वेदा अप्याप्ताः । आप्तशब्दस्य कोऽर्थः इति जिज्ञासायां यथास्थितस्याऽर्थस्य प्रतिपादकः पुरुष एवाप्तः इति ब्रवीमि । आप्तश्चासौ द्विविधः; लौकिकालौकिकभेदात् ।

मनुष्येषु न खलु सर्वेऽपि आप्तपुरुषाः भवन्ति । अस्मासु केवलं केचन अङ्गुलिमात्रगणनीया एव पुरुषाः लौकिकाः आप्तपुरुषाः भवन्ति । अलौकिका आप्तपुरुषास्तु ऋषिभ्यः समारभ्य ईश्वरपर्यन्तमभिमन्यते । इमे आप्तवाक्यानि उत्तरोत्तरं प्रवर्द्धमानानि सन्ति परमाप्तस्वरूपे परमेश्वरे पर्यवस्यन्ति । अतः ईश्वरोपदेशभूताः वेदा एव श्रेष्ठं प्रमाणम्[1] । शब्दमूलकाः वेदाः, इत्यस्माद्धेतोः वल्लभाचार्याः शब्दमेव एकमात्रं प्रमाणं स्वीचक्रिरे । तथा च शब्देऽपि अलौकिकार्थज्ञापकान् शब्दानेव प्रमाणमभिमेनिरे[2] । एतानेव वल्लभाचार्याः स्वतःसिद्धप्रमाणरूपेणोद्घोषयामासु, इत्यतः शब्दस्य प्रामाणिकता स्वतःसिद्धनित्यनिरपेक्षरूपेण सिध्यति ।

सृष्टेः समारम्भे हिरण्यगर्भादपि पूर्वमन्तर्यामिनः संकल्पमात्रेण स्वाप्निकपदार्थवत् वेदाः केवलं प्रतिभामात्रेणैव अनुभूताः । ईश्वरः सर्वज्ञत्वात् आत्मवत् निर्माति[3] । स्वकीये तत्त्वदीपनिबन्धे नामके ग्रन्थे वल्लभाचार्याः महाभागाः वेदान्, भगवतः श्रीकृष्णचन्द्रस्य वचन-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ३४.

२. शब्द एव प्रमाणम्ः, तत्राप्यलौकिकज्ञापकमेव । तत्स्वतः सिद्धप्रमाणाभावं प्रमाणम् ॥ —तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम्, वल्लभाचार्यः, 'प्रकाश', पृ० २६.

३. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ४८.

व्यापाराः ज्ञानस्य निमित्तकारणानि सन्ति। इयं निमित्तकारणतापि द्विधा, (क) दण्डचक्राद्युपकरणरूपेण (ख) तृणारणिमण्यादिरूपेण, प्रत्येकं परिणामे परिवर्तनशीला।

## द्वितीयो भागः—प्रमाणमीमांसा

श्रीमद्भागवते महापुराणे श्रुतिप्रत्यक्षैतिह्यानुमानानीति चत्वारि प्रमाणानि प्रतिपादितानि सन्ति। एतेषु चतुर्षु प्रमाणेषु निकषोपले निकषितेषु सत्सु समस्तं दृश्यं प्रपञ्चजातमस्थिरं नश्वरं विकारित्वेन हेतुनाऽसत्यं सिध्यति। अतः विवेकिनः पुरुषाः अस्मात् शब्दमात्रप्रपञ्चात् विरक्ताः सम्पद्यन्ते[1]। श्रीमद्भागवतमहापुराणस्य अमुमेव प्रमाणाधारमधिकृत्य गोस्वामिपुरुषोत्तमपादाः स्वकीये प्रस्थानरत्नाकराख्ये ग्रन्थे एतान्येव चत्वारि प्रमाणानि नाममात्रेण समकीर्तयन्। किन्तु वस्तुतः स्वयं त्रीण्येव प्रमाणानि स्वीचक्रिरे। ऐतिह्यन्तु शब्दप्रमाणे अन्तर्भावितवन्तः। एतेन सिध्यति यत् वल्लभीया वेदान्तपरम्परा सांख्यपरम्परानुयायिनी, यतो हि सांख्यशास्त्रेपि प्रत्यक्षानुमानागमभेदेन त्रीण्येव प्रमाणानि सर्वतः सांख्यतत्त्वतत्त्वज्ञेषु सुप्रसिद्धानि सन्ति। एतान्येव त्रीणि प्रमाणानि मनुरपि मनुस्मृतौ स्वीचकार[2]।

कारणात् कार्योत्पत्तिकालेऽपि या क्रिया विद्यते सैव व्यापारः, यथा विषयाणमिन्द्रियसंयोगः इन्द्रियव्यापारः कथ्यते। ईश्वरस्य सृष्टिसिसृक्षायाः सम्बन्धे अयं व्यापारः नावश्यकः, इत्यस्ति वैष्णववेदान्तिनां सर्वसम्मतं मतम्।

---

१. श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्।
प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते॥
—श्रीमद्भागवतमहापुराणम्, ११।१९।१७.

२. प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सिता॥
—मनुस्मृतिः १२, (सं०) नारायणरामः, मुम्बयी, १९४६.

(१) *शब्दप्रमाणम्*—अथ प्रमाणानि विचार्यन्ते । वल्लभसम्प्रदायानुसारेण वेदा एव प्रमुखं प्रमाणम् । 'वेदोऽखिलो धर्ममूलम्' इति वचनस्य प्रमाणिकतामङ्गीकृत्य वल्लभीयाः तस्य सर्वस्यापि शास्त्रस्याप्रामाणिकतामुद्घोषयन्ति यत् वेदमूलकं नास्ति । वेदा एव परमेश्वरप्रोक्तत्वात् परमाप्तोपदिष्टत्वात् प्रामाणिकाः । परमेश्वरः परमाप्तः । तत्प्रोक्तत्वात् वेदा अप्याप्ताः । आप्तशब्दस्य कोऽर्थः इति जिज्ञासायां यथास्थितस्याऽर्थस्य प्रतिपादकः पुरुष एवाप्तः इति ब्रवीमि । आप्तश्चासौ द्विविधः; लौकिकालौकिकभेदात् ।

मनुष्येषु न खलु सर्वेऽपि आप्तपुरुषाः भवन्ति । अस्मासु केवलं केचन अङ्गुलिमात्रगणनीया एव पुरुषाः लौकिकाः आप्तपुरुषाः भवन्ति । अलौकिका आप्तपुरुषास्तु ऋषिभ्यः समारभ्य ईश्वरपर्यन्तमभिमन्यते । इमे आप्तवाक्यानि उत्तरोत्तरं प्रवर्द्धमानानि सन्ति परमाप्तस्वरूपे परमेश्वरे पर्यवस्यन्ति । अतः ईश्वरोपदेशभूताः वेदा एव श्रेष्ठं प्रमाणम्[1] । शब्दमूलकाः वेदाः, इत्यस्माद्धेतोः वल्लभाचार्याः शब्दमेव एकमात्रं प्रमाणं स्वीचक्रिरे । तथा च शब्देऽपि अलौकिकार्थज्ञापकान् शब्दानेव प्रमाणमभिमेनिरे[2] । एतानेव वल्लभाचार्याः स्वतःसिद्धप्रमाणरूपेणोद्घोषयामासु, इत्यतः शब्दस्य प्रामाणिकता स्वतःसिद्धनित्यनिरपेक्षरूपेण सिध्यति ।

सृष्टेः समारम्भे हिरण्यगर्भादपि पूर्वमन्तर्यामिनः संकल्पमात्रेण स्वाप्निकपदार्थवत् वेदाः केवलं प्रतिभामात्रेणैव अनुभूताः । ईश्वरः सर्वज्ञत्वात् आत्मवत् निर्माति[3] । स्वकीये तत्त्वदीपनिबन्धे नामके ग्रन्थे वल्लभाचार्याः महाभागाः वेदान् , भगवतः श्रीकृष्णचन्द्रस्य वचन-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ३४.

२. शब्द एव प्रमाणम्ः, तत्राप्यलौकिकज्ञापकमेव । तत्स्वतः सिद्धप्रमाणाभावं प्रमाणम् ॥ —तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम् , वल्लभाचार्यः, 'प्रकाश', पृ० २६.

३. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० ४८.

स्वरूपिणीं भगवद्गीताम्, व्याससूत्राणि, समाधिभाषा चेति चतुष्टयं प्रमाणं स्वीचक्रिरे[1]। एतेषु 'वेदाः' इति पदस्य बहुवचनान्तत्वात् वेदानां कर्मज्ञानकाण्डयोः प्रयुक्तानां सर्वेषां पदवाक्यार्थवादपाठादिरूपाणां वाक्यानां समावेशः सञ्जायते। वल्लभाचार्यः वेदानां प्रत्येकमक्षरं प्रमाणमङ्गीकुर्वन्ति। प्रस्थानरत्नाकरे पुरुषोत्तमाचार्या अपि वेदानां वाक्यार्थार्थवादादीन् विस्तरेण वर्णयामासुः[2]। अमी अपि वेदानां पदपदार्थवाक्यादीनि सर्वाण्यपि प्रामाणिकान्यमन्यन्त। अर्थज्ञानपर्यन्तं वेदाध्ययनमावश्यकं, यतो हि केवलं वेदानां पठनमात्रेण मनसि सन्देहः समुत्पद्यते। असत्यां सन्देहोत्पत्तौ ब्रह्मसूत्रैः निर्णीता अर्थाः प्रयोजनशून्याः सम्पत्स्यन्ते।

श्रीमद्भगवद्गीतामपि वल्लभाचार्याः प्रमाणकोटौ प्रानिक्षिपन्। यद्यपि श्रीमद्भगवद्गीता भगवद्वाक्यभूतत्वात् वेदत्वेन परिगणिता, तथाप्येतत् स्मरणीयं यद् भगवान् श्रीकृष्णः भगवद्गीतामर्जुनमेवार्जुनस्याधिकारानुरूपस्मृतिरूपेणोपदिष्टवानिति। स्मृतिरूपोपदिष्टत्वात् भगवद्गीता वेदेभ्यः पृथक् परिगण्यते। ऋषीणां पूर्वचरितानुस्मरणमेव स्मृतिः, इत्यतः स्मृतेर्मूलमनुभवः। ततश्च स्मृतेः प्रमाणम्। इतिहासपुराणाभ्यां वेदानामुपबृंहणं भवति। तेन रामायणमहाभारतपुराणानामपि प्रामाण्यम्। इमे सर्वेपि ग्रन्थाः वेदानां व्याख्यातारः। श्रुतिस्मृतिपुराणेषु यत्र क्वापि परस्परं विरोधः प्रतीयते तत्र तत्रैव श्रुतिर्बलवती। यत्र च स्मृतिपुराणयोः परस्परं विरोधस्तत्र स्मृतिर्बलवती[3]। एवमेव सांख्ययोगयोः न्यायवैशेषिकयोः वाशिष्ठरामायणादिग्रन्थेषु च सम्वाद्यंशस्यैव प्रामाण्यम्।

---

१. वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्॥
—तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम्, वल्लभाचार्यः, कारिका ७.

२. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० २७–१०३.

३. श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते।
तत्र श्रौतं बलिष्ठं स्यात् तयोर्द्वैधे स्मृतिर्वरा॥
—प्रस्थानरत्नाकरः पुरुषोत्तमः, पृ० १०४.

तन्त्रमपि श्रुतेरविरोधेन प्रमाणकोटौ परिगण्यते। प्रत्यक्षानुमानप्रमाणे शब्दप्रमाणापेक्षया निर्बले स्तः, यतः ईश्वरापेक्षया लौकिकेषु पुरुषेषु अविद्यान्धकारेण अल्पज्ञता भवति। भ्रमप्रमादविप्रलिप्सादीनां लौकिकपुरुषाणां अविद्याजन्यदोषकारिणीभूतत्वात् तेभ्योऽपि हीनतरं प्रामाण्यम्[1]। प्रसिद्धलौकिकार्थज्ञापकाः शब्दाः गौणरूपेण प्रमाणीभूताः। एवमदृष्टार्थवादिनः वक्तुः वाक्यानामप्रमाणकत्वे सत्यपि प्रमेयबलेन प्रामाणिकताङ्गीक्रियते। एवं वेदानामेव सर्वोत्कर्षेण विद्यमानं मूर्धन्यं प्रामाणिकत्वम्। वेदार्थं निर्णेतुं तद्विषयकस्य च विरोधपरिहारसन्देहस्य निराकरणार्थं स्मृतिपुराणमीमांसादीनां प्रमाणत्वं स्वीक्रियते। वेदेष्वपि समुत्पन्ने संशये श्रीमद्भगवद्गीतायाः वाक्यैरेव निर्णयः सम्भाव्यते। श्रीमद्भगवद्गीतायामपि सन्देहे सति व्याससूत्रैः जैमिनिसूत्रैर्वा निर्णयः कर्तव्यः। जैमिनिसूत्रेष्वपि सन्देहे सति श्रीमद्भागवतमहापुराणेन निर्णयः सन्देहः[2]। वल्लभाचार्याः तत्त्वदीपनिबन्धे अमुमेव भावं स्फुटं प्राकटयन् यत् वेदगीताब्रह्मसूत्रश्रीमद्भागवतेषु चतुर्षु प्रमाणेषु प्रत्येकमुत्तरवर्तिप्रमाणं स्वस्वपूर्ववर्त्तिप्रमाणे समुत्पन्ने सन्देहे विशिष्य निवारकं प्रकीर्त्यते[3]। अनेन प्रकारेणानेकं द्वितीयस्मिन् समुत्पन्ने विरोधे योऽर्थः स्वबुद्ध्या प्रतिभासते सोऽर्थाभासः कथ्यते। सत्यार्थाभासे चतुर्षु

---

१. तत्रैव, पृ० १०४.

२. (क) अतो गौणमुख्यभावस्य सत्त्वाद् वेदे सन्देहे भगवद्गीतावाक्यैर्निर्णयः। तत्र सन्देहे व्याससूत्रैः, तदविरुद्धैः जैमिनीयैश्च। तत्रापि सन्देहे श्रीभागवतेन समाधावनुभूय भगवदवतारेण व्यासेनोक्तत्वात्। —प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० १०५.

(ख) श्रीमद्भागवत में भी जो अंश लौकिक रीति से नहीं कहा गया है, वही समाधिभाषा है। लौकिक रीति से कहे गए वाक्य और अन्य के मत के रूप में कहे गए वाक्य समाधिभाषा नहीं है। ये परमतभाषा कहलाते हैं।

३. उत्तरोत्तरं पूर्वपूर्वस्य सन्देहवारकं प्रकर्षेण कीर्त्तितम्। —तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम्, वल्लभाचार्यः, 'प्रकाश', पृ० ३०

प्रमाणेषु यत्रैकवाक्यता, जिज्ञासादशायां तत्रैव प्रमाणिकत्वम्। एतेषु चतुर्णां प्रमाणानामविरोधिप्रमाणमप्यप्रामाणिकं नास्ति। एतेषां विरोधीन्यपि वाक्यानि कस्यामपि दशायां प्रामाणिकतां न भजन्ते। मन्वादीनां वाक्यानि तु वेदाविरुद्धत्वात् प्रमाणम्। [illegible]दिभ्यः कुत्रापि विरोधे सति कुत्राप्यविरोधे सत्यपि वेदाविरुद्धत्वेन हेतुना तेषां प्रामाणिकत्वं नाङ्गीकर्तुं शक्यते। वल्लभाचार्याणां मतेन धर्मस्य विषये श्रुति-स्मृत्योः द्वयोरपि प्रमाणत्वम्, परन्तु भगवत्स्वरूपविषये मनुस्मृत्यादयः तदनुकूलत्वात् प्रमाणम्। विद्वद्दशायां तु समस्तमेव वाङ्मयं वेदतुल्यम्। अतः शाब्दं ज्ञानं शब्दोत्पन्नत्वात् परोक्षनिश्चायकं ज्ञानं कथ्यते। एवं वेदाः, श्रीमद्भगवद्गीता, व्याससूत्राणि, श्रीमद्भागवतञ्च महापुराणमेकार्थ-बोधकत्वात् प्रामाणिकं ज्ञानमुत्पादयन्ति।

पूर्वज्ञानस्योत्पत्तेः पश्चात् नामभेदेन लीलाभेदेन च सर्वेषां वाक्यानां भगवत एव प्रकाशितत्वात् समग्रस्य वाङ्मयस्य प्रामाणिकत्वं सम्पद्यते। भगवानेव एकमात्रं तत्त्वम्, सः नियतरूपेण सर्वत्रैव स्वकी-येनांशेनावतरति[1]। येन केनाप्यंशेन भगवान् यत्र काप्यवतरतीति तत्रैव तस्य पदार्थस्य प्रतीतिः। यथा सर्पः ऋजुरनेकाकारः कुण्डली च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारकं भक्तेच्छया स्फुरतीति सत्यमणुभाष्य-सिद्धान्तः। एवं सर्वेपि शब्दाः सर्वानेवार्थान् प्रत्याययन्ति, सर्वेषां शब्दानां भगवद्वाचकत्वात्। वस्तुतः भगवदिच्छयैकस्मिन् शब्दे एक-स्यैवार्थस्याविर्भावात् प्रत्येकं शब्दविशेषः अर्थविशेषस्यैव वाचकः। अत-एव पुरुषोत्तमाचार्यस्य मतेन शब्दस्यैव बलवत्तमप्रमाणत्वम्। अस्मिन् प्रसङ्गे वल्लभसम्प्रदायानुसारिणो विद्वांसः वेदानां बलवत्तरप्रमाणत्वे वैयाकरणानां शब्दब्रह्मणः सिद्धान्तमेव समाश्रितवन्तः, इति स्फुटमधो-लिखितेन पुरुषोत्तमाचार्यस्य श्लोकेन—

एवं शब्दविचारे ये विशेषास्तेऽत्र बोधिताः।
शेषं व्याकरणाज्ज्ञेयं यतस्तन्मतमादृतम्॥

---

१. अथवा सर्वरूपत्वान्नामलीलाविभेदतः।
विरुद्धांशपरित्यागात् प्रमाणं सर्वमेव हि॥
—तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम्, वल्लभाचार्यः, कारिका ९.

( २ ) *प्रत्यक्षं प्रमाणम्*—वल्लभमतेनेन्द्रियात्मकं प्रमाणमेव प्रत्यक्षं प्रमाणम् । अयमभिसन्धिः—अदुष्टैरिन्द्रियैर्ज्ञायमानं प्रमाणमेव प्रत्यक्षं प्रमाणम् । इन्द्रियाणि षड् भवन्ति चक्षुस्त्वक्घ्राणरसनश्रवणमनोरूपेण । सांख्यशास्त्रे विषयेषु सम्बद्धैरिन्द्रियैरुत्पन्नायाः बुद्धेर्व्यापार एव प्रत्यक्षं प्रमाणं कथ्यते । अनेन व्यापारेण चिच्छक्तेर्बुद्धौ प्रतिबिम्ब एव फलम् । अमुमेव प्रतिबिम्बं सांख्यमतावलम्बिनः पौरुषेयबोधं कथयन्ति । येन नियमितो विषयो निश्चीयते । एवं सांख्यशास्त्रे इन्द्रियमिन्द्रियसन्निकर्षं वा प्रत्यक्षं प्रमाणं कथ्यते[1]। न्यायशास्त्रानुसारेण इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं भवति ( न्यायभाष्यम्, १, १, ४ ) । वस्तुतः सांख्ययोगदर्शने वेदान्तदर्शने चान्तःकरणं वस्तुप्राप्यप्रकाशकारि स्वीक्रियते । इन्द्रियद्वारेण यदा चित्तस्य घटपटादिभिर्वस्तुभिः सह सम्बन्धः सम्पद्यते, तदा चित्तं पदार्थाकारेण परिणमति । एवमेव अर्थाकारपरिणतिचित्तवृत्तिबुद्धिवृत्तिर्वा कथ्यते । अस्यामेव वृत्तौ यदा पुरुषस्य प्रतिबिम्बः प्रतिफलति तदैवार्थावबोधः सञ्जायते । इयमेव बुद्धिवृत्तिः प्रत्यक्षं प्रमाणं कथ्यते । अत्र स्मरणीयं यत्सामान्यतः सांख्यवेदान्तयोः सिद्धान्ते तु चित्ते चैतन्यं प्रतिबिम्बितं मन्यते, न तु वृत्तौ । न्यायवैशेषिकदर्शने तु वस्तुप्राप्यप्रकाशकारि नाङ्गीक्रियते, अपि त्विन्द्रियाण्येव वस्तुप्राप्यप्रकाशकारिणी । इन्द्रियैः प्रत्येकं वस्तुन आकारः मनसि गच्छति । मनसः आत्मनि तदा प्रत्यक्षं भवति । प्रत्यक्षं व्याचक्षाणाः श्रीपुरुषोत्तमचरणाः प्रतिपादितवन्तः यदुद्भूतरूपमेव चक्षुर्गोचरतायोग्यम् । स्पर्शघ्राणप्रभृतयस्तु सर्वेभ्यः इन्द्रियेभ्यः सम्प्राप्ताः प्रत्यक्षविषयाः । तथाहि यदा कोऽपि विषयः नयनगोचरतामागच्छति तदा वृत्तिः तद्रूपाकारं स्वरूपं धत्ते । कस्यापि कार्यस्योत्पत्तेः पूर्वं वस्तुनि यस्याभावः स प्रागभावः कथ्यते । कस्मिन्नपि कार्ये विनष्टे सति यदा तस्य कार्यस्याभावः स ध्वंसाभावः कथ्यते । विनष्टे घटे घटाभावो ध्वंसाभावोऽनन्तः यतः विनष्टो घटः कदापि पुनः घटरूपतां नापद्यते । नैयायिकैः स्वीकृताविमौ प्रागभाव-

1. Sāṁkhya Kārikā, Iśvarakrishna, Ed. T. G. Manikar, 1964, pp. 16-18.

ध्वंसाभावौ समवायिकारणस्यैव अवस्थाविशेषरूपेण वल्लभसम्प्रदाय-परम्परायां स्वीकृतावास्ताम्, यतः कार्याविर्भावानुकूलत्वी दशैव प्रागभावः, कार्यस्थितिप्रतिकूलत्वी दशैव च ध्वंसाभावः[1]। कारणातिरिक्तः नास्ति कोऽपि प्रागभावः। कार्यस्थितिप्रतिकूलकारणावस्थैव प्रध्वंसाभावः। एवमेव नैयायिकैः स्वीकृतमत्यन्ताभावं वल्लभवेदान्तिनस्तिरोभावेऽन्त-र्भावयन्ति। वल्लभवेदान्ते अभावस्य न्यायमतानुमताश्चत्वारः प्रकाराः कारणाविर्भावतिरोभावेष्वेवान्तर्भवन्ति। केवलं प्रत्यक्षग्राहकाणीन्द्रियाणि तद्व्यापारञ्चाङ्गीकरोत्ययं सम्प्रदायः। इन्द्रियाणां विवेचनं पूर्वमेव कृतं मया। साम्प्रतं इन्द्रियाणां व्यापारे दृष्टिनिक्षेपः क्रियते। प्रत्यासत्तिरूपोऽयं व्यापारः लौकिकालौकिकरूपेण द्विविधः।

(क) लौकिको व्यापारः पञ्चधा। (१) लौकिकः संयोगः, (२) लौकिकं तादात्म्यम्, (३) लौकिकं संयुक्ततादात्म्यम्, (४) लौकिकी संयुक्त-विशेषणता, (५) लौकिकं तादात्म्यस्वरूपम्।

(ख) अलौकिको व्यापारः त्रिविधमलौकिकं प्रत्यक्षम्।

(१) सामान्यम्—अनुगताकारप्रतीतिरेव सामान्यम्। सामान्यज्ञानं तद्व्यक्तिज्ञाने उपयुज्यते[2]। सामान्यज्ञानेनैव सामान्यविशिष्टव्यक्तेः प्रत्यक्षं भवति यथा मनुष्यत्वस्य ज्ञानं मनुष्यत्वविशिष्टानां मनुष्याणां प्रत्यक्षं साधयति।

(२) योगजम्—भूतभविष्यातीन्द्रियवस्तूनां साक्षात्कारे उपयोगितां भजते[3]। भगवतः ध्यानादीनामप्यस्मिन्नेव समावेशः।

(३) मायाजम्—अविद्यमानस्य पदार्थस्य बुद्धावुपस्थापनार्थं स्वी-क्रियते।

सांख्यदर्शने इन्द्रियसन्निकर्षजन्यं ज्ञानं सविकल्पकं ज्ञानं कथ्यते।

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० १११.

२. सामान्यमनुगताकारेण तद्व्यक्तिज्ञानं उपयुज्यते। तत्रैव, पृ० ११६,

३. अनागतातीन्द्रियादि वस्तुसाक्षात्कारे। तत्रैव, पृ० ११६.

चक्षुरादीनां भेदेन बुद्धिवृत्त्येदं व्युत्पद्यते। नेत्रनिमीलनक्रियायां बहिर्दृष्टानां पदार्थानां कोऽप्याकारः नेत्रान्तर्गतः प्रतीयते। अयमाकारो बाह्यवस्तुनः कदापि न सम्भाव्यते, यतो बाह्यवस्तुन आश्रयं परित्यज्याकारस्य सत्ता सर्वथासम्भवा। अतः कस्याप्यान्तरस्य वस्तुनः एवाकारेण भाव्यम्। अनेन तर्केण सांख्यमतानुयायिनोऽहंकारसम्बन्धिवृत्तिनामकमेकं स्वतन्त्रं तत्त्वं स्वीकुर्वन्ति[1]। विषयाकारिकायां बुद्धौ गुणाधिक्येन चैतन्यस्य प्रतिबिम्बं प्रतिफलति, येन बुद्धिवृत्तिरुद्भासिता सम्पद्यते। इयमेव वृत्तिः प्रत्यक्षज्ञानरूपेण परिणमते। अतः इन्द्रियसम्पर्केण बुद्धिः विषयाकारं गृह्णाति। व्यापारोऽयं सांख्यमतेन वृत्तिशब्देनाभिधीयते।

मायावादिनोऽद्वैतवेदान्तिनोऽन्तःकरणविशिष्टचैतन्यं प्रमातृत्वेनाङ्गीकृत्य, तस्मिंश्च ज्ञानस्य सूक्ष्मावस्थास्वरूपिणः विषयसंस्कारस्याधानार्थं विषयेन्द्रियसन्निकर्षशक्त्या समुत्पन्नामन्तःकरणस्य परिणामरूपिणीं वृत्तिं प्रतिपादयन्ति।

नैयायिकानां मतेन यदा दृष्टिः कस्मिन्नपि वस्तुनि पतति तदा वस्तुना सह मनसः आत्मनश्च सहयोगेनेन्द्रियसंयोगः संस्थाप्यते। येनेन्द्रियज्ञानमुत्पद्यते। अतः न्यायदर्शने स्वतन्त्ररूपेण वृत्तेः प्रतिपादनं नोपलभ्यते। वस्तुतः नैयायिकानां मतेन नेत्राभ्यां केचन किरणाः बहिर्निःसरन्ति। यैः पदार्थैः सह यदा सन्निकर्षः भवति तदा ज्ञानमुत्पद्यते। येन च भावनाख्यः संस्कारः कमप्यपरमेव गुणमुत्पादयति, यः खलु आत्मनि चरमां स्मृतिं विनाशयितुं क्षमते। अनेन प्रकारेण नैयायिकाः वृत्तिपदार्थस्य स्वतन्त्रां सत्तां चिखण्डयिषन्ति।

साम्प्रतं वल्लभवेदान्तानुमतं सिद्धान्तं ब्रवीमि। बुद्धेर्वृत्तिः संस्काराणामाधानार्थमुत्पद्यते। कथनस्यास्यायमभिप्रायः यत् यदियं बुद्धे-

---

१. (क) प्राप्तार्थप्रकाशलिङ्गाद्वृत्तिसिद्धिः। —सांख्यप्रवचनभाष्यम्,
(सं० दुण्ढिराजशास्त्री, बनारस, १९२८), ५, १०६.

(ख) भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति।
—तत्रैव, ५, १०७.

वृत्तिरेव; पदार्थान्तरं नास्ति, नवाऽन्तःकरणस्य कोऽपि भिन्नः परिणामः, अपितु बुद्धितत्त्वस्यैव कालक्षुभितसत्त्वादिगुणकृतोऽवस्थाविशेषः (प्रस्थानरत्नाकरे, पृ० १२४ )।

अनेन प्रकारेण वल्लभमतेन वृत्तिर्बुद्धेः सावस्था या निश्चितेन कालेन सत्त्वादिगुणस्याधिक्येन उत्पद्यते। विषयाणां संसर्गेण विषयाणामाकारः नेत्रगोलके नेत्रकिरणैः प्रविष्टः सन् एकां विशिष्टां वृत्ति स्थापयति। नेत्रेषु निमीलितेषु सत्स्वपि किरणानां सम्पर्के सति बुद्धौ या वृत्तिः प्रतिष्ठापिता भवति तस्यां सत्त्वगुणः प्रकटीभवति[1]। यद्यपि अयं नानुभवगोचरतामापद्यते तथापि संस्कारेण तन्निश्चीयते। अतएव वृत्तिः बुद्धेरवस्थाविशेष एव। संस्कारश्च उत्पन्नस्य ज्ञानस्य सूक्ष्मावस्थाया नामान्तरम्। बुद्धिः कर्मज्ञानेन्द्रियाणामनुग्राहिका। इयं वृत्तेर्माध्यमेनैव अनुगृह्णाति। अतः इन्द्रियजन्यस्य ज्ञानस्यानेके भेदाः सम्भाव्यन्ते। एवं वल्लभमतानुसारेण, यदा वृत्तेरवस्थाविशेषमात्राङ्गीकारमात्रेणैव कार्यं सिध्यति, तदा सांख्याभिमतस्य अन्तःकरणस्य अतिरिक्तपदार्थस्वीकरणसिद्धान्तोऽप्रामाणिकत्वात् खण्डितो भवति।

अस्मिन् सन्दर्भे ध्येयमास्ते यत् भगवत्साक्षात्कारसम्बन्धे प्रत्यक्षस्येयं प्रणाली नार्थक्रियाकारिणी। यतः भगवत्साक्षात्कारस्तु प्रमेयज्ञानेन भवति। कठोपनिषदि भगवत्साक्षात्कारविषयिणी या प्रणाली अस्माकं दृष्टिपथमवतरति तस्यामात्मोपलब्धेः सर्वेषां साधनान्तराणामुपलक्षणेन विधिना निरासीकृते सति वरणमेव तल्लाभसिद्धिसाध्यमिति सर्वथा सुविदितमौपनिषदानां विद्वद्वराणाम्[2]। अत्र वरणशब्दस्य अनुग्रह

---

१. स एवं मायिक आकारो नयनकिरणेषु नेत्रमुद्रणे प्रत्यावृत्तेषु गोलकान्तरानुभूयते। एवमेवेन्द्रियान्तरेऽपि वृत्तिर्ज्ञातव्या।

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १२५.

२. नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्॥
—The Kasha upaniṣad, २, २३ ( Ed. E. Raer, The twelve Principal Upanishads Vol. 1, Adyar, 1931 )

एवार्थः । अनुग्रहश्चैकः स्वतन्त्रो धर्मः, केवलं फलदानस्य इच्छामात्रं नास्ति। अनुग्रह एव भक्तेर्बीजम्। भगवतोऽवताररूपेण साक्षात्कारस्तु सामान्येच्छाशक्त्यापि सम्भाव्यते। किन्तु तत्राप्यनेकधा दर्शनं भवति। यस्य मनसि यादृशी भावना स तदेव रूपं साक्षात्करोति[1]। एवं भक्त्या सामान्येच्छाशक्त्या वोभयतः भगवत्साक्षात्कारः प्रमेयज्ञानबलेनैव सम्पद्यते। *साधनेन भगवद्दर्शनज्ञानाहंकारस्तु केवलमज्ञानमात्रम्*। एतेन स्पष्टं सम्पद्यते यत् प्रत्यक्षप्रमाणविवेचनसम्बन्धे वल्लभवेदान्तप्रस्थाने सांख्यदर्शनस्य प्राधान्येन परिलक्षितेऽपि प्रभावे वल्लभवेदान्तस्य स्वकीया स्वतन्त्रा मान्यता विद्यते। सोऽयं प्रत्यक्षप्रमाणसंक्षेपः ।

( २ ) *अनुमानं प्रमाणम्*—अनुमानप्रमाणस्य विपये पुरुपोत्तमपादाः प्रस्थानरत्नाकरस्य प्रारम्भ एव सत्यं प्रतिजानन्ति। यदनुमानप्रमाणविषये नास्ति वल्लभवेदान्तानुयायिनामस्माकं किञ्चिदपि विशिष्टं वक्तव्यम्। शास्त्रान्तरेषु प्रतिपादितं पदार्थमेव स्वकीयया विशिष्टया शैल्या केवलं बालबोधाय निरूप्यते[2]।

वल्लभवेदान्ते अनुमानस्य लक्षणं न्यायमतानुसार्येवाङ्गीकृतमास्ते। न्यायदर्शनवत् वल्लभमतेनापि अनुमितिरेव अनुमानस्य कारणम्। ज्ञानस्य करणमेवानुमितिः। कारणभूतज्ञानमेव व्याप्तिः। यदि केचन

---

१. मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनाम्
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः॥
—श्रीमद्भागवतमहापुराणम्, १०।४३।१७

२. एवं विशेषबोधाय प्रत्यक्षं विनिरूपितम्।
अनुमानं त्वितरवन्न विशेषोऽस्ति कश्चन॥
तथापि बालबोधाय प्रक्रान्तस्यापि पूर्त्तये।
प्रक्रियां काञ्चिदाश्रित्य तत्स्वरूपं निरूप्यते॥

कथयेयुः यत्तद। 'ज्ञानकरणकं ज्ञानमनुमितिः' इत्यस्य स्थाने 'व्याप्तिकरणकं ज्ञानमनुमितिः' इत्येव लक्षणं कथं न स्वीकुर्युः, इति चेदुत्तरमिदं यत् यावत्कालपर्यन्तं व्याप्तिज्ञानं न सम्पद्यते तावत्कालपर्यन्तमनुमितिरपि नैव भवति। एवं व्याप्तिज्ञानजन्यं ज्ञायमानव्याप्तिजन्यं वा लक्षणं स्वीकर्तु न शक्यते, यतः व्याप्तिज्ञानस्यानुव्यवसाये, विषयज्ञानात्मनां विषयतासम्बन्धेन जन्यत्वात् तादृशव्याप्तिजन्यत्वेन हेतुना दुष्टमेव लक्षणं स्यान्नादुष्टम्।

यदि अनुमितेर्लक्षणं 'परामृश्यमानं लिङ्गम्', 'लिङ्गपरामर्शो' वेत्यङ्गीकुर्मः तदा कस्यापि व्यापारस्य ज्ञानस्य यत् करणं तस्य ज्ञानमेवानुमितिः इत्यर्थः फलितः स्यात् ; तदेवं व्याप्तिज्ञानस्य साध्यज्ञानस्य हेतुज्ञानादीनाञ्च करणत्वेऽपि नास्ति कोऽपि दोषः व्यापारपदघटितत्वात् लक्षणस्य। व्यापारो हि नाम 'तज्जन्यत्वे सति तज्जन्यजनकः'। व्याप्तिविशिष्टः सन् यः पक्षे तिष्ठति स एव हेतुः। सैव पक्षता या आहार्यानाहार्ययोः संशयितयोः विपययोः एकं सांदिग्धं विषयं साधयति। एवं कस्यापि विषयस्य सत्यां सिसाधयिषायामपि आहार्यसंशयस्य वैषम्येण सति साध्यनिश्चये नास्ति कोऽपि दोषः।

साम्प्रतं वल्लभदर्शनानुसारिण्याः व्याप्तेः लक्षणं विचार्यते। हेतोः साध्येन सह अव्यभिचारेण सामानाधिकरण्यमेव व्याप्तिः। अव्यभिचारपदस्यायमर्थः—यत्र यत्र हेतुस्तत्र तत्र साध्यं, यत्र यत्र साध्याभावस्तत्र तत्र हेत्वभावः। अयमेव नियमोऽव्यभिचारपदभाक् भवति। अव्यभिचारेण युक्तत्वमेवाव्यभिचरितत्वम्। यत् साध्यं साधयति स हेतुः। यत् साध्यते तत् साध्यम्। हेतुसाध्ययोः एकस्मिन्नेवाधिकरणे वृत्तिरेव सामान्याधिकरण्यं कथ्यते। अनेन प्रकारेणाव्यभिचारेण विशिष्टहेतुसाध्ययोरेकाधिकरणवृत्तितैव व्याप्तिः कथ्यते।

प्रस्थानरत्नाकरकारस्य पुरुषोत्तमस्येदं व्याप्तिलक्षणं सांख्यप्रवचनसूत्रस्याधारमवलम्बते। सांख्यप्रवचनभाष्ये व्याप्तेर्लक्षणमिदं 'नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः' (५, २९)। साध्यसाधनयोः द्वयोरपि साधनस्य साध्येन सह नियतोऽव्यभिचरितः सहचारसम्बन्धो व्याप्तिरित्यर्थः। अस्मिन् प्रसङ्गे श्रीपुरुषोत्तमाचार्यस्य अधोलिखितं

वचो ध्येयमास्ते 'नैयायदर्शनादौ लक्षणाभावादास्तिकशास्त्रगतत्वा-दविरुद्धमिदमेव लक्षणमस्माभिरादृतमिति'। इदं वचः साधयति यद्यपि न्यायदर्शने व्याप्तेः किमपि लक्षणमभविष्यत् तर्हि वल्लभवेदान्तिनस्त-देवाग्रहीष्यन्। अनेन प्रकारेण वल्लभवेदान्तस्यैकस्यां विशिष्टपरम्परायां विशिष्याग्रहः प्रमाणीभवति। एतत्तु नैकशो दृष्टचरमस्माभिः यत् वल्लभवेदान्तपरम्परा नैयायिकानां मते स्थाने-स्थाने विप्रतिपद्यते, स्थाने-स्थाने च स्फुटं न्यायमतं खण्डयति। प्रस्तुतप्रसङ्गे वयमवलो-कयामः यत् 'पर्वतो वह्निमान्' इत्यस्मिन् वाक्ये धूमनिष्ठाऽव्यभिचार-विशिष्टवह्निसामानाधिकरण्येन व्याप्तेः लक्षणस्य समन्वयः सम्पद्यते। फलतः पुरुषोत्तमपादाः नैयायिकानामेव परिष्कृतमिदं लक्षणं स्वी-चक्रिरे--'हेतुमन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः'[1]। अयमाशयः, 'पर्वतो वह्निमान्' इत्यस्मिन् वाक्ये हेतुर्धूमः, तत्सामाना-धिकरण्योऽत्यन्ताभावः घटाभावः, तस्याप्रतियोगी वह्निः, तत्सामाना-धिकरण्यं धूमे, इति लक्षणसमन्वयः। अनेन स्फुटं प्रतिपद्यते चेतः यदनन्यगतिकतया पुरुषोत्तमचरणाः नैयायिकानामेव लक्षणं व्याप्तेरङ्ग-गीकृतवन्तः। तेषां मतेन द्विविधमनुमानम्।

( क ) *केवलव्यतिरेकि*— केवलव्यतिरेकिनामकमनुमानं तदस्ति यस्मिन् हेतोः साध्येन सह व्याप्तिर्नोपलभ्यते। केवलं साध्या-भावेन सह हेत्वभावस्य व्याप्तिः संगच्छते। तद्विशिष्टहेतुना यदनुमानं विधीयते तदेव केवलव्यतिरेकीति। एवं केवलव्यतिरेकी हेतुः व्यतिरेक-व्याप्तिविशिष्टः सम्पद्यते। प्रस्थानरत्नाकरे प्रथमस्यास्य भेदस्योदाहर-णमिदं—'यथा पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात्'। अस्मिन् अनुमाने व्यतिरेकव्याप्तिः सम्भाव्यते, अन्वयव्याप्तिः कदापि साधयितुं न शक्यते दृष्टान्ताभावात्। अनुमानस्यायमाकारः—'पृथिवी पृथिवीतर-द्रव्यभिन्ना पृथ्वीत्वात्, यत्र यत्र पृथिवीतरद्रव्याभिन्नत्वं तत्र तत्र न पृथिवीत्व, यथा जलम्।

( ख ) *अन्वयव्यतिरेकि*—द्वितीयस्मिन्नन्वयव्यतिरेकिन्यनुमाने हेतु-हेतुसाध्ययोरन्वयव्याप्तिः साध्याभावहेत्वभावयोश्च व्यतिरेकव्याप्तिरित्यु-

भयथा व्याप्तिरुपलभ्यते । अयमभिसन्धिः, साधनोपस्थितौ साध्य-मप्युपतिष्ठते । अनुपस्थिते साध्ये साधनमप्यनुपस्थितं भवति ।

( अ ) *अन्वयव्याप्तिः*—पर्वतो वह्निमान् धूमवत्त्वात्, यो यो धूमवान् स स वह्निमान् यथा महानसः, पर्वतोऽपि धूमवानित्यतो वह्निमान् ।

( आ ) *व्यतिरेकव्याप्तिः*—पर्वतो वह्निमान् धूमवत्त्वात्, यो यो धूमवान् न भवति स स वह्निमानपि न भवति यथा जलह्रदः । पर्वतो न तथा, अतो वह्निमान् ।

इयमनुमानद्वयी स्वार्थपरार्थानुमानभेदात् द्विधा । तदेव स्वार्था-नुमानं यद् वयं स्वज्ञानाय प्रयुञ्जामहे । तत्परार्थानुमानं यदा परज्ञानार्थ-मनुमानं विधीयते । एतदेव पुरुषोत्तमा न्यायपूर्वकमनुमानमुद्घोषित-वन्तः । न्यायो हि नाम पञ्चावयवबोधकं वाक्यम् । इमानि वाक्यानि न्यायदर्शने सांख्यदर्शने च पञ्चसंख्याकानि सर्वतः सुप्रसिद्धानि दार्शनिकेषु । *यथा हि*—

( क ) *प्रतिज्ञावाक्यम्*—साध्यविशिष्टपक्षप्रतिपादकं वाक्यं प्रतिज्ञा-वाक्यम् । यथा पर्वतो वह्निमानिति वाक्यम् । अस्मिन् वाक्ये पर्वतः पक्षः, वह्निः साध्यः ।

( ख ) *हेतुवाक्यम्*—व्याप्यस्य धूमस्य प्रतिपादकं वचो हेतुः । हेतु-वाक्यं सर्वदा पञ्चम्यन्तं भवति, यथा धूमवत्त्वादिति पञ्चम्यन्तं पदम् ।

( ग ) *उदाहरणवाक्यम्*—व्याप्तिविशिष्टदृष्टान्तवाक्यमुदाहरणम् । यदा अन्वयव्याप्तौ यो यो धूमवान् स स वह्निमानिति । व्यतिरेकव्याप्तौ च यो वह्निमान्नास्ति स धूमवानपि नास्ति यथा जलह्रदः ।

( घ ) *उपनयवाक्यम्*—पक्षे व्याप्तिविशिष्टोपसंहारकं वाक्यमुपनयः, यथा वह्निव्याप्यधूमवानयं पर्वतः । व्यतिरेकव्याप्तौ वा वह्न्यभावव्याप-कीभूताभावप्रतियोगिधूमवान् पर्वतः ।

( ङ ) *निगमनवाक्यम्*—पक्षे साध्योपसंहारवाक्यं निगमनं, यथा अतएव 'पर्वतोऽपि वह्निमान्' ।

बौद्धनैयायिकैः न्यायस्य स्वरूपरूपेण स्वीकृता अनुमानस्य प्रतिज्ञो-दाहरणात्मिकावयवद्वयी शुद्धाद्वैतवेदान्तिभिरत्यन्तक्लिष्टत्वादस्वीकृता । बौद्धनैयायिकैरनुमानस्य केवलमवयवद्वयमेव स्वीक्रियते इति तु विदि-

तमेव समेषां भारतीयदर्शनशास्त्रविशारदानाम्। यथा हि 'यत् सत् तत् क्षणिकम् यथा घटः', इति बौद्धानां क्षणिकवादः केन वा न ज्ञायते भारतीयदर्शनशास्त्रानुरागिणा विद्वत्तल्लजेन।

शबरभाष्ये मीमांसका अनुमानस्योदाहरणोपनयनिगमनानीति त्रीनवयवानङ्गीचक्रुः। यथा 'यत् कर्म तत् फलवत्, यागोऽपि कर्म तेनापि फलवता भाव्यम्'। श्लोकवार्तिके प्रतिज्ञाहेतूदाहरणानीति अवयवत्रयी स्वीकृता विद्यते। इयमेव सांख्यकारिकायाः माठरवृत्तावपि (पञ्चम-कारिकायाम्) स्वीकृता विद्यते। प्रभाकरमतानुयायी शालिकनाथः स्वकीयायां प्रकरणपञ्चिकायां (पृ० ८३-८५) कुमारिलभट्टमतानुयायी पार्थसारथिमिश्रश्च श्लोकवार्तिकस्य टीकायां (अनुमानखण्डे, ५४) इमानेव त्रीनवयवान् स्वीकृतवन्तः।

श्रीपुरुषोत्तमप्रणीते प्रस्थानरत्नाकरे सांख्यदर्शनस्य पार्थसारथि-मिश्रमहाभागस्य च पर्याप्तप्रभावः स्थाने स्थाने परिलक्ष्यते (इदमेव च युक्तम्, प्रस्थानरत्नाकरे, पृ० १४१)। स्वमतस्य युक्तियुक्ततां द्रढ-यितुं पुरुषोत्तमपादाः श्रीमद्भागवतमहापुराणस्यापि तदनुकूलं प्रमाणमु-पस्थापितवन्तः—सूर्यादिग्रहाणां गतेरनुमानं कथ कुर्यास्मेति प्रश्ने श्रीमद्भागवतमहापुराणे प्रतिपादितमास्ते यद्यथा कुम्भकारस्य चक्रे स्थितायाश्चक्रेण सह चक्रवद् भ्रमन्त्याः पिपीलिकायाः गतिर्भवति, यतो हि भिन्नभिन्नसमये भिन्नभिन्नस्थाने पिपीलिका दृष्टिपथमवतरति। तथैव नक्षत्रराशिचक्राभ्यामुपलक्षितेन कालचक्रेण ध्रुवं मेरुञ्च दक्षिणतः संस्थापितवतां सूर्यादिग्रहाणां गतिरपि तेभ्यो भिद्यते। यतो हीमे कालभेदाद्भिन्नभिन्नराशिषु भिन्नभिन्ननक्षत्रेषु चावलोक्यन्ते[1]। अस्मिन् अनुमानवाक्ये श्रीमद्भागवतमहापुराणेऽपि केवलं त्रयाणामेवावयवानां आश्रयेणानुमानं कृतं विद्यते। प्रसङ्गवशात् पुरुषोत्तमः असिद्धविरुद्ध-

---

१. श्रीमद्भागवतमहापुराणम्, ५।२२।२.

प्रस्थानरत्नाकर में उद्धृत श्रीमद्भागवत के इस अंश में वर्तमान संस्करणों से तीन पाठभेद प्राप्त होते हैं। (क) दो बार 'अन्यैव' के स्थान पर 'अस्त्येव' और 'परिधावता' के स्थान पर 'परिचरता'।—ले०

बाधितसव्यभिचारसत्प्रतिपक्षहेत्वाभासानामपि सामान्यं सूक्ष्मं च विवेचनं न्यायशास्त्रपरम्परानुसारि प्रणीतानि।

वल्लभवेदान्तस्येयं मान्यता यद् वेदानुप्रामाणिकेन जीवनेन लोके भगवदन्वेषणार्थं भगवद्विषयकव्यवहारार्थं वा अनुमानप्रमाणं प्रयोक्तव्यम्। यथोक्तं श्रीमद्भागवते 'अस्मिन् मनुष्यदेहे यैर्हेतुभिश्चित्तस्यैकाग्रतायाः, बुद्धेः तीक्ष्णतायाः पुरुषस्य बुद्धेर्वा अनुमानं विधीयते, तैर्हेतुभिरग्राह्यमहङ्कारादिविपर्यासनन्तं सर्वप्रवर्तकं नित्यशुद्धबुद्धमुक्तस्वरूपं परमेश्वरमनुभवन्ति'[1]। अनुमानस्य प्रयोगः शुद्धाद्वैतवेदान्ते प्रसङ्गेऽस्मिन् यथा कृतः तथोपस्थाप्यते। 'श्रीकृष्णः ईश्वरः, अवस्था साधनविरुद्धगोवर्धनोद्धारणादिकार्यकर्तृत्वात्, यन्नैवं तन्नैवं, इतरवत्। यदेवं तदेवं रामादिवत्' (प्रस्थानरत्नाकरः, पृ० १४६)। अन्वयव्यतिरेकव्याप्तिविशिष्टेनानेनोदाहरणेनेश्वरमन्वेष्टुमनुमानस्य परमोपयोगिता स्फुटं संसाधितेत्यनुमानचर्चा। अधुना उपमानार्थापत्त्यैतिह्यादिप्रमाणानां खण्डनं विधीयते वल्लभवेदान्तधिया।

*उपमानप्रमाणस्य खण्डनम्*—शुद्धाद्वैतवादिनः नैयायिकैः स्वीकृतमुपमानं प्रमाणं खण्डयन्ति। यथा प्रस्थानरत्नाकरे 'उपमानं तु न मानान्तरम्', (पृ० १४८) न्यायशास्त्रानुसारेणोपमानमप्येकं स्वतन्त्रं प्रमाणम्। गोसदृशपिण्डज्ञानार्थमिदमङ्गीक्रियते। इदं प्रमाणमतिदेशवाक्यस्मरणसहकृतं सम्पद्यते। अतः प्राचीनाः नैयायिकाः अतिदेशवाक्यार्थज्ञानमुपमानस्य कारणं मन्वते, सादृश्यज्ञानञ्च सहकारिकारणं स्वीकुर्वन्ति। अतिदेशस्यायमर्थः—एकस्य पदार्थस्य धर्माणामपरस्मिन् पदार्थे प्रयोगायादेशोऽतिदेशः। यथा कोऽपि पुरुषः गवयं नाद्राक्षीत्। केवलं केनाप्यारण्यकेनाश्रावि गोसदृशो गवयः इति। एवं गोधर्माणां गवये अतिदेशकरणात्मकं वाक्यं संश्रुत्य यदायमरण्ये गच्छति तदातिदेशवाक्यं स्मरति, तदा गोसदृशस्य पिण्डस्य ज्ञानं करोति। इदं ज्ञानं

---

१. अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम्।
गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः॥
—श्रीमद्भागवतमहापुराणम्, ११।७।२३.

उपमानप्रमाणेन निष्पद्यते। अनेन प्रकारेणातिदेशवाक्यार्थस्मृतिर्गवयपदवाच्यताज्ञानञ्चोभयमप्युपमितेः कारणं स्वीक्रियते[1]। उपमानप्रमाणस्य खण्डनेच्छया शुद्धाद्वैतवादिनः कथयन्ति यत् सादृश्यातिदेशवाक्यार्थस्मरणेन सह नेत्रेन्द्रियेणैव संज्ञासंज्ञिज्ञानमुपलभ्यते, अतः सादृश्यज्ञानस्य स्वतन्त्रप्रमाणत्वेन स्वीकरणं न युक्तिसंगतम्, अन्यथा योग्यानुपलब्धिरपि प्रमाणान्तरेण स्वीकरणीया सम्पत्स्यते। एवमुपमानप्रमाणं प्रत्यक्षप्रमाणे एवान्तर्भवति। यदि केचन कथयेयुः यदुपमानस्य प्रत्यक्षे अन्तर्भावकरणेनोपमानस्य परीक्षता विनंक्ष्यति तदेष्टापत्तिरेव शुद्धाद्वैतवादिनाम्। आहोस्वित् उपमानस्य प्रमाणस्य मानसप्रत्यक्षे अन्तर्भावः क्रियताम्, यतः अतिदेशवाक्येन लक्षणात् पूर्वमेव ज्ञातस्य पदार्थस्फुरणमात्रेण स्फुरितस्य च सादृश्यस्य संस्कारद्वारेण सञ्जातायां शब्दाभिव्यक्तौ वाक्यसहकारेणैव मानसिकस्य गवयपदवाच्यपदार्थस्य संज्ञासंज्ञिपरिच्छेदात्मकं मानसिकं ज्ञानं भविष्यति। प्रसिद्धपदबोधयितृवाक्यस्य स्मरणकालसमकालमेव मानसिकं ज्ञानं सम्पत्स्यते यथा मधुकरादिपदानां शक्तिग्रहोपपत्तिः। तदनन्तरमेवैतत्पदवाच्योऽयं पदार्थः, तमहं जानामि, इत्येतादृशमनुव्यवसायात्मकं ज्ञानमुत्पद्यते यत् मानसिकं प्रत्यक्षं विनिश्चिनोति[2]।

नैयायिकाः सादृश्यं लक्षयन्ति 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम्'[3]। सादृश्यस्येदं लक्षणमपि शुद्धाद्वैतवादिनः नाङ्गीकुर्वन्ति। एतल्लक्षणंचिखण्डयिषया च निगदन्ति यत् एकस्य धर्मस्य उपस्थितिमात्रेणापि सदृशबुद्धिः सेत्स्यति। 'भूयः' इति पदं सर्वथा निरर्थकम्। यदि केचन कथयेयुः यत् भूयःपदाभावे केवलश्यामत्वमात्रस्य धर्मस्य साधर्म्येण गजमशकयोः सादृश्यप्रतीतिः स्यात्, तदा वल्लभवेदान्तिनः कथयन्ति यत् श्यामत्वशरीरित्वजङ्गमत्वेतित्रयाणां धर्माणां गजमशकयोः विद्यमानत्वेन भूयःपदोपस्थितावपि समो दोषः। सादृश्यप्रतीतिस्तु

---

१. तर्कभाषा ( सं. आचार्यविश्वेश्वरः ), पृ० १०६–७

२. प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० १४८.

३. न्यायसिद्धान्तमुक्तावली, (सं० श्रीकृष्णवल्लभाचार्यः) बनारस, १९४०, पृ० ३१

भविष्यत्येव। यदि केचन पुनः कथयेयुः यत् तेषामपेक्षयापि अधिकानां धर्माणां सादृश्ये तात्पर्यमस्माकं तदा तेभ्योऽप्यधिकाः धर्माः कुतो न स्वीक्रियेरन्। एवमनवस्थादोषप्रसङ्गः स्यात्। अतः नैयायिकानां लक्षणं नातिरम्यम् (प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ० १४६)। सादृश्यं तु एकस्य धर्मस्योपस्थित्यापि भवत्येव यथा 'सर्वं गङ्गासमं तोयम्, सर्वे व्याससमाः द्विजाः' (तत्रैव, पृ० १४६)।

*स्वतन्त्रप्रमाणरूपत्वेन अर्थापत्तेः खण्डनम्*—उपमानप्रमाणस्य खण्डनवदर्थापत्तेरपि खण्डनं कुर्वन्ति शुद्धाद्वैतवादिनो विद्वांसः। अस्मिन् प्रसङ्गे पुरुषोत्तमचरणैः स्वकीये प्रस्थानरत्नाकरे मीमांसकानां वेदान्तिनां नैयायिकानाञ्च युक्तीनामत्यन्तमेव रोचक ऊहापोहः कृतः। तत्र दिङ्मात्रं विचार्यते। मीमांसकानां मतेन अर्थापत्तिस्तावत् प्रत्यक्षेण शब्दप्रमाणेन वा ज्ञातस्यार्थस्य यदार्थान्तरं विनोपपत्तिः न सिद्ध्यति तदा अर्थान्तरपरिकल्पनमात्रम्। यदा कश्चित् कथयेत् 'देवदत्तो जीवति किन्तु नास्ति' अस्मिन् वाक्ये जीवनस्य गृहे अभावस्य च परस्परं विरुद्धत्वादर्थोऽनुपपन्नः, तदा देवदत्तस्य गृहात् बहिरेवोपस्थितिपरिकल्पनमेवार्थापत्तिः कथ्यते। नैयायिकास्त्वर्थापत्तिं केवलव्यतिरेकिण्यनुमानेऽन्तर्भाव्यार्थापत्तिं स्वतन्त्रं प्रमाणं नाङ्गीकुर्वन्ति। यथाहि उपर्युक्तोदाहरणवाक्ये नैयायिका अनुमानं कुर्वन्ति "देवदत्तः गृहाद् बहिः प्राणान् धारयति, अपि गृहेऽभावात्"।

वेदान्तशास्त्रे उपपाद्यस्य ज्ञानेन उपपादकस्य परिकल्पनमेवार्थापत्तिः। उपपाद्यं हि कार्यं, उपपादकं कारणम्, परिकल्पनञ्च ज्ञानमिति स्मरणीयम्। यन विना यद् वस्त्वनुपपन्नमसिद्धं तिष्ठेत् तदुपपाद्यं ज्ञानं कथ्यते, यच्च कारणमस्ति। यस्याभावे यस्यानुपपत्तिः तदुपपादकं ज्ञानं कथ्यते, तच्च फलं भवति। यथा हि 'पीनो देवदत्तः दिवा न भुङ्क्ते' अस्मिन् वाक्ये दिवा भोजनेन पीनत्वमसिद्धमित्यतः पीनत्वमुपपाद्यम्, रात्रिभोजनाभावे पीनत्वस्यानुपपन्नत्वात् रात्रिभोजनमुपपादकं भवति। एवं रात्रिभोजनात्मकज्ञानाय अर्थस्यापत्तिः कल्पनैवार्थापत्तिः। अत्र 'अर्थस्यापत्तिः' इति षष्ठीतत्पुरुषमङ्गीकृत्य, 'कल्पनायाः करणे पीनत्वस्य ज्ञाने अर्थापत्तिः कल्पना वा यस्मात्' इति बहुव्रीहिसमासमाश्रित्य

फलकरणयोर्द्वयोरर्थयोस्तस्य प्रयोगमभिमन्यन्ते वेदान्तशास्त्रसमुद्रावगाहिनो विद्वांसः।

वेदान्तसम्मतार्थापत्तिप्रमाणं खण्डयन्तः पुरुषोत्तमचरणाः कथयन्ति यद् वेदान्तसम्मतमतमिदमयुक्तिसङ्गतम्, यतः कल्पना तु केवलं सम्भावनास्वरूपिणी भवति, अतः कल्पनया प्रमितिर्न सम्भाव्ये। उपपाद्यं पीनत्वं तु मेदारोगात् तृणविशेषाभ्यवहरणादोदनक्षीरसंयावबहुघृतसंपृक्तमोदकानां प्रत्यहं पौनः पुन्येन सेवनादेवोत्पद्यते। एतादृशः पीनः पुरुषः यद्येकमासपर्यन्तमपि न भुञ्जीत तदापि पीनत्वं तिष्ठेदेव।

वेदान्तपरिभाषायां प्रतिपादितां दृष्टार्थापत्ति श्रुतार्थापत्ति वा विविच्य पुरुषोत्तमपादाः श्रुतार्थात्तेरप्यभिधानानुपपत्त्यभिहितानुपपत्तिरूपेण वेदान्तपरिभाषानुसारिणं भेदद्वयं व्याचख्युः। शुद्धाद्वैतवेदान्तमतेन वल्लभवेदान्तिनो विद्वांसः प्रसङ्गेऽस्मिन् वेदान्तमतस्य युक्तिसंगतं खण्डनं विधाय सुस्पष्टमेव समुदघोषयन् यत् द्वयोः प्रकारयोरर्थापत्तेरन्तर्भावः प्रत्यक्षप्रमाणे शब्दप्रमाणे वा कर्तुं शक्यते यतः अर्थापत्तिस्तु प्रत्यक्षादिप्रमाणेन ज्ञातस्य पदार्थस्य ज्ञानदार्ढ्याय हेतुमात्रम्, अभ्यासवत् प्रमाणान्तरं नास्ति, यतो हि अर्थापत्तेः स्वतन्त्रप्रमाणाङ्गीकरणे बलवत्तरप्रमाणाभावः।[1] अनेन प्रकारेण करतलामलकवत् सुस्पष्टं सम्पद्यते यत् पुरुषोत्तमपादाः वल्लभवेदान्तिनश्च अर्थापत्तिं स्वतन्त्रं प्रमाणं नाङ्गीकुर्वन्ति, अपि त्वर्थापत्तिं खण्डयन्ति एव। डा० *सुरेन्द्रनाथदासगुप्तामहोदयानां कथनमिदं सत्यं नास्ति यत् पुरुषोत्तमाः पार्थसारथिमिश्रमनुसृत्यार्थापत्तिमङ्गीचक्रिरे।*[2] वल्लभवेदान्ते

---

(१) एवं द्विविधापीयमर्थापत्तिः यथायथं प्रत्यक्षशब्दयोरनुग्राहिका। प्रत्यक्षादिप्रमितार्थज्ञानदार्ढ्यहेतुत्वात्। अभ्यासादिवत्। न तु प्रमाणान्तरम्। तदुगमकस्य बलीयसोऽभावात्। —प्रस्थानरत्नाकरे, पृ. १५२.

(२) 'Purushottam also admits arthāpatti, or implication as seperate pramāṇa, in the manner of Pārthasarathimisra.'

—A History of India Philosophy, S. N. Dasgupata, Vol. IV, P. 345.

स्वतन्त्रप्रमाणरूपेणार्थापत्तिः कुत्रापि नाङ्गीकृतेति भारतीयदर्शनशास्त्र-विशारदैः पण्डितप्रवरैश्चिन्त्यम् ।

*ऐतिह्यादिप्रमाणानां खण्डनम्*—वल्लभवेदान्तानुसारिणो विद्वांसः उपमानार्थापत्तिप्रमाणयोः युक्तियुक्तं खण्डनं विधाय ऐतिह्यसम्भवलोकप्रसिद्धिचेष्टालिपिप्रतिभा अपि स्वतन्त्रप्रमाणेनानङ्गीकुर्वन्तस्तत् खण्डयितुमुपक्रमन्ते । अस्मिन् प्रसङ्गे नूनमाश्चर्यमावहति चेतः यत् श्रीमद्भागवतमहापुराणे ऐतिह्यमपि स्वतन्त्रप्रमाणरूपेण स्वीकृतं विद्यते । वल्लभसम्प्रदायः श्रीमद्भागवते श्रुतमपि श्रीमद्भागवतस्य परां प्रामाणिकतां स्वीकुर्वाणोऽपि ऐतिह्यं खण्डयतीति ऐतिह्यस्य स्वतन्त्रप्रमाणरूपेण खण्डनं पुरुषोत्तमाचार्याणां सर्वतन्त्रस्वतन्त्रां तर्कप्रधानां दृष्टिं साधयति ।[1]

कोऽप्येतादृशः शब्दः किमप्येतादृशं वाक्यं वा यस्य प्रथमः वक्ता नाविदितो भवेत्, तदैतिह्यं प्रमाणम् । यथा कस्मिंश्चिद् ग्रामे प्रसिद्धिरियं प्रसिद्धिमगात् यत् ग्रामवटे कश्चिद् राक्षसः निवसतीति । वल्लभवेदान्तिनां कथनमिदं यदेतादृशानां वचसामशक्यो निर्णयः, अतः नैतिह्यप्रमाणं प्रमाणकोटिमाटीकते । यदि निर्णयः स्वीक्रियेत चेत् निर्णयोऽपि शब्दप्रमाणे एवान्तर्भवेत । सम्भवप्रमाणमपि अनुमानान्तर्गतं सत् स्वतन्त्रं प्रमाणं नास्ति, यथा दशसहस्रान्तर्गताः पञ्चसहस्रशतादिसंख्याः, आढकपरिमाणान्तर्गता कुडवपरिमाणावगतिः, तथैव व्याप्त्यपरपर्यायेणाविनाभावेन हेतुना सम्भवप्रमाणमनुमानप्रमाणान्तर्गतमेव । यथा *लोकप्रसिद्धस्तु* प्रत्यक्षप्रमाणे एवान्तर्भवति, तथैव *चेष्टाऽपि* अनुमानप्रमाणे अन्तर्भवति । *लिपिस्तावत्* शब्दस्य स्मरणाद्धेतोः शब्दप्रमाणेऽन्तर्भवति । 'श्वो मम मित्रमागन्ता' इत्येतादृशं *प्रातिभं ज्ञानम्* । तन्निर्णायकत्वासम्भवत्वात् तस्याप्रामाणिकत्वम् । अतः प्रतिभाप्रमाणमपि लिङ्गस्य आभासमात्रस्वरूपमात्रत्वादप्रामाणिकमेवेति । एवं वल्लभ-

---

(१) प्रस्थानरत्नाकरः, पुरुषोत्तमस्य, पृ०. १५३.

वेदान्ते सांख्यसम्मतानि केवलं त्रीण्येव प्रमाणानि स्वीकृतानि सन्ति। तेष्वपि त्रिषु प्रमाणेषु परमार्थविषये केवलं शब्दप्रमाणस्यैव प्रामाणिकताङ्गीक्रियते।

अनेन प्रकारेणैतत् स्पष्टं सम्पद्यते यत् वल्लभवेदान्ते ज्ञानमीमांसायां ज्ञानस्य दशसंख्याकाः भेदोपभेदाः स्वीकृताः सन्ति। एतेषां भेदानां परिज्ञानाय त्रीण्येव प्रमाणान्यङ्गीकृतानि। अस्मिन् सन्दर्भे स्मरणीयं यद् वल्लभवेदान्तिनः श्रीमद्भागवतस्य महापुराणस्य प्रामाणिकतायाः मूर्धन्यतामङ्गीकुर्वन्तोऽपि श्रीमद्भागवते महापुराणे स्वीकृतानां प्रत्यक्षानुमानशब्दैतिह्याख्यानां चतुर्णां प्रमाणानामाधारेण प्रमाणमीमांसां समारभ्य शुद्धाद्वैतसिद्धान्तपक्षे श्रीमद्भागवतानुमतमैतिह्यमपि खण्डयन्ति, त्रीण्येव च प्रमाणानि सिद्धान्तपक्षे स्वीकुर्वन्ति। एवमेव सांख्यमतानुयायिनोऽपि शुद्धाद्वैतवादिनः नैकत्र सांख्यानुमतस्य सिद्धान्तस्यापि नान्धानुकरणं विदधति। वल्लभवेदान्ताचार्याणामियं दृष्टिः तेषां स्वकीयां स्वतन्त्रां विचारसरणिं प्रकटयति। प्रमाणमीमांसायाः सम्बन्धे वल्लभवेदान्तपरम्परायाः स्वीयायाः मौलिकपद्धतेः संरक्षणे अयमेव हेतुः। ॐ श्रीकृष्णः शरणम्॥



# वसुमतीपरिणयम्

( ऐतिहासिकं नाटकम् )

*डॉ० रामजी उपाध्यायः*

वसुमती-परिणयस्य प्रणेता जगन्नाथः तञ्जौराधिपस्य प्रताप-सिंहस्य सभां समलङ्कृतवान्[1] । तस्य पिता बालकृष्णो राजमन्त्री बभूव । जगन्नाथस्य गुरुः कामेश्वर आसीत् । अयं कविरष्टादशशतकस्य मध्ये भागे समवर्तत ।

जगन्नाथः प्रतापसिंहस्यानुज्ञया काशी-यात्रामनुष्ठितवान् । काशीतः प्रत्यावर्तनकाले स पुण्यपत्तने पेशवापदमधिष्ठितं बालाजी-बाजीरावं समसेवत् । तस्येङ्गितमनुसृत्य कविवरो वसुमती-परिणयं नाटकं प्रणि-नाय । नाटकेऽस्मिन् राज्ञां हेयोपादेयगुणावगुणानामुपस्थापनं समी-हितं कविवरस्येति किंचिन्नावीन्यमेव[2] । अनेन विधिना स तत्का-लिकनृपाणां मार्गशोधनं विधातुं समुत्सुको बभूवेति प्रतिभाति ।

पुण्यपत्तनं १७५० ई० वर्षे राजधानी बभूव पेशवाधिपानाम् । परवर्ति-काले तेषां प्रभुत्वमुत्तरभारते शनैः शनैः समवर्धत । दिल्लीनगरे तेषां सर्वोत्कृष्टप्रतिष्ठा १७५८ ई० संवत्सरे बभूव[3] । अस्मिन् वर्षे तेषामुत्तर-भारते विजयसाधको रघुनाथरावो दक्षिणदेशं प्रत्यावर्तत । स १७५८ ई० संवत्सरस्य भाद्रमासे पुण्यपत्तनमागच्छत् । तस्य पुण्यपत्तन आगमनस्य चर्चा नाटकेऽस्मिन् कृता । तद्यथा नायकस्य भ्राता दिल्लीतः पुण्य-पत्तनमायातीति । १७६१ ई० वर्षे बालाजि-बाजीरावो दिवं गतः । अस्यां स्थितौ नाटकस्य रचना १७५८ वर्षे बभूवेति सम्भाव्यते ।

---

१. हस्तलिखितमिदं नाटकं पुण्यपत्तने भण्डारकर-ओरियण्टल-रिसर्च-इन्स्टीट्यूट संस्थायां विराजते ।

२. 'तन्निदेशतः प्रणीतनिखिलराजोपादेयहेयगुणावगुणविशेषवर्णनचमत्कृ-तमिदं प्रचारयितव्यमिति विविधदेशसंचार-संजातसौहृदस्य मम हस्ते समर्पितम् ।' इति प्रस्तावनायां सूत्रधारः ।

३. अस्मिन् संवत्सरे पेशवाधिपस्य प्रभावः सिन्धुतः दक्षिणसागरं यावत् व्यजृम्भत ।

नाटकेऽस्मिन् नायकादीनां नामानि साङ्केतिकविधिना परिचेयानि। तथा नायको गुणभूषणस्तु स्वयं बालाजीरावः एव। गुणभूषणस्य भ्राता विजयवर्मा दिल्लीं यावत् प्रयाणं कृत्वा तत्र सर्वोच्चप्रभुसत्तामात्मसादकरोदिति बालाजीवाजिरावस्य भ्रातुः रघुनाथरावस्य कृतित्वेन संगच्छते।

मिथिलाराजस्य मित्रवर्मणः पत्रं सम्प्राप्य बाजीरावो रघुनाथरावं तस्य रक्षार्थं प्राहिणोदित्यस्मिन् विषये इतिहासो मौनमालम्बते एव[1]। मालवाधिपत्यं वाजीरावस्याजीवनं मनीषितं बभूवेति कवेः कल्पस्याधारः प्रतिभाति।

उपर्युक्तानामैतिहासिकतथ्यानां समर्थनं नाटकस्योत्तरार्धकथायां दृश्यते। तथा हि—

तावद्यवनेश्वरेण दुर्जयेन प्रभूतपृतनापरिवृतेन पाल्यमानो मालवाधिपतिः ससैन्यो दाहयन् ग्रामटिका, लुण्टापयन् जानपदान्, शिथिलीकुर्वन् यन्त्राघातैर्दुर्गाणि, निजदेशसीमामनुप्राप्त इत्युपश्रुत्य सरोषो मित्रवर्मा नृपतिः सन्नद्धसैनिको निर्जगाम। तदानीं च द्विगुणमसमद्बलादपि यवनबलमिति विरचितसूचीमुखव्यूहेन विक्रमवर्मणा सह कुमारः समभिचक्राम। तुमलं युद्धं समवर्तत। अन्तकाले मालवराजो दुर्मदो गृहीतः। दुर्जयो यवनेश्वरोऽपि निहतोऽस्मिन् युद्धे।

गुणभूषणस्ततः पश्चात् विजयवर्माणं सन्दिशति निदेशोऽयं देवस्य श्रीमति विजयवर्मणि 'यथा वत्स, आनन्दितोऽस्मि नन्दनेनेव संक्रन्दनस्य पाण्डुनन्दनो भवता कुलानन्दनेन।

---

१. मित्रवर्मा मिथिलेश्वरो बालाजि-बाजिरावं निवेदितवान्—मालवाधिपतिर्दुर्मदो नाम क्रियासमभिहारेण मह्यं द्रुह्यतीति। स इदानीं पुनरिन्द्रप्रस्थवासिना महाबलपरिवारेण दुर्जयेन यवनाधिपतिना दत्तावलम्बोऽविलम्बमस्मानभिषिषेणयिषति। ······ सुहृदा भवतात्रभवता प्राप्तकालमाचरिष्यत एव। चतुर्थाङ्कात् प्रागङ्कास्ये।

पञ्चदिवसैर्मिथिलां सम्प्राप्य स दुर्मदं पराजितवान्।

इन्द्रप्रस्थमधिष्ठाय वशे कृत्वा खिलान् नृपान् ।
आयुष्मन् पुनरेवास्मानाहूतो द्रष्टुमर्हति ॥ ४.४४

प्रहितमिदं चाङ्गुलिमुद्रान्तरम् । अनेन तत्रत्यं राजकृत्यं निवर्त्यतामिति ।

'युवराजो विजयवर्मातः परमिन्द्रप्रस्थं प्रति प्रातिष्ठत । इन्द्रप्रस्थेऽपि विजयश्रियंमधिगम्य स पुण्यपत्तनं प्रत्यावर्तत' इति नाटकस्यान्तिमेऽङ्के सूचितम् । तद्यथा,

( प्रविश्य सौक्दिल्लः ) देव, सन्निहितोऽन्तःपुरद्वारि इन्द्रप्रस्थागतो युवराजः ( विजयवर्मा ) ।

अनेन विजयवर्मणो विजयेन गुणभूषणस्य महद् यशः संबभूव । तथा हि राज्ञोवचनं नाटकान्ते वर्तते—

जितोऽसौ दुर्वृत्तः समिति यवनानामधिपति-
र्वशे जज्ञे पृथ्वी चतुरुदधिवेलादलयिता ।
जयत्येकच्छत्रं जगति मम साम्राज्यमधुना
प्रिया चेयं लब्धा प्रथितकुलजाता वसुमती ॥५.३७

नाटकस्य कथावस्तु बालाजि-बाजिरावस्यैतिहासिकमितिवृत्तमनुसरतीति प्रागेवानुमितम् । नाटकस्योपरिलिखितानि वृत्तानि कियन्मात्रं वर्त्तमानेतिहासान्वेषिणां चर्चितमिति बालाजिबाजिरावविषयकं सरदेसाई—गोविन्दसखारामेण कृते ग्रन्थे तत्सम्बन्धि-सन्दर्भेणानुमीयते । तदेव संक्षेपणाधस्तान् प्रदर्श्यते ।

| | |
|---|---|
| बालाजिबाजीरावस्य पेशवापदारोहणम् | १७४० ई० संवत्सरे |
| जयसिंहेन धौलपुरे मिलनम् | १७४१ ,, |
| बाजीरावस्य मालवाधिकारस्य सम्राजा सम्पुष्टिः | १७४१ ,, |
| बाजीरावस्याभियानानि धौलपुरे | १७४१ ई० संवत्सरे |
| बंगदेशे | १७४६ ई० संवत्सरे, |
| विदिशाप्रदेशे | १७४५ ई० संवत्सरे |
| गढा मण्डला चेति द्वयोः ग्रहणं | १७४२ ई० संवत्सरे |
| ओरछागमनम् | १७४२ ,, |
| पुण्यपत्तने पेशावाराजधानी-स्थापनम् | १७५० ई० संवत्सरे |

| | | | |
|---|---|---|---|
| बाजीरावेण स्वभ्रातुः रघुनाथरावस्योत्तरभारते प्रेषणम् | | १७५३ | ,, |
| रघुनाथरावस्य दिल्ली-नगराक्रमणम् | | १७५४ | ,, |
| रघुनाथरावस्य पुण्यपत्तने प्रत्यावर्तनम् | | १७५५ | ,, |
| रघुनाथरावस्य दिल्लीनगरेपुनर्गमनम् | | १७५६ | ,, |
| रघुनाथरावस्य दिल्लीनगरेऽधिकारः | | १७५७ | ,, |
| रघुनाथरावस्य लाहौरे निवासः | | १७५८ | ,, |
| रघुनाथरावस्य पंचनदप्रदेशे शासनं प्रतिष्ठाप्य पुण्यपत्तनं प्रति यात्रा | | १७५८ | ,, |
| रघुनाथरावस्य पुण्यपत्तनागमनम् | १६ सितम्बर | १७५८ | ,, |
| दिल्लीनगरेऽब्दालीशासनम | १० जनवरी | १७६० | ,, |
| महाराष्ट्राणामफगानैः सह घोरयुद्धम | फरवरी-मार्च | १७६० | ,, |
| बाजीरावस्योत्तराभिमुखप्रयाणम् | ३१ दिसम्बर | १७६० | ,, |
| बाजीरावस्य मृत्युः | २३ जून | १७६१ | ,, |

पेशवाधिपानां सेना-सज्जाविधानं वर्णितमेवास्मिन्नाटके। तथा हि राजाज्ञा प्रवर्तते—

'कोशश्च मामकीनः। नोचितं हि व्ययार्थं सुहृत्कोशादर्थादानम्। गच्छन्तु समं कटकापणिकाः। प्रहीयतां शकटेषु स्यन्दनेषु च समारोपित-समरोचिता ससाधना यन्त्र-शस्त्रकवचादि सामग्री। नियोज्यतां तां स्वस्वकर्मकुशलाः कारवो रथकारादयः। समीक्रियन्तां प्रयाणे पन्थानः। परीक्ष्य शोध्यतामाटविकैररण्यसीमानः। अनुप्रतिष्ठन्तां कुशीलवा वेणिकाश्च विनोदाय वत्सस्य।' इत्यादि।

तस्मिन् मन्त्रिणामुच्चाधिकारिणां सामन्तानां च स्वार्थपरायणानीतिः प्रचरति स्म। तेषां प्रवृत्तिभिः पेशवाबालाजिरावोऽस्पृष्टो नासीत्। पेशवाधिपस्य तेषां कार्यव्यापारस्य हानिप्रदं प्रभावं परीक्ष्य यथाकालं प्रतिकारमकरोत्। एतदर्थं विश्वासास्पदानां मित्राणां नित्यसाह्यमेव स समवर्धयत।

नाटकस्य राज्ञां कृते हेयोपादेयगुणावगुणानां समाकलनेन उपरिलिखितः कूटव्यापारो विशदीकृतः।

वसुमत्या सह बालाजीवाजीरावस्य विवाहस्य कल्पना दामोदरपन्तं प्रति तेन लिखितेनाधोलिखितेन पत्रेण प्रभवति—

'यदा भवान् उत्तरभारतं गन्तासीत् अहं भवन्तं निवेदितवान् यत् मदर्थं द्वे दशवर्षीये रमणीये हिन्दुकन्ये प्रेषणीये। भवता मम कार्यं न विस्मरणीयम्। यथाशीघ्रमिमे कन्ये ममान्तिकं सम्प्रेष्यानुगृह्णातु[1]।"

*सांस्कृतिकवर्णना—*

वसुमतीपरिणयस्य सांस्कृतिकवार्ता महत्त्वपूर्णा। राजकीयकर्मचारिणामुत्कोच-ग्रहणं सिद्धम्। जना उत्कोचेन कार्यसिद्धिं विदधते-स्म। पर्वतस्थलजलमरुभूमिदुर्गेषु पाषाणलौहकाष्ठनिर्मितानि युद्धोपकरणानि संगृहीतानि। यत्र खाद्यवस्तूनि संरक्षितानि। परराष्ट्रेषु दूता नियुक्ताः। अनेकैश्चरैः स्वपरराष्ट्रेभ्यः कपटसूचनाभिर्धनं प्राप्तम्। आयसाधनानि द्यूतागाराण्यासन्। कर्मचारिणः कोशचौरा बभूवुः।

*समीक्षा—*

अस्मिन् नाटके यत्र तत्र प्रहसनभाणादि—रूपकतत्त्वानन्दप्राप्तिर्भवत्येव, परं नीतिशास्त्रोपदेशयोजना नितरां हृद्या। छायातत्त्वस्य विशेषतो नायिकया स्वरचितनायकचित्रस्योपगूहनाद्यानन्दप्राप्तिदृश्ये वर्तते। तृतीयाङ्के युगपद् रङ्गमञ्चे नायकसौधस्य धारागृहादिविभिन्नदृश्यस्थलीनां पृथक्-पृथग् भागेषु नियोजनमस्ति। एवमेव चतुर्थाङ्के मिथिलाया गुणभूषणस्य राजधानीदृश्यस्य च रङ्गमञ्चे युगपत् संघटनं दृश्यते।

कविकलाया वैशिष्ट्यज्ञानं सांस्कृतिकवर्णनामध्येऽन्वितशृङ्गारितकथांशानां वर्णनेन भवति। यत्र राजनीतिकथाप्राचुर्यं तत्र न तावत् सारस्यं, परन्तु यत्र शृङ्गारितप्रवृत्तिवर्णनमस्ति तत्र सरसतासृष्टौ कविः प्रौढ एव।

*शैली —*

कविः काव्यमौलिभूतं ध्वनिं बहु मनुते। तद्यथा—

❀ किमरण्यचन्द्रिका मम भारती।

---

१. सरदेसाई : मराठों का नवीन इतिहास, पृष्ठ २५०

❀ दर्पणप्रतिबिम्बितमपि वस्तु किं नृपभोगक्षमं भवति ।

❀ अनुराग एव वस्तुनः सौन्दर्यमुत्पादयति ।

❀ यत्र सिंहस्तत्र पुच्छः ।

अनया रीत्या जगन्नाथस्य भाषा सर्वथा नाट्योचिता । प्रायः सारल्यं सारस्यं च सम्यक् विकसितम् ।

*अभिनवप्रवृत्तयः—*

वसुमतीपरिणयनाटकस्य कतिपयप्रवृत्तयः सदैव रूपककारैरुपादेयाः । अत्र राज्ञे सत्पथानुसरणं सत्साहित्यसंवर्धनस्य व्यवहृतसन्देशः प्राप्यते । बालाजिरावाय सम्पूर्णनाटके विशेषतो भरतवाक्ये सुनीत्या विजयसन्देशः प्रवर्तितः । राजनीतेरीदृशी हृद्या संरचना परवर्तियुगे दुर्लभा । अनेकचारुवर्णनाप्रसङ्गैर्मुद्राराक्षसार्थशास्त्राभ्यां कृतिरेषा विशिष्यते । हिन्दूक्षितिपत्यैक्यसम्पादनेन यवननृपतिभ्यो राष्ट्रं रक्षणीयमिति कव्यन्तरनिहितविचारा राज्ञां जागरणायालम् ।



# पञ्चमहाकाव्येषु चन्द्रः

( उत्तरार्धः )

डा. श्रीमती वनमाला भवालकरः

## चन्द्रस्य सूर्येण सह सम्बन्धः

काव्येषु यत्र तत्र विविधप्रकारेण वर्णितः। प्रथमं तावच्चन्द्रः सूर्यकिरणैरेव वृद्धिं गच्छतीति वैज्ञानिकसम्मतं तत्त्वं कालिदासेन प्रतिपादितम् —

"पितुः प्रयत्नात्स समग्रसम्पदः शुभैः शरीरावयवैर्दिनेदिने।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥"

( रघु० ३.२२ )

इति रघोर्वर्णने सूर्यरश्मिप्रवेशादेव चन्द्रस्य कलावृद्धिः सूचिता। यथा वा कुमारसंभवे विवाहदीक्षाविधिसायकेन सम्पर्कमुपेत्य पार्वती 'बहुलावसाने भानोः करेण संधुक्ष्यमाणा शशाङ्करेखेव बभौ, ( कुमार० ७८ ) इति वर्णने शुक्लपक्षे सूर्यकिरणैः। शशाङ्करेखोपचयो निर्दिष्टः। "प्रतिमासममावास्यायां चन्द्रः सूर्यं सङ्गच्छति तद् किं तीव्रतरैः करैः मम दाहाय" ( नै. २.५८ ) इति नलस्य विचारणायां स्पष्टमेव यत् चन्द्रः स्वतेजः सूर्याल्लभते। "अंशुसंघः सूर्यबिम्बान्निर्गत्य चन्द्रबिम्बं प्रविशति तथा नलो रथादवतीर्य पुरं विवेश" ( नै. ६.७ )। यथा वा भारविणा ताराधिपधाम्नि सौरी दीप्तिरिव हीनकिराते मम शक्तिरवसीदति ( किरात, १६.१७ ) इति अर्जुनस्य विस्मये सूर्यरश्मीनां बलीयस्त्वं प्रकटितम्। चन्द्रोऽमावास्यायां सूर्ये विलीनो भवतीत्येतदर्थं युक्तिरपि नैषधीयचरिते कल्पिता। तथा हि-'चन्द्रमदनयोः सख्यं युक्तमेव यतो ज्वलति शम्भुनेत्रे कामः प्रलीनः, चन्द्रस्त्वमावास्यायां भास्वन्मय आदिपुंसश्चक्षुषि सूर्ये लयं गच्छति। ( नै. २२.७ )' इति।

चन्द्रसूर्यौ विष्णोर्नेत्रद्वयमिति पौराणिकं मतं प्रसिद्धमेव। शक्रः कर्णात् कुण्डलद्वयं प्राप्य स्वपत्न्यै प्राचीदिशायै प्रादात्, त एव कुण्डले प्राच्यां विधुरहर्मणिः सूर्यश्च ( नै. १९.४२ ) 'इति श्रीहर्षस्य नूतना कल्पना।

चन्द्रसूर्ययोर्युगपद् दर्शनमतीवाभिरामम्। तदाश्रित्य कविभिरलङ्कार-प्रयोगः कृतः यथा—'दिनात्यये पर्वणि स्थितौ शशिदिवाकराविव राघव-भार्गवौ जनः पश्यति ( रघु. ११.८२ )' यथा वा 'उदयाद्रिमूर्ध्नि युगपच्च-कासतोर्दिननाथपूर्णशशिनोरसम्भवां रुचिं बिभ्रतौ नृपतनुजावासने न्यषीदताम् ( शिशु० १३.६४ )। उदयपर्वतान्नभोऽभिमुखौ शशि-भार्गवाविव सदोऽभिमुखं हरिपाण्डवौ नयनानन्दनौ रथादवनेरतुः ( शिशु. १३.६१ ) इत्यत्रापि चन्द्रसूर्ययोर्युगपद् दर्शनस्याह्लादकत्वं सूच्यते। पूर्वदिशि सूर्योदये पश्चिमायामाशायां चन्द्रास्ते द्वयो-रश्मिभिः शोभितो रैवतकपर्वतोऽवलम्बितघण्टाद्वयरज्जुवेष्टितस्य वारणेन्द्रस्य लीलां वहति ( शिशु. ४.२० ) इति वर्णनम्। चन्द्रा-दिभिः सूर्यप्रभा वृद्धिं प्रापितेत्यपि सूचितं नैषधीयचरिते—"रवे रुचय एवर्चः, तासामोंकारेषु स्फुटाममलां बिन्दुतां गमयितुं विहायसि स्थिता तारका हृताः। अस्तमयोन्मुखाच्छिशिरमहसो बिम्बादंशवोऽ-प्युच्चैर्गृहीततया तासामृचामुदात्तस्वरविरचनाय हृता इव। अर्थात् उदात्तस्वरसूचको परिस्थितोर्ध्वरेखा एव चन्द्रकिरणाः ( नै. १६.१ ) इति युगपच्चन्द्रास्तसूर्योदयवर्णनम्। तथा हि—'दिनावसाने तरणे ( सूर्यस्य नौकायाश्च ) रकस्मान्मज्जनान्नक्तं तमोविपद्द्वीपवतीं महानदीं विश्वस्य विलोचनान्यस्योडुपस्य ( चन्द्रस्य नौकायाश्च ) प्रसादात्तरन्ति ( नै. २२.९७ ) इत्यत्र सूर्यास्तानन्तरं चन्द्रोदयस्य श्लेषानुप्राणितसमासोक्त्या'भिनवं वर्णनं प्राप्यते।

अहिमरश्मिरुदयं शीतांशुश्चास्तं यातीति हतविधिविलसितानां विचित्रो विपाकः ( शिशु. ११.६४ ), सुहृज्जनाश्चैवं तुहिनांशुं विरोधि-जनश्चोष्णकरं कलयन्ति ( शिशु. १६.१४ ) इति चन्द्रसूर्ययोर्विरोधोऽपि प्रकटितः। सूर्यकिरणैः पीडितश्चन्द्रस्तेजोहीनो भवतीति वर्णनं बहुश उपलभ्यते। यथा—मदनशरपीडिता भैमी खरांशोः सूर्यस्य करैरर्दिता शशिकलेव करुणासमुद्रे कं न निदधौ (नै. ४. ३३)। यथा वा—कुसुमचाप-समाकुलं नलमुखं रविरुचा ग्लपितस्य विधोर्विधामहरहोऽभ्याधिकाधिकं वहनैक्ष्यत ( नै. ४.६ )। तथा हि—द्योतिता शेषलोके सहस्रकरे द्वितीये ऽक्षिणीव प्रतिवसति द्यौर्विगलितकिरणेन सितकरवपुषा विफलीकृते-

केक्षणेव प्रतिभाति ( शि. ११.६३ ) । सूर्यः करैर्द्विजराजं ( चन्द्रं ) पर्यभूत् । द्विजराजः ( नारदः ) करैः सूर्यं पर्यभूत् । स्वकृतं कर्म को न भुंक्ते ( नै. ५. ६. ) इति च ।

चन्द्रः सूर्याद् भयेन पलायित इति कल्पना अपि बहुलाः । यथा— क्षणं प्रोष्य सूर्ये दिग्वधूनां पुरस्तात् पाणिग्राहवद् भूय उपगतवति चन्द्र उपपतिरिव नीचैः पश्चिमान्तेन स्रंसमानांशुको द्रुततरमपयाति ( शिशु. ११.६५ ) इति समासोक्त्या माघकृतं वर्णनम् । यथा वा—अस्तं जिगामिषुरुडुपरिवृढः ( चन्द्रः ) सायमुदितः सन् अस्तं गतेन पत्या सूर्येण मुक्तां वियोगिनीं पद्मिनीं पीडयन् करेण दूषितवान् । तदा कुमुद्वती विकासनमिषेण हसितवती । अत एव चन्द्रकुमुदिनीद्वयमरुणरोचिषि सूर्ये कोपादिव प्रसरति सति शङ्कया सङ्कोचितम् ( नै. १६.५२ ) । भगवान् उष्णरश्मिः शशधरमदयं निष्पीड्य पुण्डरीकोदरेषु कान्तीनिर्यासमवकिरतीव ( शिशु. ११.६२ ) इत्युत्प्रेक्षा । तारापतौ ( हतौजसिसूर्यस्तिमिरकेशान् गृहीत्वा रात्रिं हिनस्ति यथा तारापत्तौ ( सुग्रीवे ) हतौजसान्द्रजिन् मायामयीं सीता हिनस्तीति सूर्यस्याक्रमणमुपमालङ्कारेण वर्णितम् ( नै. १६.८ ) । अन्यत्र रोचकेण रूपकेणापि सूर्यभयाच्चन्द्रस्य पलायनं निरूपितं तद्यथा—नभसि ध्वान्तध्वांक्षमारणे श्येनपक्षिरूपाणां सूर्यकिरणानां प्राग्भागे कीडनैः खेश्येनपानां मृगयामवधारयन् शशी निजाङ्कवर्तिशशस्य विशसनत्रासाच्चरमाशां ययौ, तदवगत्य तारापारावतैरुद्डीयत ( नै. १६.१२ ) । विशाखातारा शंखविलोपकस्य कमलं भिन्दतस्तीक्ष्णात्विषोः सूर्यस्य चलता करेण निष्पीडनां लम्भितेऽस्तंगतार्धो विधुश्च्छेदार्थोपहृताम्बुना छिद्यमानशङ्खसंजातरजसा कर्दमीभूतेन पाण्डुभवन् शंखच्छित्करपत्रतां प्रभातसमये वहति (नै. १६.५७)

विरहिजनकृते चन्द्रोऽपि सूर्य इव तापकरः । तद्यथा दमयन्ती चन्द्रं भर्त्सयति—

> निशि शशिन् भज कैतवभानुता
> मसति भास्वति तापय पाप माम् ।
> अहमहन्यवलोकयितास्मि ते
> पुनरहर्पतिनिर्हृतदर्पताम् ॥ (नै. ४. ५४)

इति कालिदासस्योपमा। 'प्रवृद्धाननचन्द्रकान्त्या शरदा लोक इव पार्वत्या सङ्गच्छमानः शिवः' (कुमार. ७.७४) इत्यन्याप्युपमा। 'पर्याप्तचन्द्रा शरत भियामेव नवक्षौमवासिनी सा (पार्वती) बभौ (कुमार. ७.२६); 'रोहिणीपतिः शारदाभुमिव स पर्यङ्कमध्यशेत (नै. ८. ८२)। एवमादिषु चन्द्र-शरदोः संयोगस्याह्लादकत्वं प्रतिपादितम्। भिन्नरुचौ लोके क्वचित्तु शरदोऽप्यसामर्थ्यं दर्शितम्। यदा—इन्दुमत्याः स्वयंवरवर्णने कालिदासस्येयमुपमा—

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ (रघु. ६.४४)

यथा वा—'या शरद् मेचकिमानं पयोमुचमुच्चारयामास तयाऽपि चन्द्रस्य लाञ्छनकालिमा प्रोञ्छितुं नापारि (नै. २२.११६)। वर्षान्ते शरद् मेघेभ्यश्चन्द्रं मुञ्चतीति कल्पना रघुवंशेऽपि दृश्यते। यथा—······

वर्षात्ययेन रुचमभ्रघनादिवेन्दोः।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रा—
त्प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे॥ (रघु. १३.७७)

यथा वा कार्तिकीषु रात्रिषु मेघयुक्तां विशदां चन्द्रिकामाग्निवर्णोऽन्वभुंक्त (रघु. १०.३७)।

'तुषारवर्षी सदृश्यचन्द्र इव रामः सबाष्पः' (रघु. १४.८४) इति पौष्येन्दुरप्युपमानरूपेण प्रयुक्तः।

विधिस्तुषारर्तु दिनानि कर्तुं कर्तुं विनिर्माति तदन्तभित्तैः।
ज्योत्स्नी न चेत् तत्प्रतिमा इमा वा कथं कथं तानि च वामनानि॥

अर्थात् विधिः शिशिरर्तोर्दिनानि। ह्रीत्वा तेषां शुभ्रैरन्तःसारैर्ज्योत्स्नीं निशां विनिर्माति। अत एव चन्द्रिकायुक्तरात्रयो दिनपुष्ट्या, दिनानि च वामनानि लघूनि। इत्यत्र श्रीहर्षस्य नूतनः कल्पनाविलासः।

ग्रीष्मे च अनावृतं काष्ठौघम् (दिशा दारु वा) अवलम्ब्य वर्षासु समुस्थितेषु बालकवकेषु तारा रूपि छमाकेषु चन्द्र. एकं विकसितं कवकमेवेति (नै. २२.६६) रोचकं वर्णनं वर्षार्तुचन्द्रस्य।

**चन्द्रस्य दिशाभिः सम्बन्धः**

प्राची दिशा चन्द्रस्य प्रियेति बहुशो वर्णिता । यथा—

उज्झती शुचमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे ।
दिक् प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥
( किरात. ९. १८ )

अत्रैन्द्री दिक् नक्षत्रनाथे चन्द्रे समीपमागते सति विरहदुःखमिवान्धकारं विहाय प्रसादगुणेन मण्डितं रश्मिहासविशदं मुखं वहति स्म' इति दिक्चन्द्रयोर्नायिका-नायकौपम्यं गम्यते । यथा वा शिशुपालवधे—इन्दुर्मम मङ्क्तावुदितदीप्तिरुदयाद्रिं याति स अपरां पश्चिमाशां गत्वा पतति तद् न वरमिति पूर्वदिगङ्गनायाः प्रभा मन्दहासकान्तिरिव साभ्यसूयं विशदं स्फुरति' इत्यत्र प्राची दिक् खण्डिता नायिकेव चित्रिता ( शिशु. ११.१२ ) । नैषधीयचरितेऽपि प्रभातवर्णने सैव कल्पना—'इन्द्रमहिषी प्राची दिग् वरुणगृहिणीं पश्चिमाशामभिगच्छन्तं रुचिनिचयसिचयांशांशभ्रंशेन निरंशुकं तुहिनमहसं ( चन्द्रं ) पश्यन्तीव प्रसादमिषान्निजमुखं प्राग् भाग एव सहासं धत्ते । अर्थात् मय्यनुरक्तस्त्वमभ्युदयभाग्, इदानीमनस्यामनुरक्तां इमां दशामापन्न इति विपन्नं शशिनं पश्यन्ती प्राची दिग् हसतीवेति भावार्थः ( नै. १९.३ ) । चन्द्रः प्राचीदिशाया भूषणमिवापि वर्णितः । वसुधान्तनिःसृतमहिपतेः फणामणिमहस्त्ररुचां पटलमिव शीतरुचः स्फुरदंशुजालं मघोनो दिशम् ( प्राचीं ) अभूषयत ( शिशु. ९.२५ ) । शक्रदिशायाः मुखम् उदयाचलव्यवहितेन्दुवपुर्विशदप्रभापरिगतम् अप्रकाशदर्शनं साविलासहासमिव विबभौ ( शिशु. ९.२६ ) । नवचन्द्रिकाकुसुमकीर्णतमः कबरीभृतो हरेर्हरितोमुखे ( पूर्व दिङ्मुखे ) ललाटतटहारि तुहिनरश्मिदलं (इन्दुखण्डं) मलयजार्द्रमिव ददृशे (शिशु. ९.२८) । इत्यत्र पूर्वदिशाया मुखे चन्द्रखण्डं चन्दनेनार्द्रं ललाटमिव मनोहारीति वर्णनम् । अन्यच्च—"उद्गच्छतारुणेन मदरुचिं ( अरुणिमानं ) लम्भितस्य चिराय स्थायिनीं लज्जामाशु च त्यजत इव वासवाशायुवत्याः ( प्राचीदिशायाः ) मुखस्य वसनमिव सितकरकरजालं स्रंसते ( शिशु. ११.१६ ) । यथा वा नैषधीयचरिते—इन्द्रदिशः ( पूर्वदिशायाः ) यदम्बरं ( गगनं वस्त्रं च ) चन्द्रोदयात् पूर्वं

रजन्या ( रात्र्या हरिद्रया वा ) पीतं ( पीतवर्णं अदृश्यं ) तत्तु चन्द्रोदये चन्द्रांशूनां चूर्णे स्पृष्टं नूनमारक्तीभूतम् ( नै. २२.४५ )। चन्द्रवर्णनेन केवलं प्राचीदिशाया अपितु पश्चिमदिशाया अपि निर्देशो लभ्यते। यथा अरुणिम्ना रज्यमानैर्जरठकमलकन्दच्छेदगौरैर्मयूखैर्हिमरुचिः पश्चिमाशां कुङ्कुमेन कृतधवलिमभेदैर्मलयरुहरजोभिरिव भूषयन् राजते ( शिशु. ११.१४ )। अत्र पश्चिमाशा चन्द्रस्य प्रेयसीति प्रतीतिः। यथा वा—अशेषां रात्रिं नवकुमुदवनश्रीहासकेलिप्रसङ्गाज्जागरित्वाऽधिकरुचिः स्रस्तहस्त इन्दुर्म्लानमात्मानं शिशयिषुरिवापरदिशोऽङ्के मुञ्चति ( शिशु. ११.२२ ) इति समासोक्त्यलङ्कारेण मनोहारि चित्रणम्। नैषधीयचरितेऽपि नभसि ध्वान्तध्वांक्षाणां मारणे श्येनपक्षिरूपाणां तेजसां प्राग्भावे क्रीडनैः खे श्येनपानां मृगयामवधारयन् शशी निजाङ्कवर्तिनः शशस्य विशसनत्रासाच्चरमामाशां ययौ ( नै. १६.१२ ) इत्यत्र चन्द्रस्य पश्चिमदिशागमने हेतुरुत्प्रेक्षितः।

सामान्यरूपेण तु समस्ता एव दिशो दिगन्ता वा चन्द्रेण विभूषिताः। तद्यथा—

अन्तिकान्तिकगतेन्दुविसृष्टे जिह्मतां जहति दीधितिजाले।
निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः॥
( किरात० ६.२१ )

'कुकुभां मुखानि सहशोज्ज्वलयन् अभिनेत्रप्रभवोऽपरो दहन् इन्दुः...' ( शिशु. ६.४२ )। यथा वा—रेवतीजानिरिव रोहिणीशः सकलाः कला दधान आशा उद्भासयन् द्वारिका ह्रातुं नैवेयेष ( शिशु. ३.६० )। नैषधीयचरितेऽपि 'उपसन्ध्यं कश्मीरजै रश्मिभिर्भ्रष्टं धृतध्वान्तकुरङ्गनाभि कृत्वाङ्गं चन्द्रनचारुणा चन्द्रांशुना दिगङ्गनाभिः क्रमादलेपि ( नै. २२.५४ )।

चन्द्ररजनी—त्रियामारमणः ( कु. १३.८ ), क्षणदापतिः ( नै. १४.४६ ), निशांपतिः ( २.५४ ), शर्वरीशः ( १०.५४ ), शर्वरीपरिवृढः ( २२.१४५ ), क्षपायाः पतिः ( २२.१०६ ), रजनीनाथ एवमादिनामाभिर्विभूषितश्चन्द्रो रजन्याः कान्त इति प्रसिद्धमेव।

नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः। (रघु. ६.२२)

"शशिनं पुनरेति शर्वरी" ( रघु ८.५६ ), सतारका निशा मन्दरान्तरितमूर्तिना शशभृतेव सखिभिर्मिलिता पार्वतीप्रस्तुतः स्थित्वा वचनानि श्रोष्यता शंकरेण लक्ष्यते ( कुमार. ८.५६ )। आदिनक्षयाद् रुद्धोदयं पूर्वस्यां दिशि दृष्टतनुश्चन्द्रमण्डलं दिग्रहस्यं कथयितुं राज्या प्रेरितमिव चन्द्रिकास्मितमुद्गिरति ( कुमार० ८.६० ), अङ्गुलिभिः केशसंचयमिव मरीचिभिस्तिमिरं संनिगृह्य कुड्मलीकृतसरोजलोचनं रजनीमुखं शशी चुम्बतीव ( कुमार०—८.६३ ) । अन्यत्रापि यथा—

उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयाऽनितया रजनीवधूः ॥
( रघु. ९.३८ )

वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥
( कु. ५.४४ )

इत्यादिषु कालिदासेन रजनी, चन्द्रस्य पत्नी, प्रेयसी, खण्डिता नायिका च कल्पिता ।

भारविनाऽपि—

"न प्रसादमुचितं गमिता द्योर्नोद्धृतं तिमिरमद्रिवनेभ्यः ।
दिङ्मुखेषु न च धाम विकीर्णं भूषितैव रजनी हिमभासा ॥
( किरात. ९.२४ )

इत्यत्र चन्द्ररजन्यो विशेषसम्बन्धः प्रदर्शितः । अन्यत्रापि—

रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् ।
( शिशु. ९.३३ )

इत्यत्र माघेन रजनीशशिनोर्मिथः शोभाकरत्वं प्रतिपादितम् । नैषधीयचरिते चन्द्ररात्रिविषयका बहुलरोचकाः कल्पनाः वर्तन्ते । तद्यथा—

निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः ।
विधेरपि स्वारसिकः प्रयासः परस्परं योग्यसमागमाय ॥
( नै. ३.४८ )

नलेन भायाः शशिना निशेव त्वया स भायात् निशया शशीव
( नै. ३.११७ )

'निशोऽपि सोमेतरकान्तशङ्का (नै. ३.७४)', 'सर्वान् विहाय निशाऽपि शीतांशुं वृणुते, द्वयोरपि मृदुतरत्वात् । ( नै. ६.५८ ), करोत्करस्य निशेव त्वं ( दमयन्ती ) नलस्य जीवितं ( नै. ६.१२० ) इत्यादिषु निशाचन्द्रयो र्योग्यसमागमो मिथः प्रीतिश्च प्रतिपादितौ । 'तमिस्रा रात्रिर्दयिता गौरे चन्द्रे भातितमाम्, ज्योत्स्नी रात्रिश्च नीले चन्द्रे । उभयोः शोभाप्ते- र्लोभादयं शशी सितासितमूर्तिं बिभर्तीति ( नै. २२.६४ ) नवकल्पना । प्रभाते क्षीणतेजा गणेयाल्परुचिः पतिश्चन्द्रस्तारापंक्ति विभावरीभ्यां न दृष्टः । पतिविपदमदृष्ट्वैव द्वेऽपि ध्वस्ते इत्युचितमेव किन्तु स्फुरन् मलिनाश्मच्छवेरुडुपतेर्वक्षः स्फुटमाश्ममेव यत् तदनयो र्विच्छेदेऽपि न द्रुतम् ( नै. १६.१६ ) इत्यपूर्वात्र समासोक्तिः । शिशुपालवधे तु चन्द्रो कठोरहृदयो नैव चित्रितः, स तु प्रियदयितः पत्नीविरहे शुचा नष्टशोभमङ्गं वहतीति उत्प्रेक्षा—

सपदि कुमुदिनीभिर्मीलितं हा क्षपापि
क्षयमगमद्……
इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दु-
र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ ( शिशु. ११.२४ )

शिशुपालवधेऽभिसारिकारूपेणाऽपि रजनी चित्रिता । शिशिरः किरणकान्तं वासरान्तेऽभिसार्य रजनी तन्मयूखाङ्गरागैः परिमलिन- मम्बरान्तं वहन्ती सत्वरं व्रजति ( शि. ११.२१ ) ।

अन्यत्र चन्द्रो रजन्या मुखरूपेणापि कल्पितः । यथा—

शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥
( रघु. ३.२ )

इत्यत्र कार्श्यात् लोध्रपुष्पेणेव पाण्डुमुखेनोपलक्षिता परिमिताभरणा गर्भवती सुदक्षिणा विरलनक्षत्रा, अल्पकान्तिना शशिनोपलक्षिता प्रभात- प्राया रजनी वा लक्ष्यते-त्युपमा । यथा वा—"उद्गतेन्दुमविभिन्नतमिस्रां रजनीमपनीतावगुण्ठनां दृश्यमानमुखीं व्रीडयातिजिह्मां नववधूमिव लोकः पश्यति" ( किरात. ६.२४ ) । लुलितनयनतारा क्षामवक्त्रेन्दु-

बिम्बा रजन्य इव— ( शिशु. ११.२० ) इत्यत्रापि चन्द्रबिम्बं रजनीमुखमिव कल्पितम् । यथा वा तपस्यतां कैरवाणां समाधिभङ्गे विबुधाङ्गनारात्रेरमृताधरोष्ठं मयूखस्मितचारुमुखमेव चन्द्रं मन्ये ( नै. २२. १२४ ) । नवं दर्पणमादधाना गौरी पर्याप्तचन्द्रा शरत्त्रियामेव बभौ ( कुमार. ७.२६ ) । चन्द्र रजनीसम्बन्धिन्योऽन्या अपि रोचका उत्प्रेक्षा नैषधीयचरिते दृश्यन्ते । यथा—

रजनीरजक्यः क्षीरस्यधाराभिरिव कौमुदीभिरम्बरस्य तमोमयी नीलिरुचिः क्षणेनाक्षालि ( नै. २२,१११ ), उच्चत्वसौंदर्यादिना वैजयन्त्याख्येन्द्रप्रासादस्य विजयेन लब्धा प्रसादस्य कीर्तिः कार्तिकी पूर्णिमारात्रितुल्योज्ज्वला । ( नै. १८. २२ ) । कृष्णपक्षरात्रिषु भित्तिगै रत्नराशिभिरमन्दचन्द्रिकः सौधः ( नै. १८'१४ ) । 'श्यामे गगने शुभ्रैस्ताराक्षरैस्तमःप्रशस्ति रात्रिरलिखत तां विलुप्यास्पयतो हिमांशोररुणेऽपि करे पाण्डुरिमा जाता' इत्यत्र मनोहारि कल्पना । खटिकालिखिताक्षराणि मार्जयत आरक्तोऽपि करः खटिकसङ्गत्पाडुर्भवति तद्वत् चन्द्रो नक्षत्राणि निष्प्रभाणि कृत्वा स्वयं धवलो जात इति भावः (नै. २२.५२) । रात्रिरूपिप्रियात्यागी प्रातःकालीन चन्द्रो धूसरः भवति ( नै. १६'३५ ) इत्यपि वर्णनं रात्रिचन्द्रयोः ।

*चन्द्र-सन्ध्या*—चन्द्र रजन्योरिव चन्द्रसन्धयोरपि सङ्गमो मधुरः । यथा—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ (रघु. १.८३)

इति नन्दिनी वर्णने । यथा वा—

जटानां कर्णिया केशैः संहत्या परितः सितैः ।
पृक्तयेन्दुकरैरह्नः पर्यन्त इव सन्ध्यया ॥ (किरात॰ ११'३)

इति मुनिचित्रणे ।

## चन्द्रस्तमश्च

नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
( कुमार. ८.५८ )

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः ।
नूनमात्मसदृशी प्रकल्पिता वेधसा हि गुणदोषयोर्गतिः ॥

( कुमार ८·६६ )

इत्यत्र कालिदासेन प्रतिपादितं चन्द्रस्योदयो निशातमसो निवारणाय भवतीति । यथा—

क्वचित्प्रभा चान्द्रमसी तमोभिश्छाया विलीनैः सबलीकृतेव ।

( रघु. १३·५६ )

इति गङ्गा-यमुना-सङ्गम-वर्णने चन्द्रस्य प्रभा छायास्थिततमोभिर्मिश्रिता कर्बुरवर्णेति कल्पना । राहुस्तम इति निर्दिष्ट इन्दुमतीवर्णने—

निमिमीलनरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥ ( रघु. ८.३७ )

किरातार्जुनीयेऽपि चन्द्रेण तमसोऽवसारणं वर्णितम् । यथा—

द्यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा शम्भुनेव करिचर्म चकासे ॥

( किरात. ६.२० )

इत्यत्राकाशव्यापिनीलनभाभं तमश्चन्द्रेण स्वकरैर्दूरीकृतं तद् शम्भुना क्षिप्यमाणं करिचर्मेत्युपमा रोचका वर्तते ।' 'प्रेरितः शशधरेण करौघः संहतान्यपि नुनोद तमांसि ( किरात ६.२८ ) । इत्यत्रापि चन्द्रकिरणैः सान्द्रान्धकारस्य नोदनं प्रतिपादितम् ।

लेखया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे ।
दंष्ट्रयाकनकटङ्कपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥

( किरात. ६.२२ )

अत्रापि मनोज्ञयोपमया चन्द्रेण तिमिरस्योत्क्षेपो वर्णितः । शिशुपालवधेऽपि माघेन रूपकालङ्कारेण चन्द्रेण तिमिरौघभेदश्चारु प्रस्तुतः । यथा—

अथ लक्ष्मणानुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः ।
परिवारितः परित अक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥

( शिशु. ६.३१ )

लक्ष्मणानुगत. अक्षगणैः परिवारित इत्यादिषु शब्दश्लेषो रूपकस्योपकारकः । नैषधीयचरिते दमयन्ती सौन्दर्यवर्णनेऽन्या कल्पना यथा—

अस्या मुखचन्द्रेणाग्रतस्तिर्यक्च वर्तमानमन्धकारं पराजितं तदेव केशच्छलेन पश्चाद्भागे बद्धमस्ति ( नै. ७.२१ )। इति। तथैव—केशरूप्यन्धकारानन्तरमधोदेशेऽर्धचन्द्राकारो भालपट्टो यस्यास्तां भैमीं कृष्णाष्टमीमासाद्य मदनेन जगज्जयाय सिद्धिमसाधि ( नै. ७.२३ )। 'आमुखेन्दु नलस्य वपुः सृजतो ब्रह्मणस्त्विषां कोशः शोषमगाद् यतो निःशेषद्युतिमण्डलव्ययवशात् सुलभैरन्धतमसः स्तोत्रैः केशमयः शेषो निर्मितः' इत्यन्या तमसो विषये कल्पना ( नै. १२.६३ )। दृशं मीलयतो विष्णोः श्यामत्वलक्ष्मीविजितेन्दुलक्ष्मपद्म एव तमांसि ( नै. २२.३३ ) इति चन्द्रस्य कलङ्कस्तमोरूप एवेति कल्पनाया विस्तारः। तथा च—द्विपो ध्वान्तस्य नलेन क्रियमाणेन वर्णनेन रुष्ट इव शशी जपारुणश्रीरुद्यन् नलेनानुनयेच्छयोपाश्लोकि ( नै. २२.३६ )। इत्यत्र चन्द्रोदये चन्द्रस्य रक्तवर्णस्तस्य क्रोधादित्युत्प्रेक्षा। अन्यत्र च—चन्द्रोदयात्पूर्वं ध्वान्ते सति वृक्षाधोभागा एव नीलवस्त्रं परिधाय सङ्केतस्थानमागता अभिसारिकाः। चन्द्र उदिते ज्योत्स्नानुकूलदुकूलैः परिलक्षिताश्छाया-च्छलेन नीलचैलमुज्झितवत्यः ( नै. २२.४१ ) इति चन्द्र-तमसोर्वर्णनम्। चन्द्रकिरणैर्वृक्षच्छाया शबलता किरातार्जुनीयेऽपि वर्णिता ( कि. ६. २६ )। रात्रिकलिन्दकन्यापूरानुकारेऽन्धकारेऽपसृते परिस्फुरन् निर्मल-दीप्तिदीपं ज्योत्स्नामयं सैकतं द्वीपं स्फुटीभवतीत्यत्र ( नै. २२.६० ) रात्रियमुनायाः पूर एवान्धकारस्तस्मिन्नपगते चन्द्ररूपिद्वीपं व्यक्तं भवतीत्यभिनवकल्पना। शब्दरूपः पान्थो निशायां यावद् व्रजति तावदह्नि न गच्छति यतो दिने स धर्मक्लान्तः, रात्रौ तु सुधांशोरमृत-रुचिभिराप्यायनात् तमः काननजन्मनो शैत्याच्च बहुगच्छतीति ( नै. २२.१०८ ) शब्दस्य रात्रावधिकदूराच्छ्राव्यत्वस्य हेतुरुत्प्रेक्षितः।

## चन्द्रो गगनं च

व्योम्नि चन्द्रस्योदयः। अतो द्यौश्चन्द्रस्य मातेव कल्पिता। तद्यथा—

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः…गर्भमाधत्त राज्ञी ( रघु. २. ७४ ) अथवा "नवेन्दुना तन्नभसोपमेयं तद्प्रौढनरेन्द्रं रघोः कुलमासीत्"

( रघु. १८.३७ ) यथा वा 'तत्कुलं पश्चिमकलास्थितेन्दुव्योम इवाभूत् ।' ( रघु. १६.५१ ) । गगनस्य तुलना सरोवरेणापि कृता, यथा—

पश्य पार्वति ! नवेन्दुरश्मिभिर्भिन्नसान्द्रतिमिरं नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषितं सम्प्रसादमिव मानसं सरः ॥
( कुमार. ८.६४ )

यथा वा शिशुपालवधे—

उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै-
रुत्तम्भितोडुभिरतीवतरां शिरोभिः ।
श्रद्धेयनिर्झरजलव्यपदेशमस्य
विष्वक्तटेषु पतति स्फुटमन्तरीक्षम् ॥ ( शिशु. ४.२५ )

चन्द्रेण नभसस्तेजोमयत्वं बहुशश्चित्रितम् । तद्यथा—

रजनीषु राजतनयस्य बहुलसमयेऽपि धामभिः ।
भिन्नतिमिरनिकरं न जहे शशिरश्मिसंगमभुजा नभः श्रिया ॥
( किरात. १२.१२ )

अथवा—

शशधर इव लोचनाभिरामैर्गगनविसारिभिरंशुभिः परीतः ( किरातः १०.११ ) इत्यर्जुनस्य वर्णने । नभस्तलस्योन्नतत्वविशालत्व-वर्णनेऽपि 'लङ्घितार्कशशिमण्डलो वामनस्य क्रमो नभस्तले न ममौ ( शिशु. १४.७५ ) इति चन्द्रस्य निर्देशः । गगनमष्टानां शिवमूर्ती-नामन्यतममित्यभिपन्नम् । तद्यथा—चन्द्रस्य कलया भिन्नतिमिरौ-घजटं गगनं जनैः क्षणं गणाधिपतिमूर्तिरिति न मृषाभ्यपद्यत ( शिशु. ६.२७ ) इत्यत्रापि चन्द्रेणोपकृतं नभः ।

**चन्द्रस्य रक्तवर्णः**

चन्द्रस्य रक्तिमानमधिकृत्यापि श्रीहर्षेण रोचकाः कल्पना उद्भा-विताः । यथा— १७

निजानुजेनातिथितामुपेतः प्राचीपतेर्वाहनवारणेन ।
सिन्दूरसान्द्रे किमकारि मूर्ध्नि तेनारुणश्रीरयमुज्जिहीते ॥
( नै. २२.४४ )

अर्थात् पूर्वदिग्पतेरिन्द्रस्यैरावतः समुद्रोत्थश्चन्द्रस्यानुजः पूर्वदिशाया-मागतस्य चन्द्रस्य मस्तके यत् सिन्दूरमातिथ्यार्थं स्थापयति तेनैव चन्द्रो रक्तवर्ण इति चन्द्रस्य रक्तवर्णाय हेतुरुत्प्रेक्षितः। यथा वा प्राच्या-मिन्द्रस्य नायिकाभिः समोपमागतश्चन्द्रः स्ववदनसाम्यात् प्रीत्या चुम्बितः। तदा तासामधरलग्नयावकयोगादेव शशी रक्तबिम्बो जातः (नै. २२·४५) किंवा 'जामदग्न्यः सहस्रबाहोः शिरच्छित्वा पितृभ्यो रक्तानि दत्तवान्। तानि पितृलोकं गत्वा पितृलोकाधीशं चन्द्रं रक्तं चक्रुः (नै. २२·४८)। 'अकर्णनासा रक्तास्रवर्षी लक्ष्मणाभिभूतः (कलङ्क-युक्तः) शूर्पणखामुखाभः शशी (नै. २२·४६) इत्यपि चन्द्रवर्णनम्।

अयं चन्द्रस्य रक्तिमा स्वल्पकालेन हीयते। इत्यस्मिन् विषयेऽपि कविकल्पनानामुन्मेषा दृश्यते। यथा कालिदासेनार्थान्तरन्यासेन साधु प्रतिपादितम्—

रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः।
विक्रिया न खलु कामदोषजा निर्मलप्रकृतिषु स्थिरोदया॥
(कुमार. ८·७५)

सितो यदात्रैष तदान्यदेशे चकास्ति रज्यच्छविरुज्जिहानः।
तदित्थमेतस्य निधेः कलानां को वेद वा रागविरागतत्त्वम्॥
(नै. २२·५३)

इत्यत्र दूरस्थस्य रक्तत्वप्रत्ययः क्रमसामीप्यात्तु धावल्यप्रत्यय इति वैज्ञानिकं तत्त्वं श्रीहर्षेण साधु प्रकटितं कलाभिज्ञस्य चानुरागविरागयो-र्याथार्थ्यं न सुगम्यमित्यपि श्लेषेण सूचितम्। चन्द्रस्य रक्तवर्णापगमे श्रीहर्षेण हेतुरुत्प्रेक्षितः स यथा—'सायङ्कालरूपो धूर्तो रक्तीभवश्चन्द्रं लेपवशात्कूटं कृत्रिमं सुवर्णं गगनाय मूल्यरूपेण दत्त्वा दीप्रमम्बरस्थमणिं सूर्यमादत्त। तदलीकं हेम क्षणेन पाण्डु जातम्। (नै. २२·५०) यथा वा—

बालेन नक्तं समयेन मुक्तं रौप्यं लसदडिम्बमिवेन्दु बिम्बम्।
भ्रमिक्रमादुच्झितपट्टसूत्रनेत्रावृतिं मुञ्चति शोणिमानम्॥
(नै. २२·५१)

अर्थात्—चन्द्र एव रौप्यभ्रमरकः। तस्य रक्तवेष्टनसूत्रमेव रक्तिमा। भ्रमणार्थं करात् कृतमोचनं भ्रमरकं सूत्रं मुञ्चति तथैव प्रदोषसमयेन भ्रमणार्थं मुक्तमिन्दुबिम्बं रक्तवर्णं मुञ्चतीत्यतिरञ्जिता कल्पना। यथा वान्यत्र—असिते व्योम्नि निशा ताराक्षरैस्तमः प्रशस्तिमालिखत्। तां विलुप्याल्पयतो हिमांशोररुणेऽपि करे पाण्डुरिमा जातः (नै. २२.४२) इत्येका विदग्धा कल्पना।

## चन्द्रस्य कौमुदी

काव्येषु कौमुदी प्रायश्चन्द्रस्य कान्तेव चित्रिता। यथाजेन्दुमतीयोगेन प्रीताः पौराः 'शशिनमुपगतेयं कौमुदी मेघयुक्तं इति विबव्रुः' (रघु. ६.८५) यथा वा शशाङ्कं कौमुदीव कुमुद्वती कुशमन्वगात्' (रघु. १७.६)। यथा वा नैषधीयचरिते 'आश्लिष्टचन्द्रिकश्चन्द्रमाः पूर्वपर्वतमिवाङ्कसंक्रामितप्रियोनलः पर्यङ्कमलंचक्रे (नै. २०.२३)। चन्द्रकौमुद्योर्मिथः प्रेम, परस्परविरहे दुःखं च पतिपत्न्योरिव दर्शितम्। यथा कुमारसंभवे रतिविलापे प्रसिद्धोऽयं श्लोकः—

'शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥

(कुमर. ४.३३)

अत्र कौमुदी शशिनः पतिव्रता पत्नीव प्रस्तूयते। 'तां स्रजमवलोक्य विह्वलेन्दुमती तमसा हृतचन्द्रा कौमुदीव निमिमील' (रघु. ८.३७) इत्यत्रापि चन्द्रकौमुद्योर्दृढप्रीतिः सूचिता।

चतुर्दिगन्तं परिपूरयन्ती ज्योत्स्ना चन्द्रस्य क्षीरसागरविरहजनितं दुःखं निरस्यति (नै. २२.६८) अर्थात् चन्द्रः पितृवियोगदुःखं चन्द्रिकायामेव क्षीरसागरबुद्ध्या परित्यजति। सकलदिगन्तव्यापिधवलचन्द्रिकामध्यस्थश्चन्द्रः क्षीरसागरमध्यस्थ इव शोभते इति भावः। अन्यत्र चन्द्रात्प्रसूतत्वात् चन्द्रिका विधोः पुत्री, तथापि कुमुदानामतिशयसम्बन्धेन तस्याः कौमुदीति नाम इत्यपि प्रतिपादितम् (नै. २२.६९)।

कौमुदी, चन्द्रिका, ज्योत्स्ना, चन्द्रप्रभेत्यादीनि पर्यायवाचिपदानि चन्द्रस्य प्रकाशार्थकानि । चन्द्रस्यामृतं पीयूषं सुधा वा तदभिन्नेव । तदाश्रित्य विविधा उपमाद्यलङ्काराः कविभिः प्रयुक्ता । यथा— 'रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्ष्णि चन्द्रिका' ( कुमार० ८.७५ ) । इति शङ्करस्य पार्वतीं प्रत्युक्तिः ।

यथा वा—

उन्नतावनतभाववत्तया चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तहस्तिनः ॥
( कुमार० ८.६९ )

पुण्यपेशलैः शशिप्रभावलयैस्तवालकान् उत्कचयितुंशक्यम् (कुमार. ८.७२ ) । 'कल्पतरौ लम्बिशुद्धज्योत्स्नया जनितरूपसंशयमंशुकं मारुते चलति विपरिवृत्तं सद् बलादभिव्यक्तं भवति ( कुमार. ८.७१ ) 'अधिगृहं गृहिण्यो वैडूर्यकुड्येषु दीपान् निशाम्यापि विडालेक्षणभीषणाभ्यो जालागताभ्यः शशिद्युतिभ्यो बिभ्युः' ( शिशु. ३.४५ ) । शशधरदीधिति-कलुटाच्छैस्तोयैर्जलकेलिः' ( शिशु. ८.३८ ) 'शरदिजज्योत्स्नाच्छ-सूक्तेर्महान् चतुर्दशसर्गः' ( नै. १४.१०१ ) । कृष्णपक्षरात्रिपु भित्तिगै' रत्नराशिभिरमन्दचन्द्रिकः सौधः ( नै. १८.१४ ) । रजनी रजक्या क्षीरधाराभिरिव कौमुदीभिरम्बरस्य नीलिरुचिः क्षणेनाक्षालि ( नै. २१.१११ ) एवमादयो बहुलाः कल्पनाः । चन्द्रिका वा सुधां वा चकोरः पिबतीति कविपरम्परागतोक्तिः । यथा—'एतन्मुखचन्द्रचन्द्रिका चकोर-जिह्वया कथं न पीयताम्' ( नै. १२.६ ) । 'अद्रेरधित्यकाभूमितिरस्करिण्या निमेषमावृतोऽपि चन्द्रश्चन्द्रिकाभिश्चकोरचञ्चुचुलुकान् पूरयित्वा सुधां प्रवर्षति ( नै. २२.४० ) । 'त्वदास्यमुकुरमिव चन्द्रं स्वकौमुदीं चकोरैः पाययमानं पश्य ( नै. २२.४२ )' इति नलस्य दमयन्तीं प्रतिवचनम् । 'स्वावयवत्विषं सुधां चकोराय कलां च हराय ददन् चन्द्रो जयति' (नै. २२.६१), विधोः पुत्री चन्द्रिका चकोरस्य पेया भवतु (नै. २२.६६) । निशानाथमहः सुधा एवेति मृषा लोकवादः, असौ सुधा जराविनाशौ न हरेत्, अन्यथा विधोर्मरीचीः पीत्वापि चकोराः कथं नाजरामराः

( नै. २२.१००० )'। 'सुधा निजाश्रयं चन्द्रमपि स्वप्रभावेण त्रातुं न शशाक ( नै. २२.६६ )।' एवमादिषु चकोरैश्चन्द्रिकायाः पानं सूचितम्। चकोरा इव देवा राहुश्चापि चन्द्रसुधापानमिच्छन्ति। यथा—राहोश्चान्द्रमस सुधेव नन्दिनी सिंहस्य तृप्त्यै ( रघु. २.३६ )' यथा वा नैषधीयचरिते नलोक्तौ—'हे प्रिये, सुधा राहुणा पानस्य भीत्या सुधांशुं त्यक्त्वा रक्तवर्णे तवाधरोष्ठ आलानं निह्नुते ( नै. २२.१३६ )' इत्यादिषु राहोः सुधापानं निर्दिष्टम्। 'रसात्मकस्योडुपतेः रश्मयः पार्वत्याः पारणाविधिः ( कुमार० ५.२२ )' यथा वा देवानां दूतरूपेण नलस्य दमयन्तीं प्रति निवेदने देवानाममृतपानं द्विधास्तु—देवत्वाच्चन्द्रामृतपानात् तथा च तवाधरामृतान् ( नै. ११.६ )' 'एकया रसनयेश्वरस्येन्दोरमृतं द्वितीयया च तवाधरस्यामृतं धृत्वा द्वयस्य विशेषं निर्णेतुं यदि कोऽपि क्षमस्तर्हि स द्विजिह्वो वासुकिरेव ( नै. ११.१६ )' अन्यत्र च 'तव मुखेन्दोरधरामृतं निपीयाहं देवैर्निपीय विधमीकृतायां विधोः सुधायां घृणां दधे ( नै. २२.११६ ) इत्यादिषु देवैः विधोः सुधायाः पानं प्रतिपादितम्। सुधाया अन्यान्यवैशिष्ट्यानि यत्र तत्र सूचितानि। यथा—

'सुधास्राविमयूखे चन्द्रेऽपि न निवृत्तं मे चक्षुस्तव सन्निधौ निवृत्तिमेति' इति युधिष्ठिरस्य व्यासं प्रति वचने ( किरात. ३.८ )' सुधया चक्षुर्निवृत्तिः प्रस्तूयते। 'निजामृतैर्लोचनसेचनाद्वा पृथक् किमिन्दुः सृजति प्रजानाम्' ( नै. ३.५८ ) इत्यत्रापि तदेव प्रतिपादितम्। 'तन्मुखेन्दोः सुधायां भग्ना दृष्टिः ( नै. ७.५ )', ओषधिपतिरमृतद्रवैः करैरब्जदृशामपमार्गं विदधत् परितो विसर्पि भृशं परितापि मानविषं वपुषोऽवतारयति ( शिशु. ६.३६ ) इत्यत्र मानिनीनां चन्द्रेण सुधया मानहरणं सूचितम्। 'इन्दुर्निजामृता दुद्यतेन नवनीतेनास्या अङ्गं निर्माय ( नै. १०.१२६ )' इत्यमृतेनाङ्गरचना विधुना विधीयते इति कल्पना। अन्यत्र तस्य यशांसि जगत्सु चरति धृतदरः शीतद्युतिः पीयूषस्रवकैतवात् स्विद्यति' ( नै. १.८५ ), आस्यचन्द्रमसः स्रवत् सुधा तुन्दिलबिन्दुवृन्दत्वमस्य कण्ठे श्रिता मुक्तावलिः ( नै. १५.६६ ), 'जगद्भारवहनपरिश्रमार्ता स्वेदधाराभिर्व्याप्ता वसुधा छायापदेशात् सुधाम्बुधौ चन्द्रे निमज्ज्य स्वेदमुज्झति ( नै. २२.६१ )'।

दूरेऽपि तत्तावकगानपानाल्लब्धावधिः स्वादुरसोपभोगे ।
अवज्ञयैव क्षिपति क्षपायाः पतिः खलु स्वान्यमृतानि भासः ॥
( नै. २२.१०६ )

अर्थात्—चन्द्रो दूरादपि तव गानमाधुर्यातिशयमनुभूय प्राप्तमर्यादो-ऽवज्ञया भास एव स्वान्यमृतान्यधः क्षिपति । 'प्रतिनिशं गगनतटमनु चन्द्राद् गलता धवलेनामृतेन पूर्णाः सूर्याश्वखुरगर्ता एव शुचिरुचितारकाः शोभन्ते ( नै. २२.१४६ )' इत्यादिनवनवकल्पना सुधामवलम्ब्या अति-शयोक्तिपूर्णापि रोचकाः श्रीहर्षेण उद्भाविताः ।

## चन्द्रः कुमुदकमले च

चन्द्रोदये कुमुदानां विकसनमरविन्दानां च निमीलनमाश्रित्य कवीनां कल्पनाविलासो बहुशो दृश्यते । यथा—

एतदुच्छ्वसितपीतमैन्दवं वोढुमक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥
( कुमार. ८.७४ )

दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः ।
मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत्कुमुदिनीवनिताम् ॥
( शिशु० ६.३४ )

इति द्वयोरपि कुमुदविकसने हेतुरुत्प्रेक्षितः । 'कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्या (नै. ३.४५)', 'संध्यानमद्दलकुलात्कमला-द्विनीयकह्लारमिन्दुकिरणा इव हासभासम्' ( नै. ११.२३ ) इत्यादिषु इन्दुकिरणैः कमलसंकोचः कुमुदविकासश्च सूच्येते । कुमुदहासकरांशुः ( नै. १२.१०० ), कुमुदबन्धुः ( नै. २१.८५ ) इत्यादीनि चन्द्रस्य नामा-न्तराणि चन्द्रिकायाः कौमुदीतिनामान्तरमिव चन्द्रकिरणानां कुमुदेन सह कोऽप्यनिर्वचनीयं सम्बन्धं सूचयन्ति । यथा—

पुत्री विधोस्ताण्डविकास्तु सिन्धोरश्या चकोरस्य दशोर्वयस्या ।
तथापि सेयं कुमुदस्य कापि ब्रवीति नामैव हि कौमुदीति ॥
( नै. २२.६६ )

तथैव—

नलस्यास्य हसिताद् जातं सखीनां स्मितं शितांशोरालोकात् कुमुद-श्रेणिजृम्भणमिव (नै. २२.१०२) 'निषधनृपमुखेन्दुश्रीसुधां सौधवातायन-विवरगरश्मिश्रेणिजालमुपनीतामखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि पपुः' (नै. १६.१२७) इति। इतोऽप्यधिकं यथा—

समं समेते शशिनः करेण प्रसूनपाणाविह कैरविण्याः।
विवाहलीलामनयोरिवाह मधुच्छलत्याग जलाभिषेकः॥
(नै. २२. १२२)

इत्यत्र चन्द्रकुमुदिन्योर्विवाहलीलां पुष्परसच्छलेन कन्यादान-संकल्पोदकाभिषेक आहेति कथने चन्द्रकरस्पर्शमात्रेण कुमुदानि विकसितानि मकरन्दपूर्णानि च जातानीति भावः। 'सदा जलं उषित्वा तपस्यतां कुमुदानां दिने समाधिः किन्तु रात्रौ तत् समाधिभङ्गे रात्रि-रूप्यप्सराया मुखरूपिचन्द्र एव कारणम् (नै. २२.१२४) इत्यत्र चन्द्रं दृष्ट्वा कुमुदानि समाधि विहाय विकसन्तीति भावः। चन्द्रस्य रुचिक्षयस्तु कुमुदानामरुचिकरः। यथा सूर्ये उदिते 'क्षतरुचिसुहृच्चन्द्रकैरवं तन्द्रां नोपैतु किम्', 'कुमुदविपिनस्य स्मितं पाथोरुहैः (विकसितकमलैः) निजनिद्रया विनिमयेन गृहीतम्' (नै. १६.३२)। वर्षाकाले मेघच्छन्नया चन्द्रदीप्त्या सह संबन्धः कुमुदेन न प्राप्यते तथा सुरकाम्यया भैम्या सह नलस्य योगो न सुलभः (नै. २.४६) इति।

चन्द्रोऽरविन्दाय न राचत इत्यपि बहुधाऽलङ्कारैः प्रकटितम्। तद् यथा—

स्वसुर्विदर्भाधिपतेस्तदीयो लभेऽन्तरं चेतसि नोपदेशः।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे॥
(रघु. ६.६६)

यथा वा—

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः॥
(रघु. ६.४४)

इनीन्दुमती स्वयंवरवर्णने । यथा –

इन्दोरगतयः पद्मे सूर्यस्य कुमुदेंऽशवः ।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥ ( रघु. १७.७५ )

इदमेव तथ्यं अन्यत्राप्युक्तम्–

चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्यलोला द्विसंश्रया प्रीतिमवाप लक्ष्मीः ॥
( कुमार. १.४३ )

किरातार्जुनीये भारविनापीदमेव कथितम्—

'हिमांशोः प्रभा पङ्कजावलिमिव मुनिबाणसंहतिरुमापतेश्चमूं सङ्कोचं निनाय (किरात १४.५६), तथैव शिशुपालवधेऽपि सभावर्णने—

निलयेषु नक्तमसिताश्मनां चयैर्बिसिनीवधूपरिभवस्फुरागसः ।
मुहुरत्रसाद्भिरपि यत्र गौरवाच्छशलाञ्छनांशव उपांशु जघ्निरे ॥
(शिशु. १३.५४)

अत्र कमलिनीनिमीलनस्फुटापराधाश्चन्द्रकिरणा इन्द्रनीलमणि-समूहैस्तिरोहिता इत्युत्प्रेक्षा । किन्तु रैवतक-वर्णने—'रत्नकिरणैर्भिन्नेषु चन्द्रकिरणेषु सहस्रसंख्यामुपगतेषु रात्रावपि नूनममावहिमांशुरिति नलिन्य विकचपद्मानां स्वीकुर्वन्ति (शिशु. ४. ४६)' । इत्यत्र रात्रौ चन्द्र-किरणैरपि पद्मविकासो हिमांशौ सूर्यभ्रान्त्यैवेति भ्रान्तिमानलङ्का-रेण प्रस्तुतम् । रैवतकस्य देवभूमित्वाच्च नित्यपद्मा नलिन्य इति भावः । अन्यत्र

अथवाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ।
रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥
(शिशु.१६.४३)

इत्यर्थान्तरन्यासे पद्मचन्द्रयोर्विरोध उक्तः । नैषधीयचरितेऽपि कल्पनेऽयं बहुशो विस्तारं नीता । यथा—

अहेलिना किं नलिनी विधत्ते सुधाकरेणापि सुधाकरेण । (नै. ३.८०) ।

अथवा—भैमीमुखेन्दोरालोकमात्रात्तस्य हृदयारविन्दं न भिन्नम् (नै. ६.८६.); '( भैम्या ) वक्त्रेन्दुसन्निधौ निमीलद्दलारविन्दद्वन्द्वभ्रम-

क्षममञ्जालिमात्ममौलौ कृत्वा गच्छन्ती भैमी देवैरनुज्ञाता (नै. ११. ११)। 'वदनेन्दुसान्निध्येन करकमलौ निमीलितौ' इति सुन्दरं वर्णनम्। 'नल उन्मीलितनेत्रे सति तारापतौ (चन्द्रे, सुग्रीवे) हतौजसि सति सूर्यस्तिमिरकेशान् गृहीत्वा रात्रि ह्रिर्नास्ति यथा मायामयीं सीतामिन्द्रजित्। इदं दृष्ट्वा कुमुदानि मोहं व्रजन्ति (नै. १६.८)।

हासत्विषैवाखिलकैरवाणां विश्वं विशङ्केऽजनि दुग्धमुग्धम्।
यतो दिवा बद्धमुखेषु तेषु स्थितेऽपि चन्द्रे न तथा चकास्ति॥
(नै. १६.८)।

अन्यत्र च 'द्विजेन्द्रः (परशुरामः) सर्वान् क्षत्रान् परिभूयाप्येकात् क्षत्राद् (रामात्) यथा भज्यत तथैव द्विजेन्द्रश्चन्द्रः सर्वाणि पद्मानि परिभूयैकात्तव वक्त्रपद्मात् परिभूतिमेति' (नै. २२. १३१) इति मनोहारि वर्णनम्। पद्मचन्द्रयो वैरस्य हेतुरपीत्थमुत्प्रेक्षितः— दमयन्त्या आननलक्ष्मीमादित्सुरस्ति कुरङ्गलक्ष्मा चन्द्रः पद्मं च। अतस्तयोः शशाङ्कपङ्केरुहयोर्विरोध एकार्थलिप्साकृत इति शङ्के (नै. २२ ११५)। क्वचित्तु वैरस्यास्य विस्मरणमपि कल्पितम्। यथा—चिरकालीनं वैरं विस्मृत्येन्दुना सह लब्धसन्धानमरविन्दमिव प्रेयसीमुखमुन्नमयन् पत्युः करो बभौ (नै. २०. ५१) इति दमयन्त्या मुखस्य चन्द्रेण नलकरस्य च कमलेन सादृश्यसंबन्धः स्थापितः क्वचित् समासोक्त्या चन्द्रसूर्ययोः क्रमशः कमलकुमुदे प्रति पक्षपात उक्तः। यथा—

उडुपरिवृढः पत्या मुक्तामयं यदपीडयद्
यदपि बिसिनीं भानोर्जायां जहास कुमुद्वती।
तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूफलारुणरोचिषि॥
(नै. १६.५१)

अयं भावः—चन्द्रः सायमुदितः सन् अस्तंगतेन पत्या सूर्येण विरहितां पद्मिनीं पीडयन् करैर्दूषितवान् तदा कुमुदिनी विकासव्याजेन हसितवती। अतएवारुणरोचिषि सूर्ये कोपादिव प्रसरति सति चन्द्रकुमुदिनी द्वयं शङ्कया सङ्कोचितम्। इत्यत्र हृदयंगमं वर्णनम्।

## चन्द्रश्चन्द्रकान्तमणिश्च

चन्द्रकिरणसम्पर्केण चन्द्रकान्तमणयोर्जलं स्रावयन्तीति श्रूयते कविमुखात्। तद्यथा—

चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥
(कुमार ८. ६७)

यथा वा शिशुपालवधे द्वारिकापुरीप्रसादानां वर्णने—

कान्तेन्दुकान्तोपलकुट्टिमेषु प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरधःपातिपयोमुचोऽपि समूहमुहुः पयसः प्रणाल्यः ॥
(शिशु. ३.४४)

यथा वा रैवतकवर्णने 'रैवतकस्य वप्राः शशाङ्ककिरणाहतचन्द्र-कान्तनिस्यन्दिनीरनिकरेण कृताभिषेका अहनि चार्कोपलोल्लसित-वह्निभिस्तप्तास्तीव्रं महाव्रतमिवाचरन्ति (शिशु. ४.५८) इति हृद्या कल्पना।

अन्यत्र च—चन्द्रकान्तमणिनिर्मिता स्त्री-प्रतिमा चन्द्रकिरणैर्जलं स्रावयन्ती स्मरजन्मना स्वेदाम्बुनोपचिता प्रतिकामिनी सपत्नीति भ्रान्त्या चकिता अङ्गना अभिभर्तृ ददृशुः (शिशु. ६.३५) इति भ्रान्ति-मदलङ्कारेण चन्द्रकान्तमणेर्वैशिष्ट्यमुक्तम्।

श्रीहर्षेणापि 'इन्दूपलापगाः (नै. २.८६)', 'विधुदीधितितेजसा पयसा शीतलं शशिकान्तमयं पथमातपो न तपति (नै. २.६४), विधुकरपरिरम्भाद् आत्मनिष्यन्दपूर्णैः शशिकरदृषदुपक्लृप्तैस्तरुणा—मालबालैर्भैमीवने जलसेकप्रक्रियागौरवं विफली कृतम्' (नै. २.१०६) इत्यादिभिः कुण्डिनपुरवर्णनम्।

'न खलु मोहवशेन तदाननं नलमनः शशिकान्तमबोधितम्।
इतरथा शशिनोऽभ्युदये ततः कथमसुस्रवदस्रुमयं पयः॥
(नै. ४. ३६.)

इति विरहपीडिताया दमयन्त्याश्चन्द्रदर्शने वाष्पातिरेकस्य हेतुमुत्प्रेक्षते कविः ।

## चन्द्रो मदनश्च

कामोत्तेजकश्चन्द्रो मदनस्य प्रियसखेति कविसम्मतिः । "अपगत नीहारतया निर्मलकान्तिभिः किरणैर्हिमकरो मकरकेतनमतेजयत् ( रघु. ६. ३६ )" इति वचनेन चन्द्रेण कृतं मदनस्योत्तेजनमुक्तम् । "मन्मथो मृदुमदः षशिभासः...—नयन्ति प्रेम कामपि भुवं प्रमदानाम् । ( किरात. ६.७ )" अथवा—

ओजसाऽपि खलु नूनमनूनं नासहायमुपयाति जयश्रीः ।
यद् विभुः शशिमयूखसखः सन आददे विजयिचापमनङ्गः ॥
( किरात. ६.३३ )

हिममुक्तचन्द्ररुचिरो माधवो जनितमीनकेतनः प्रमदाजनस्य महोत्सवोऽभवत् (शिशु. १३.३८) । 'भवनाभ्यन्तरेषु शयितोऽलस एकाकी मदनो गवाक्षविवरप्रविष्टान् स्फटिकयष्टिनिभान् इन्दुकिरणान् अवलम्ब्योत्थितः ( शिशु. ६.३६ ) । चन्द्रोदयात् प्राक् मदनोऽपि तमसाऽलक्षितबाणलक्ष्य आसीत् , शीतकरे उदिते दिशः प्रकटयति सति मदनेन धनुराकृष्टम् ( शिशु. ६.४० ) । इति च ।

युगपद् विकासमुदयाद् गमिते शशिनः शिलीमुखगणोऽलभत ।
द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥
( शिशु ६.४१ )

दिशामुखान्युज्ज्वलयद् कामदेव्य आकुलत्वं ददत् अत्रि-नयन-प्रभवोऽपरोदहन इवेन्दुः कुसुमेषुमदिदीपन् । ( शिशु. ६.४२ )

इत्यादिषु चन्द्रस्योद्दीपनविभावनमभिव्यक्तम् । उदिते क्षणदाकरे प्राक् परिमूढतां गतैर्लब्धपदैर्युवभिर्दयिता हृतमनसोऽनुपदं प्रयये ( शिशु. ६.७० ), 'मनस्विनी उत्कयितुं पटीयसा चन्द्रेण कलासमग्रेण गृहान् अमुञ्चता रतिं वितन्वता विलसिनस्तस्य नर्मसाचिव्यमकारि (शिशु. १.५६ ) इति चन्द्रमदनयोर्दृढः सम्बन्धः सूचितः । नैषधीयचरितेऽपि

शशिमदनयोः सख्यं प्रकटितम्। यथा—'कस्तूरीवल्लीभूषिता साक्षीकृतेन्दुवदना दमयन्ती मदनाय जयं दत्ते ( नै. २१.१३४ )।

निःशङ्कमङ्कुरितता रतिवल्लभस्य
देवः स्वचन्द्रकिरणामृतसेचनेन।
तत्रावलोक्य सुदृशां हृदयेषु रुद्र-
स्तद्देहदाहफलमाह स किं न विघ्नः॥ (नै. ११.६१)

इत्यत्रोज्जयिन्यां देवो रुद्रः स्वशिरस्थचन्द्रकिरणामृतसेचनेन सुदृशां हृदयेषु कामस्य निर्भयं प्रादुर्भावमवलोक्य तद्दाहस्य फलं किमाह तन्न विघ्नः। इति रोचकोक्त्या चन्द्रस्य मदनाय साहाय्यं वर्णितम्। 'द्विजेन्द्रश्चन्द्रः कामस्यार्धदग्धास्थिभिर्निर्मितः। अतः स सितासितश्रीः। यत् स्मरारिणा मूर्ध्नि धृतोऽपि स्मरस्यैव तौष्टिकपौष्टिकानि तनोति ( नै. २२.६५ )।

"अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग ! मोक्ष्यति॥
( कुमार. ४.१३ )

इत्यत्र कालिदासेन रतिविलापे मदनश्चन्द्रस्य प्रियबान्धवः, अतो चन्द्रोऽपि मदनस्य नाशेन स्वोदयं निष्फलं मत्वा शुक्लपक्षेऽपि दुःखेन वर्धते' इत्युत्प्रेक्षितम। नैषधीयचरिते "अयमिन्दुरनङ्गस्य सखा न भवति, असाम्यात्, कर्पूरमेवेन्दुस्तस्य मित्रं यतो द्वावपि दग्धौ पूर्वरूपादधिकां वीर्यवत्तां दधाते ( नै. २२.८६ ) अथवा मदनस्य चन्द्रेण सख्यं युक्तमेव, यतः कामो ज्वलति शम्भुनेत्रे प्रलीनश्चन्द्रश्च दर्शमासि आदिपुंसो विष्णोर्नेत्रे ( सूर्ये ) लयं गच्छति ( नै. २२.८७ ) इति चन्द्रमदनयो सख्यस्य विषये तर्कः पुरस्कृतः। तस्य ( नलस्य ) हृद् रहो त्वां यन्मन्त्रयते तद् मुखं व्यक्तमामन्त्रयते। एतत् तद्वैरिपुष्पायुधमित्रचन्द्रसौख्यौचिति ( नै. ३.१०७ ) 'इति। दमयन्त्या विरहे नलो रहो हृदि यत्तया सह भाषते तद् मुखेनाऽपि व्यक्तं भवति। यतो मदनस्य मित्रं चन्द्रः, मुखं च चन्द्रस्य सखा, अतो मुखमपि मदनस्यैव कार्यं साधयतीति भावः। 'त्वदास्येन विधुर्जितः स्मरश्च तव श्रिया, अतो द्वावपि ता अहं तव प्रियेति कृत्वा मम वधे कृतप्रतिज्ञौ ( नै. ६.१४५ ) इति विर-

हिण्या दमयन्त्या नलमुद्दिश्योक्तिः। 'भवत्पादाङ्गुष्ठमर्धचन्द्रलक्षणं, तच्च महादेवस्य चिह्नं', मदनः स्वशत्रुचिह्नं कथं धारयेत् ( नै. ८.३६ ) अर्थात् मदनो नलस्य नखाश्रयमपि न धारयतीति भावः। 'केशरूप्यन्धकारानन्तरमधोदेशेऽर्धचन्द्राकारं भालपट्टं धारयन्तीं दमयन्तीं कृष्णाष्टमीमासाद्य मदनेन जगज्जयाय सिद्धिमसाधि तद्युक्तम् ( नै. ७.२३ ) इत्यस्मिन् अर्धचन्द्रयुक्तकृष्णाष्टम्यां मदनस्य वशीकरणसिद्धिः साध्यते इत्याशयः।

चन्द्रो मदनस्योपकरणरूपेणापि वर्णितः। यथा—वियोगिनी भैमी मदनस्य शशिमयं दहनास्त्रमुदित्वरं विमृश्य झटित्यश्रुमिषाद् वारुणास्त्रमुपाददे ( नै ४.३८ ) इति रोचका कल्पना। 'अस्तं गच्छतो चन्द्रस्य एकादशकला एकादश रुद्राणां मौलीन् प्रति यान्ति, शेषाः पञ्च कलाः पञ्चेषोमदनस्य तूणीरं प्रविश्यार्धचन्द्राख्या इषवो भवन्ति (नै. २२.११३) इत्यादिषु चन्द्रो मदनस्य शस्त्ररूपेणोपयुज्यते। यामिनीवनितया मन्मथस्याभिषेकं संविधातुं लसदंशुजलौघस्ततचिह्न इन्दुः सोत्पलो रजतकुम्भ इवोत्क्षिप्तः ( किरात ९.३२ ), 'कामरत्योः परिणये महाभिषेकार्थं सहस्रधारकलशश्रीश्चन्द्रः ( नै. २२.१४८ ) इत्यादिषु मदनाभिषेके चन्द्रो मङ्गलकलशः कल्पित'। 'इन्दुमण्डलं स्मरस्य पाण्डुरमातपत्रम्। पूर्णिमानन्तरमस्य भङ्गः खलु मन्मथस्य छत्रभङ्ग एव ( नै. २२.१२७ ) अर्थात् कृष्णपक्षे उद्दीपकचन्द्रक्षये कामोऽपि क्षीणो भवति। अल्पाङ्कपङ्कापीयूषनीरा विधुमण्डली कामस्य सरसी। अतः स्मरः सुधापानाद् अजलेऽपि स्थले अमरं मीनं चिह्नं बिभर्ति ( नै. २२.१२५ )। नाना वर्णाकृतीनि नक्षत्राण्येव पुष्पोपवनानि, तत्र प्रारब्धकामदेवपूजाया दमयन्त्याः परिचारको नलः। तिलैः सञ्जाततिलकः पर्पर इन्दुः।" इति प्रकल्प्य 'तं कामाय वितर, पञ्चबाणं पूजय' इति दमयन्तीं प्रति नलोक्तौ चन्द्रो मदनपूजासाहित्यान्तर्गतः ( नै २२.१४७ )।

## चन्द्रो विरहीजनश्च

विरहिणां कृते चन्द्रोऽतीव्रतापकर इति सर्वत्र वर्ण्यते। मेघदूतेऽपि कालिदासेन अमृतशिशिरान् जालमार्गप्रविष्टान् इन्दोः पादान् सलिल-

गुरुभिः पक्ष्मभि' श्छादयन्तीति (मेघ. २.३०.), विरहिण्या यक्षपत्न्या मनोहारिवर्णनं कृतम्। किरातार्जुनीये ऽपि "आतपे बध्वा चक्रवाक्या सह धृतिमता यामिनीविरहिणा विहगेन हिमरश्मेः किरणा न सेहिरे" (किरात ९.३०)।

अथवा—

'मानिनीजनविलोचनपातानुष्णबाष्पकलुषान् प्रतिगृह्णन्।
मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः॥
(किरात० ९.२६)

यथा वा शिशुपालवधे—

'विषतां निषेवितमपक्रियया समुपैति सर्वमिति सत्यमदः।
अमृतस्रुतोऽपि विरहाद् भवतो यदमूं दहन्ति हिमरश्मिरुचः॥
(शिशु. ९.६८)

इत्यादिषु विरहावस्थायां चन्द्रकिरणा दाहका भवन्तीति स्फुटी-भवति। "वियोगिदाहाय कटूभवत्त्विषस्तुषारभानोः खण्डमिव राजिका-राद्धं (रायता) (नै. १६.७४) इत्युपमायामपि चन्द्रेण वियोगिनां दाहो निर्दिष्टः। 'स्वदेशे वियोगाभावाच्चन्द्रकराणां शीतलत्वम् किन्तु भर्तृत्यक्ता वियोगज्वरभराक्रान्ता सती वने चन्द्रकान्तिमुष्णामनुभवतीति भावो ऽन्यत्रापि (नै०. १२. २६)—

तन्मुहूर्तमपि भीमतनूजा विप्रयोगमहिष्णुरिवायम्।
शूलिमौलिशशिभीततयाऽभूद् ध्यानमूर्च्छननिमीलितनेत्रः॥
(नै. २१. ३८.)

इत्यत्र नलवर्णने मुहूर्तमपि भैमीवियोगमसहिष्णु-र्नलो देवपूजा-क्षणेऽपि शंकरपूजायां शंकरमौलिशशिनो भतितयैव ध्यानमूर्धनव्याजेन नेत्रे निमीलितवान् इति चन्द्राद् विरहिणां भयं चित्रितम्।

नैषधीयचरितस्य चतुर्थसर्गे दमयन्तीविरहावस्थाया विस्तृतमति-रञ्जितं वर्णनमुपलभ्यते। तत्र चन्द्रमुद्दिश्य बहुसंख्यकल्पनानामुद्भावनं दृश्यते। तास्वप्यनेका अन्याय पूर्वोक्तसन्दर्भेषूल्लिखिताः पुनरुक्ति-भयादत्र सविस्तरं न निरूपणीया इति संक्षेपेण कतिपयानां निर्देशः क्रियते। तद्यथा—तया दमयन्त्या विधुर्भानुमान् अमानि यतस्तदंशुभिः

सूर्यकान्तमणिवत् तस्या हृदयमजीज्वलत् (नै० ४. २०)। 'अतिवैरिणी चन्द्ररुचिर्भवनाद् बहिरानिर्गच्छन्तीं भैमीं ज्वलयितुं गृहजालविलैः सन्तापशान्त्यर्थं शरीरस्थापितानां बिशानां वेषेण प्रविष्टा (नै. ४.२४)। चन्द्रोदये दुखितस्य विरहिणः कृते दक्षिणानिलो (मलयपवनो) ऽपि न दक्षिणः (सुखप्रदः) (नै० ४. ६६)। भैम्या विरहपाण्डुकपोलतले प्रतिबिम्बिते विधुरनुपलक्ष्यसितांशुतयाङ्कमृगार्पणात् तस्या मुखं निजसखं व्यधित। (नै. ४.२६)। तस्या आननं शशिकान्तमबोधि। इतरथा राशिनो ऽभ्युदये ततः कथमस्रमयं पयोऽसुस्रवत् (नै. ४. ३६)। मनसिजस्य शशिमयं दहनास्त्रमुदित्वरं विमृश्य सा झटिति वारुणं प्रतिशस्त्रमश्रुमिषादुपाददे (नै. ४. ३८) इति विरहिण्या बाष्पातिरेक वर्णितः।

अथ मुहुर्बहुनिन्दितचन्द्रया स्तुतविधुंतुदया तया स्मरतापमये गदे पतितया सखी उक्ता (नै. ४.४३) इत्यारभ्य दमयन्तीमुखाच्चन्द्रस्य निन्दा श्राव्यते। यथा 'विरहिणीवधपङ्ककलङ्किताः चन्द्रस्य कलास्तस्य हृदि लुठन्ति, कुमुदसख्यकृतास्तु बहिष्कृताः (नै. ४. ४७) इति चन्द्रबिम्बमध्यस्थकलङ्को निर्दिष्टः। कुतो गुरोर्दोहवदान्यताऽशिक्ष्यत, ग्लपितशम्भुगलाद् गरलादुदधौ वा वडवानलात् (नै. ४ ४८)। विधुना पयोनिधौ जन्म न गणितं हरशिरः स्थितिभूरपि विस्मृता (नै. ४.५०) अतो विरहिणविधलक्षणं निद्यं कर्म तेनाधिक्रियते।

'अयमयोगिवधूवधपातकै र्भ्रमिमवाप्य दिवः खलु पात्यते।
शितिनिशादृषदि स्फुटदुत्पतत्कणगणाधिकतारकिताम्बरः॥

इति पातकिचन्द्रस्य दण्डनस्य (नै. ४. ४६) मनोज्ञं चित्रणम्।' ग्लपितैरसुभिर्भीमसुतामनो मयि निमज्जतु' इति मन्यसे चेत् 'मनश्चन्द्रे निलीयते' इतिश्रुतिस्तु नलमुखेन्दु परा (नै. ४.५२)।

"मुखरय स्वयशोनवडिण्डिमं जलनिधेः कुलमुज्ज्वलयाधुना।
अपि गृहाण वधूवधपौरुषं हरिणलाञ्छन मुञ्च कदर्थनाम्॥"
(नै. ४. ५३)

पीडाया असह्यत्वाद् झटिति विरहिवधं कुरु इतिभावः। 'शशकलङ्कभयङ्करं, निशि भूतपतिं श्रितः मादृशां ज्वलसि' (नै. ४. ५५)। 'असति भास्वति निशि कैतवभानुतां भज मां च तापय, (नै. ४. ५४)। चन्द्रं

स्थगयितुं शशिकुरङ्गमुखे श्रवणपूरतमालाङ्कुरं निक्षिप्य स तुन्दिलितः करणीयः (नै. ४.५६)। यदाऽमावास्या पुनरुपैति सा निरुध्य निवास्यते येन विधोर्मुखं पुनर्नेक्ष्यते (नै. ४.५७) इत्यादौ चन्द्रतापपरिहाराय युक्तयः। सत्स्वपि विनाशकारणेषु चन्द्रो न विनष्ट इति खेदं प्रकटयति विरहिणी दमयन्ती। यथा— उदधौ मन्दरभृता निपतता त्वं न चूर्णितः, पीतपयोनिधेर्मुने जठराग्नावपि न जीर्णतां गतः (नै. ४.५१)। अतः तद्विनाशायोपायं चिन्तयति ममैष चकोरशिशु सिन्धुपिबस्य मुनेः शिष्यतां न व्रजति किम्। येनाब्धिमशितुमधीतव्रतस्यास्य पिबतः शशिकराः कति बिन्दवो भविष्यन्ति (नै. ४.५८) अथवा एकमयोघनं करे स्थापय, गृहाद् बहिर्दर्पणं च। यदा विधुस्तत्र विशति तं शीघ्रं जहि (नै. ४.५९)। वडवानलवद् विधुरपि समुद्रेणोदर एव किं न धृतः। विषवदुज्झितमेनं हरं किं न बुभुजे (नै. ४.६०) समुद्रोत्थितमसितं कालकूटमेकेन देवेन भक्षितं न पुनरभूत्। श्वेतं सामुद्रं विषमेव चन्द्रस्तु सर्वैर्देवैर्निपीय जनितक्षयोऽपि पुनर्नवमुदेति (नै. ४.६१)। राहुमुखेऽपि चन्द्रो न नष्टो इति विरहिण्या विषादस्तया च चन्द्रग्रासक राहु प्रशंसा। (सा पूर्वमेव राहुवर्णने प्रस्तुता। (नै. ४.६४-७१ द्रष्टव्यम्।)

एष न ब्राह्मणस्तथापि—

सकलया कलया किल दंष्ट्रया समवधाय यमाय विनिर्मितः।
विरहिणीगणचर्वणसाधनं विधुरतो द्विजराज इति श्रुतिः॥
नै. २२.७१

अर्थात् यमस्य दन्तानामयं राजा अन्ये द्विजराजः। विधिना विधुरेव हरनेत्रहुताशनाज्ज्वलत् स्मरमुखं चक्रषे। बहुविधवियोगिवधैन सा चैष शशमिषात् कालिकयाङ्कितः (नै. ४.७३)। तथैव—

द्विजपतिग्रसनाहितपातकप्रभवकुष्ठसितीकृतविग्रहः।
विरहिणीवदनेन्दुजिघत्सया स्फुरति राहुरयं न निशाकरः॥
(नै. ४.७४)

इत्यतो चन्द्रोपालम्भनं व्यर्थमेवेति कथनम्। सख्या पृष्टा 'विदर्भजे! एष अमृतदीधितिरमुष्यांशुभिस्तापं किं भजसे' इति साप्युत्तरति "शश-

भृतश्चन्द्रिका यदि मृता भवन्ति तदा क परितप्यते" अर्थाद् दीधितयोऽमृता अतएव तापदायकाः ( नै. ४.१०४ )। 'धृतिं व्रज, अहेतुकां भीतिं त्यज, अयमचण्डमरीरुदञ्चति' इति सखीवचनं श्रुत्वा भैमी वदति "आतपमुर्मुरैः स्फुटं ज्वलयति, सखि वचसा कथमनुभवं लुम्पसि' इति ( ४.१०५ )। सखी वचनं यत् 'अयि तव हृदयाय शपे यदि विधोरुचेर्गोचरो नासि' इत्यस्योतरं–'रुचिफलं दृश्यते एव तत् त्वचं ज्वलयत्येवासून् उल्ललयति ( नै. ४.१०६ )। 'विधुविरोधितिथि( कुहू )मभिधायिनीं कोकिलां न पुनरिच्छसि किम्' इति पृष्टा दमयन्ती वदति 'किमर्थं गवेषणया मयि सेयमनर्थमयीं गिरं किरति (नै. ४.१०७)' इति सख्या सह दमयन्त्या संवादरूपेण वक्रोक्तिभङ्ग्या चन्द्रविषयकाभिप्रायोऽभिव्यक्तो विरहिण्या सोऽतीव रोचकः।

## चंद्र ओषधयश्च

चन्द्रओषधीनां पतिरिति प्रसिद्धिः। 'नवोदयं नाथमिवौषधीनाम्' ( रघु० २.७३ ) इत्युपमायां कालिदासेनाऽपि चन्द्र औषधीनां नाथः इति वर्णितः। 'शिशौ चन्द्रे रङ्कुर्न स्थितः किन्तु युवा चन्द्रः प्रियाभिरोषधीभिररण्यसंदेशमिव प्रेपितं मृगमङ्के स्थापितवान् ( नै. २२.७६ )। चन्द्रस्य सेवार्थमुपगतानामोषधीनां पल्लवमास्वादयन् शशिनः एव सुधाजलानि श्रयन् एष कजङ्करङ्कुः सुखं वसति ( नै. २२.७७ )। ओषधयः स्वशक्त्या स्वपतिं क्षयितं चन्द्रं त्रातुं न शेकुः ( नै. २२.६६ ) किन्तु हरस्तु ओषधीशं शिरसि धृत्वा विमुक्तशङ्कः सन् अब्धिजं कालकूटमश्नाति विषधरं भुजङ्गं च धारयति ( नै. २२.११७ ) इत्यत्रौषधीनां महत्त्वं कल्पितम्।

## पौराणिकवृत्तान्तेषु चन्द्रः

प्रथमं तावद्धरशिरसि चन्द्रस्य स्थानमति प्रसिद्धत्वात् सर्वैः कविभिर्मुहुर्निर्दिष्टम्। यथा—चन्द्रमौलिः ( रघु. ६.३४, कुमार. ६.४६, ५.८६) शशिमौलिः ( कुमार. ५.६० ), इन्दुमौलिः ( कुमार. ६.४, ७.६३, किरात १६.३२, १७.३४ ), शशिखण्डमौलिः, शशधरमौलिः, अमृतांशुमौलिः, मृगाङ्कमौलिः, इन्दुशेखरः, चन्द्रशेखरः शशिशेखरः, चन्द्रचूडः, चन्द्र-

चूडामणिः, ताराधिपखण्डधारी, शशिकलाभरण, शशीशः एवमादीनि शङ्करस्य विशेषणानि प्रायः पञ्चसु महाकाव्येषु प्रयुक्तानि। क्वचित् 'सार्धचन्द्रं बिभर्ति सः' (कुमार ६.७५), 'विसारि शशिधाम बिभ्रतं शङ्करं ददृशुः' (किरात १२.२४), 'शिरसीन्दुलेखाविराजितं हरं नमामः' (किरात १८.१५), मौलिगतेन्दोः प्रभां दशनांशुभिरुपचिन्वन् परमेश्वरः (कुमार. ६.२५), कपालनेत्रान्तरेणोदितैर्ज्योतिप्ररोहैर्बालेन्दोर्लक्ष्मीं ग्लपयन् शंकरः' (कुमार ३.४६) इति शङ्करस्य वर्णनम्। अस्य विविध-विस्तारा अपि काव्येषु प्रपञ्चिताः। यथा—'तच्छिश्चन्द्रपादैर्नियमित-परिखेदा पार्वती प्रत्यहं गिरीशमुपचचार (कुमार० १·६०)। शूलिनः शीतलेन मौलिचन्द्रशकलेन सती क्षणमधरोष्ठं निरवापयन् (कुमार ८.१८)। 'पत्युः शिरश्चन्द्रकलां चरणेन स्पृशेति पार्वत्याः सखिभिः परि-हासः कृतः (कुमार० ७.१६)। बाल्यत्वादनाविष्कृतलाञ्छनेन चन्द्रेण संगतमौलेर्हरस्योद्गीर्णकिरणकान्त्याऽन्यचूडामणेर्ग्रहणं किमर्थम् (कुमार ७.२५)। कैलासे शिवो रावणध्वनिभीतया पार्वत्या कण्ठसक्तदृढबाहु-बन्धनो विशदाः शशिप्रभा निर्विवेश (कुमार. ८.२४)। पिनाकिनः समागमप्रार्थनया कलावतः कान्तिमती कला शोचनीयतां गता। (कुमार ५·७१) इत्यादिषु शिवेन चन्द्रकलाधारणस्य परिणामः कल्पितः।

'अधरीभूत रवीन्दुनेत्रमेधमानधामलोचनं भालस्थल आदधानम्' इति शङ्करस्य वर्णने चन्द्रसूर्यौ तस्य नेत्रे इति प्रतिपादितम् (कुमार १२.१२)।

> पुरातनीं ब्रह्मकपालमालां कण्ठे वहन्तं पुनराश्वसन्तीम्।
> उद्गीतवेदां मुकुटेन्दुवर्षत् सुधाभरौघाप्लवलब्धसंज्ञाम् ॥
>
> (कुमार. १२.१७)

इत्यत्र हरमुकुटभूतचन्द्रात् स्रवत् सुधाप्रवाहेण लब्धसंज्ञामुज्जीवन्ती-मुद्गीतवेदां पुरातनीं ब्रह्मकपालमालां शिवः कण्ठे वहतीत्युदात्तं वर्णनम्। कुमारकार्त्तिकेयः शम्भोः किञ्चित्कलं प्रलम्बमानं मुकुटेन्दुखण्डं कौतुकेन चुचुम्ब (कुमार ११.४८)। हरशशिरुचा धौतापाङ्गं कार्तिकेयस्य मयूरं गर्जितैर्नर्तयेथाः (मेघ. १.४७) इति मेघाय यक्षकथनम्। अत्र हरशिरः

स्थितचन्द्रस्य कार्तिकेयेनापि सम्बन्धो दर्शितः। चन्द्रमौलिसमीपे वसन् अवन्तिनाथः कृष्णपक्षेऽपि ज्योत्स्नावद् रात्रीरनुभवति (रघु. ६.३४)। सर्वाभिः कलाभिश्चन्द्रस्तारकासुरं सेवते। केवलं हरचूडामणिकृतां लेखां नादत्ते ( कुमार २.३४ )। दिवापि प्रासादशृङ्गाणि ज्योत्स्नाभिषेकद्विगुणद्युतीन् कुर्वन् इन्दुमौलिः ( कुमार ७.६३ )। इन्द्रनीलपर्वते शम्भोरिन्दुलेखाः स्नपितनवलतातरुप्रवालैरमृतलवस्रुतिशालिभिर्मयूखैरसितयामिनीषु सततं वनान्तमकलयन्ति ( किरात ५.४४ ) इति नगरोद्यानादिवर्णनेऽपि शङ्करचूडास्थितचन्द्रस्य गौरवो दृश्यते।

व्यवधाने सत्यपि महादेवचूडानिलयं चन्द्रकलां को न वेद तथैव दूरेऽपि दमयन्तीं को न वेद? ( नै. २.६ )। मर्त्यलोकमदनो नलो दिग्वसनस्य विधुमौलेः स्पर्धयैव। बिभ्रदभ्रद्युतितारमम्बरं परिदधे ( नै. २१.१४ )। एकादशरुद्राणां जटाविलम्बिनः शशिकोटयः ( कुमार. २.२६ )। अस्तं गच्छतोऽस्य शशिन एकादश कला रुद्राणां मौलीन् प्रति यास्यन्ति। शेषाः पञ्च पञ्चेषोस्तूणीरम् ( नै. २२.११३ )। मौलीन्दुलेखाविशदामर्जुनस्य कीर्तिं विधास्यन् शम्भुः ( किरात. २२.१८ )। रुष्टाद्रिजाचरणकुङ्कुमपङ्करागसङ्कीर्णशङ्करशशाङ्ककलाङ्ककारैः (दमयन्ती नखपादैः) ( नै. ११.१२२ ) इत्यादिषु शिवचूडामणिश्चन्द्र उपमानी कृतः।

सागरादुत्थितश्चन्द्रः शिवशिरसि स्थापित इति समुद्रमन्थनकथापि नैषधीयचरिते निर्दिष्टा देवास्तुषारमयूखलेखां रत्नाकराद् गिरीशोत्तमाङ्गं निन्दिरे। तथा शिबिकावाहकादमयन्तीममुष्मादन्यं नृपं निन्दिरे (नै.११. ५६)। समुद्रादुत्थितश्चन्द्रस्तत्कालमेवेशेन मूर्ध्नि धृतः। अतः स एककल एवोत्पन्न इति तर्क्यते ( नै. २२.८३)।

हरशिरःस्थितचन्द्रस्य कलामधिकृत्यापि श्रीहर्षेणाभिनवकल्पना उद्भाविता। यथा—लोका रजनीभर्तुः षोडषमंशं कलामामनन्ति। प्रतिपदाद्याराकापर्यन्तं वार्धिष्णवः पञ्चदश एव कलाश्चन्द्रं वृत्तयन्ति। या शेषा कला तिथिभृते उद्धृता सा किं हरालङ्कृतिः ( नै. २२,१४० )। उज्जयिन्यां हरमौलिशयालु रेका चान्द्री लेखा। साऽनध्यायहेतु प्रतिपच्चिह्नं नापैति। अत आगःशतं विदधतोऽप्यवन्तिनाथस्य समिद्धकामा वामाः परुषमक्षरं नाधीयते ( नै. ११.६२ )। मलयाद्रिस्वामिनो वर्णने

तस्य कीर्तिपूरः स्मरहरशिरश्चन्द्रस्यैककलायाः पञ्चदशकलाभिः पूरकः' अर्थात् तस्य कीर्तिः स्वर्गं गत्वा शिवशिरः स्थितं चन्द्रं षोडषकलं करोतीति भावः ( नै. १२.५७ ) । शिवशिरसि चन्द्रो नित्यमेवैककल इत्यस्य कारणमुत्प्रेक्ष्यते यथा—शिवो मृत्युञ्जय अतस्तस्य जटायां वसन् चन्द्रो न क्षीयते । किन्तु नापि वर्धते । यतः स्वसुधया प्राप्तजीवनानि शिवमालास्थितमुण्डानि राहव इति मत्वा चन्द्रो भीतिः (नै. २२.६२) ।

शिवशिरसि चन्द्रधारणे हेतुरपि तर्कितः । यथा—दक्षयज्ञे रुद्रस्येषुणा विद्रावितं मृगं तारारूपेण व्योमिनि वीक्ष्य बिभ्यद् एण इन्दुमीशस्य चूडामणिं ज्ञात्वा शरणं विवेश । इति कलङ्कविषये तर्कः ।

> धिक् तं विधेः पाणिमजातलज्जं
> निर्माति यः पर्वणि पूर्णमिन्दुम् ।
> मन्ये स विज्ञः स्मृततन्मुखश्रीः
> कृतार्धमौज्झद् हरमूर्ध्नि यस्तम् ॥ ( नै. ३.३२ )

इत्यत्र विधिना नलमुखसौंदर्यं स्मृत्त्वार्धकृतेन्दुर्विफलो ऽस्तीति मत्वा लज्जया हरमूर्ध्नि क्षिप्तः । इति हरशिरसि चन्द्रस्थापनस्य कारणं कल्पितम् । नलेन गृहीतकान्तिसारे जगति शशिना शिलोञ्छवृत्तिरशीलि । तस्मान्माणवकोऽपि स हरेण मौलावारोपितो यज्वनां राज्येऽप्यभिषिक्तोऽतो द्विजराजः कृतः ( नै. ८.४२ ) । अर्थात् नलगृहीत कान्तिसारादवशिष्टेन कान्तिभागेनापि चन्द्रः सौन्दर्यमर्जितवान् येन सुन्दरत्वाद् बालोऽपि स हरेण शिरसि धृतः । अन्यत्र—'शिवो निजमौलौ स्थापनादिन्दोः षोडषीं कलां प्राप्तवान् किन्तु स तामपि नार्हति । ततश्चन्द्रस्य कलङ्क एणनाभिकस्तूरीकारणात्, शिवस्य कृष्णकण्ठस्तु विषात् । चन्द्रः सुधया धवलः शिवस्तु चिताभस्मना पाण्डुः । अतश्चन्द्र एव शिवादधिकस्तेन हरेण स मौलौ धृतः' इति भावः ( नै. २२.६४ ) । शिव एनमौषधीशमुत्तमाङ्गे धारयन् विमुक्तशङ्कोऽब्धिजं विषमश्नाति विषधरं भुजङ्गं च धत्ते ( नै. २२.११७ ) इत्यपि शिरसि चन्द्रधारणस्य हेतुः प्रोक्तः कविना । द्विजेन्द्रः स्मरस्यार्धदग्धास्थिभिर्निर्मितो यतो स्मरारिणा. मूर्ध्नि धृतोऽपि स्मरस्यैव पौष्टिकतौष्टिकं तनोति (नै. २२.६१)

इति शिवेन मदनदहनस्य मदनचन्द्रयोः सख्यस्य च निर्देशः कृतः। अखिलेन लावण्येन दमयन्तीवदनं निर्माय तत्पात्रमात्रस्पृशा प्रोञ्छन-लब्धार्धमलिनजलेनशेषेण निर्मितस्य चन्द्रस्य लेखाऽपि सुषमयाऽहं-कृत्य शम्भोः शिरोमणिरभूत् (नै. २२.१४३) इति दमयन्तीवदन-सौंदर्यवर्णनम्।' सुधां सुराय कलां हराय ददच्चन्द्रो जयति (नै. २३.६३), इत्यत्र चन्द्रस्य हरशिरःस्थितिना सह तस्य सुधायाः सुरैः पानमपि निर्दिष्टम्। ग्लपितशम्भुगलाद् गरलाद् विधुर्दोहवदान्यतामशिक्षत किम् (नै. ४.४८)। चन्द्रेण हरशिरःस्थितिभूरपि विस्मृता किम् (नै. ४. ५०) 'शशकलङ्क भयङ्कर, भूतपतिं श्रितः' (नै. ४.५५) इत्यादिषु दमयन्त्या चन्द्रस्य भर्त्सनायामपि चन्द्रस्य हरशिरसि स्थिति निर्दिष्टा। इन्द्रो बालस्य चूडाशशिनो ऽपराधाच्छूलिनो-ऽप्याराधनं न करोति (नै. ७४) इत्यत्र दमयन्ती विरहे चन्द्रपीडा-भयादिन्द्रेण हरसेवा परित्यक्तेति हरशिरः स्थितचन्द्रोऽपि विरहिणम-पीडाकर इति सूचितम्। यथा चन्द्रस्य हरशिरःस्थितिः पुराणेषु प्रसिद्धा तथैव सुरैश्चन्द्रकलानां पानमपि। तदपि कविभिरुक्तं यथा—

स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्ति।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः॥
(रघु. ५. १६.)

इति कालिदासस्य प्रसिद्धे श्लोके। यथा च देवनाममृतपानं चन्द्रा-मृतत्वात् (नै. ११. ६), सुधां सुराय ददच्चन्द्रः (नै. १२. ६३) 'सुधा-भुज एनं चन्द्रं परिपीय रिक्तं कुर्वन्ति (नै. २२. ६८)', इत्यादिषु कविभि-रिदमेवोल्लिखितम्।

अत्रेर्नयनसमुत्थं ज्योतिः (चन्द्रं) द्यौरिव राज्ञी गर्भमधत्त (रघु. ३. ७५), अत्रिनेत्रादुत्पन्नोऽपि त्रिनेत्रभूः (नै. २२.७३) अर्थाद् अत्रि-नेत्रादुत्पन्नश्चन्द्रः शिवशिरःस्थितः इति वर्णनं विरोधाभासेन कृतम्। 'अयं चन्द्रः सागरात्, मुनिलोचनाच्च जातः। अतो द्विजः किम् (नै. २२. १३३)। चन्द्रजनकस्यात्रिमुनेर्नेत्रस्य तारा किलैकाभूत्। तत्पुत्रस्य चन्द्रस्येयं सम्पदधिका यतोऽस्य सप्तविंशतितारा: (नै. २२. १२७)।

अस्माकममहतामक्ष्णि तेजोमयबिन्दुरिन्दुर्धवलवर्तुलाकारेण भानू किं नास्ति नेत्रचिपटीकरणेन सोऽणुकः क्षणिको दृश्यते। महतोऽत्रेस्तु नेत्रे महीयान् स न च क्षणिकोऽपि तु मासेन नाशी तद् युक्तमेव (नै. २२.६८) इत्यादिषु चन्द्रस्यात्रिमुनिनेत्रादुत्पत्तिमधिकृत्य कविकल्पना।

'विलोचनस्थानगतोष्णरश्मि निशाकरो रैवतकः' (शिशु. ४.४) इत्यत्र विष्णुना रैवतकस्य सादृश्यं प्रकटयन् कविश्चन्द्रस्य विष्णुनेत्रत्वमपि प्रतिपादयति। मेरुं प्रदक्षिणं कुर्वन्नपि शर्वरीशो महेन्द्रानुजस्य (विष्णोः) दृष्टिमूर्त्या वामनयनरूपेण द्रष्टा सन् दमयन्तीस्वयंवरदर्शनविघ्नतापं न प्राप (नै. १०. ५४) 'विधुरूपेण वामलोचनेन मयि अर्पितेन त्रिविधं तापं दूरी कुरु' इति नलेन कृता विष्णोराराधना (नै. २१. ११५) पुरा यदा मृगाङ्को विष्णोर्नेत्रारविन्दत्वमाप तदा तस्याङ्क एव कनीनिकाया इन्दीवरभ्रमरस्य च सुन्दरत्वमगात् (नै. २२. ८८)। विष्णुना चन्द्रो गरुडश्च द्वावपि तयोः साम्यं वीक्ष्य क्रमेण नेत्रव्यापारे वाहनव्यापारे च नियुक्तौ तद् युक्तम्। यतो द्वावपि द्वौ पक्षौ भजतः, द्वावपि च द्विजाधिराजौ हरिणाश्रितौ (नै. २२. ८६) 'कलङ्करूपं कुरङ्ग शशं वा स्वोदरे प्रक्षिप्य जातस्फीततनोरिन्द्रपत्न्या प्राच्या दिशा प्रसूतस्य हर्यक्षीभवतश्चन्द्रस्य दमयन्तीवदनाम्बुजाद् भङ्गोऽजनि (नै. २२. १३७)। दृशं मीलयतो विष्णोः श्यामत्वलक्ष्मीविजितेन्दुलक्ष्मपक्ष्मैव तमांसि (नै. २२.३३)। इत्यादिषु पुराणोक्तं चन्द्रस्य विष्णुवामनयनत्वं प्रतिपादितम्।

अन्येऽपि केचन चन्द्रविषयकाः पुराणस्थवृत्तान्ताः काव्येषु निर्दिष्टाः। यथा—दशाननेनापि पुरा जगन्ति जित्वा चन्द्रो जेतुं नापारि (इति पुराणोक्तं)। स चन्द्रो दमयन्त्या आननेन जित इत्ययं कलङ्कस्तस्मिन् लग्नः (नै. २२. १२६)। अस्य चन्द्रस्य गुरुदारान् यातवतोऽपि पातो न बभूव। यतः प्रवृत्तयो (धर्माधर्महेतुभूताः कर्मारम्भा)ऽप्यात्ममयप्रकाशान् अन्तिमदेहमाप्तान् न नहन्ति। अर्थात् जीवन्मुक्तानां तेजोरूपाणां प्रत्यवायो न विद्यते' इति भावः (नै. २२. ११८)। अस्मिन् चन्द्रेण बृहस्पतिदारागमनं सूचितम् दक्षस्य शापेन शशी 'क्षयीव......

( कुमार ६. १७ ) इत्यस्मिन् दक्षशापस्य निर्देशः। सोमोद्भवा सरिदिति ( रघु. ५. ५६ ) नर्मदाया विशेषणमपि पुराणाश्रितम्।

किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः॥
( नै. ४. ५२ )

इति दमयन्तीवचने तथा–

स्वधाकृतं यत्तनयैः पितृभ्यः श्रद्धापवित्रं तिलचित्रमम्भः।
चन्द्रं पितृस्थानतयोपतस्थे तदङ्करोचिः खचिता सुधेव॥
( नै. २२. ११६ )

इत्यत्र 'चन्द्रो वै पितृलोकः', 'मनश्चन्द्रे निलीयते' इति च श्रुतिराश्रिता।

सशरीरं चन्द्रं गत्वा तत्रस्थगर्तधूलिपाषाणादीनां दर्शनं त्वस्माकं दूर एव। मनस्तु चन्द्रं गच्छत्येव। अतो मनसैव चन्द्रसुधासेवनाय कविभिश्चन्द्रामृतसागरे वर्णनपूरो निर्मितः। तत्रावगाहनं कृत्वा चन्द्रामृतसागरे रसिकानां मनो निमज्जत्वित्याशयैष प्रयास। अस्मिन् येऽप्यस्फुटताक्रमभङ्गानुक्तिपुनरुक्त्यादयो दोषाः सम्भवन्ति तेऽपि तस्मिन्नेवामृतसागरे कामं निमज्जन्तु।



# ख्यातिवादः

*काशीस्थसुमेरुपीठाधीश्वरजगद्गुरुशङ्कराचार्य-*

**श्रीमन्महेश्वरानन्दसरस्वतीपादाः**[1]

तेजःश्रुतिशिरःश्लाघ्यं सौभाग्यं युक्तयोगिनाम् ।
चन्द्रचूडचमत्कारि चिरं किमपि चिन्तये ॥ १ ॥

ख्यातिर्नामात्र प्रकरणे प्रायेण भ्रमः । सा च संख्यावद्भिरनेकसंख्यांख्यायते । तत्र पञ्चैव तु भूयः प्रपञ्च्यमानाः समालोच्यन्ते यथापर्यायम् ।

## बौद्धमतम्

तत्र सौत्रान्तिकताथागतस्य आन्तरवद् बाह्यमपि पदार्थसार्थं प्रतिपद्यमानस्य विप्रतिपद्यमानस्य तत्प्रत्यक्षत्वेऽनुमीयमानत्वमेव तु तदीयमङ्गीकुर्वतोऽयमत्र मतनिगर्वः—शुक्तिकाशकले इदं रजतमिति, आरकूटाभरणे हिरण्यमिदमित्यादिः संविदुद्यती स्वाकारमेव रजतहिरण्यमान्तरं बहिः शुक्तिकाशकलादौ गोचरयति । यतो व्यामुह्य रजतहिरण्यार्थनया प्रवर्त्तमानः प्रेक्षावान् पुरुषो विषयमर्थ्यमानमनुपलभमानो निश्चनुते 'नेदं रजतम्', 'नेदं हिरण्यम्' इति । प्राक्तनविपरीता तु मतिरियमुज्जिहाना रजतहिरण्ययोरिदन्तां पुरोभावितां बाह्यतामेव बाधमाना लाघवमनुसरन्ती ज्ञानधर्मतामेव तयोर्व्यवस्थापयतीति युक्तं ज्ञानधर्मत्वमेव भ्रमप्रदेशे रजतहिरण्यादीनाम् । नेदं रजतमिति मतौ रजतस्य धर्मिणो बाधाकलने तु रजतं धर्मि, तस्य च धर्म इदन्त्वं बाधिते स्यातामिति गौरवं पर्यालोचनीयम् । एवं वैभाषिक-योगाचारयोरपि ख्यातिप्रक्रिया । वैभाषिकस्य दर्शने बाह्यमप्यस्ति वस्तु दृश्यम्, इति तत्र नास्ति स्वल्पो-

---

१. १५. ९. ७५ दिवसे ब्रह्मलीनाः, पूर्वाश्रमे च पं० श्रीमहादेवशास्त्रीति नाम्ना काशीहिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालये साहित्यविभागाध्यक्षाः, प्राचार्याश्च ।

ऽपि प्रक्रियाकल्पनाप्रयासः। योगाचारो यद्यपि नाङ्गीकुरुते बाह्यवस्तुनोऽस्तित्वं तथापि अध्यासिकं तदस्तीति तत्राप्येषैव दिगनुसर्त्तव्या। एतन्मतमान्या ख्यातिः ज्ञानख्यातिरात्मख्यातिरिति चाभिधीयते।

## मीमांसकमतम्

मीमांसावासनावासितचेतसस्तु नेदं विचारसहं मन्यन्ते। ते हि ब्रुवते—या खलु भ्रमभूमौ रजतप्रभृतीनामात्मरूपता (ज्ञानाकारता) सौगतविचारचातुरीरञ्जितान्तःकरणानां भवतामभिमता सा न खलु समीचीना, प्रमाणाभावात्। न च इदं रजतमित्यनुभवस्तत्र प्रमाणमिति शक्यमभिधातुम्, तेन रजतस्य इदंकारास्पदत्वेन (शुक्तिकादिपुरोवर्तिनिष्ठत्वेन) बोधनीयत्वात्। आन्तरत्वे तु 'अहं रजतम्' इति संविदाकारतापत्तेः, प्रतिपत्तुरात्मनः प्रत्ययादव्यतिरेकात्। अथ तेऽभिदधीरन्—इदं रजतमिति भ्रान्तेन सविकल्पकेन विज्ञानेन ग्राह्यं चाध्यवसेयं चेति द्वे विषयी क्रियेते। तत्र ग्राह्यं यदविकल्पम् आकारविनिर्मुक्तं स्वस्वरूपम्, स्वविषत्वलक्षणस्वप्रकाशत्वाङ्गीकारात्। अध्यवसेयं च रजताकारस्य तस्य बाह्यत्वापरपर्यायः शुक्तिकादिनिष्ठो विकल्परूप इदन्त्वाकार इति विज्ञानसाकारवादिनां विचारपरिपाटी। तथा च पुरोवर्त्तिन्यधिष्ठाने शुक्तिकाशकलादौ विज्ञानाकारो रजतमिदन्त्वेनारोप्यत इत्यनुभवे नाहन्त्वावगाहनप्रसंग इति चेत्स्यादप्येवं यदि विज्ञानस्य साकारत्वे किमपि सुदृढं प्रमाणं स्यात्, तदेव तु न पश्यामः। न च नेदं रजतमिति बाधिका संवित्ती रजतस्य विज्ञानकारत्वे प्रामाण्यमासादयेदिति वक्तुं साम्प्रतम्, अस्याः साक्षाद् विज्ञानाकारत्वोपदर्शनव्यापारवत्त्वं कल्पयतो विक्षिप्तपथपान्थायमानत्वात्। पुरोवर्त्तित्वनिषेधादर्थादस्य (रजतस्य) विज्ञानाकारता फलतीति कथनमप्यविचारितरमणीयम्, यतो हि बाधवित्ती रजतार्थिनः प्रवृत्तिनिमित्तभूतं रजतस्यासन्निधानाग्रहं बाधमाना असंन्निधानग्रहं जनयन्ती रजतमसन्निहितमवस्थापयन्ती कुतः समर्थयेत रजतस्य अत्यन्तं सन्निधानं प्रतिपत्तृरूपं प्रयोजयितुम्। एवं च बाधविदा रजतस्य इदन्तायाश्च अनिषेधात् रजतभेदाग्रहप्रसञ्जितस्य रजतमेवेति व्यवहारस्य निराकरणमात्रनिर्वाहिकया सर्वं समञ्जसं सम्पाद्यत इत्येतन्मते पूर्वस्मादपि मताल्लाघवमतिरिच्यत इति सुवर्ण-सौगन्ध्ययोगः।

अथान्यथाख्यातिवादिनो ब्रूयुः—न खलु बाधधिया रजतव्यवहारो वारणीयः, अपि तु रजमिदमिति भाने शुक्तिकाशकले भासमानं रजतम्, तदपि दुराशाग्रस्तम्। तथाहि—रजतप्रत्ययस्य इदमित्यंशेन शुक्त्यवगाहनं न युक्तम्, अनुभवबाधितत्वात्। न च पुरोवर्त्तिदेशस्थितिस्तत्रकारणं शुक्तिकालम्बनत्वे, शुक्तित्वेन प्रकारेण शुक्तेर्भासमानत्वेऽस्त्वनुभवविरोध इति भ्रमितव्यम्, पुरस्तिष्ठतां घटकर्परप्रभृतिनामप्यालम्बनत्वप्रसक्तेः अविशेषात्। न च सादृश्येन रजतवित्तिप्रयोजकसंस्कारोद्बोधहेतुतया शुक्तेरालम्बत्वाभिधानमुपपत्तिमत्, करणानामपि कारणतया आलम्बनत्वस्य दुर्निवारतापत्तेः। शुक्तिकाया रजतभाने भासनं तु परिशिष्यमाणं कुतो नोपहसनीयम्? अनुभवस्यैव बाधकत्वात्।

एवं सर्वेदृशव्यहृतिजीवातुर्मिथ्याप्रत्ययोऽपि न सम्भवत्येव, यथार्थविज्ञानविजननोपलब्धविभूतिशालिनामिन्द्रियाणां मिथ्याधियो जनने सामर्थ्याभावात्। दोषसहकारो मिथ्याविद प्रादुर्भावयतीति चेन्न दोषाणां स्वसहकारिवृत्तिकार्यानुकूलशक्तिप्रतिबन्धमात्रे सामर्थ्यात्। न हि भवति दूषितात्कुटजबीजाद् वटाङ्कुरजन्म। किंच प्रतीतीनां क्वापि मिथ्यात्वाभ्युपगमे सर्वत्रानास्थाप्रसक्तिः। तस्मात्सर्वं ज्ञानं यथार्थमेवास्थेयम्। इदं रजतमित्यादि च ज्ञानद्वयम्। इदमिति शुक्तेः प्रत्यक्षं पुरस्थितद्रव्यमात्रविषयम्, तत्र शुक्तित्वसामान्याग्रहो दोषात्। 'रजतम्' इति च स्मृतिः। सा च सदृशदर्शनोद्बुद्धसंस्कारेण जन्यते। ते च विभिन्ने अपि प्रत्यक्षस्मरणे स्वरूपतो विषयतश्चाप्रतिपन्नभेदे ज्ञानयोरभेदं विषययोस्तादात्म्यव्यवहारं च प्रवर्त्तयतः। भेदाग्रहप्राप्तमभेदव्यवहारं बाधमानो बाधबोधो बाधकत्वेनाख्यामानः सुसंगत एव। इत्थं च 'इदं रजतम्' इति प्रत्ययस्य लोकैर्व्यवह्रियमाणं भ्रान्तत्वमपि सुयोजमेव। तथाचायमेतद्दर्शनाभिप्रायः—सर्वे विप्रत्तिपन्नाः सन्देहा विभ्रमाश्च, समीचीना, ज्ञानत्वात् घटपटादिज्ञानवदिति। एतन्मतसंप्रतिपन्ना ख्यातिः, अख्यातिः, विवेकाख्यातिरिति चोच्यते इत्यास्तां विस्तरः।

## नैयायिकमतम्

दुरन्तरविचारकान्तारसंचारकातराणां मतिमांसलमीमासकधौरेयाणां मतमिदमसमीचीनमेवेति कर्कशतर्कवक्रविमर्शशालिनस्तार्किकशिरोमणयः

संगिरन्ते। तत्र तदीया उपपादकयुक्तयः—तत्र तावत् पुरोवर्त्तिनि परिस्फुरति वस्तुनि, रजताञ्छितवाञ्छावतां प्रवृत्तिः, रजतमिदमिति तादात्म्यव्यवहारश्च भवतीति सर्वसंवादः। तच्च रजतप्रकारतानिरूपित तादात्म्यसंसर्गतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिबोधादेव सम्पद्येत नान्यथा (प्रत्यक्षस्मृत्योः स्वरूपतो विषयतश्च भेदाग्रहात्) यतः खलु निखिलश्चेतनलोको ग्रहणादेव क्वचित् किंचन व्यपदिशति प्रवर्त्तते च, तन्नहि भवेत् अग्रणात् (भेदाग्रहात)। यद्यपि ग्रहणस्मरणं सर्वथा अगृहीतभेदं तादात्म्यादिव्यपदेशनिर्वाहकं नाग्रहणमिति, तदपि न सम्यक्, न हि खलु रजतप्रातिकार्थपृथक्स्मृतिः प्रवृत्तिं प्रयोक्तुं शक्नुयात्, इदङ्कारास्पदे पुरोवर्त्तमाने वस्तुनि प्रवर्त्तमानः पुरुषो रजतार्थी यदीदङ्कारास्पदं रजतं न जानीयात् कथं तत्रप्रवर्तेत नाम। यद्यभिधीयेत रजतभिन्नत्वेनाग्रहणं प्रवृत्त्युपपादकम्, तदा प्रतिवक्तव्यं, रजतत्वेनाग्रहणमुपेक्षाकारणं कस्मान्नेति। तस्मादुपादानोपेक्षाभ्यामव्यवस्थाप्रसङ्गभंगाय विवेकाप्रत्ययः रजतारोपोत्पादनेनैव प्रवृत्तेर्हेतुरभिधेयः, तथाहि—रजतार्थी पुरोवर्त्तिनि भेदाग्रहाद् रजत्वमारोप्य रजतजातीयस्य अन्यदेशवर्त्तिन उपकारकारणत्वमनुस्मृत्यरजतत्वेन हेतुना पुरस्थे तदनुमाय तत्र प्रवर्त्तत इत्येष क्रमः सिद्धः। न स्मृतं रजतत्वं पुरस्थिते वस्तुनि उपकारकारणतामनुमापयितुं क्षमते, रजतत्वस्य हेतोः पुरोवर्त्तिनि वस्तुनि पक्षेऽसत्त्वेन स्वरूपासिद्धेर्दोषात्। तस्मादिदं निर्गलितम्—रजतादिगोचरं विमतं ज्ञानं रजतत्वनिष्ठप्रकारतानिरूपितपुरोवर्त्तिविशेष्यताकं, रजतार्थनावतस्तत्र नियमेन प्रवृत्तिप्रयोजकत्वात्। यद् यद् ज्ञानं यत्र यत्र मियमेन प्रवर्त्तयति तत्तज् ज्ञानं तत्तद्विषयकम्, उभयसम्प्रतिपन्नं यथा रजतमिदमिति ज्ञानम्। किं च वास्तविकरजतस्थले लौकिकसन्निकर्षादिसामग्रीवशाज् जायमाने विशिष्टप्रत्यये प्रवृत्तौ क्लृप्तस्य कारणत्वस्य शुक्तिगोचररजतार्थिप्रवृत्तावपि कल्प्यमानत्वे लाघवम्, संवादिप्रवृत्तौ तत्कारणम्, विसंवादिप्रवृत्तौ च भेदाग्रह इति गौरवम्। शुक्तौ रजतार्थिप्रवृत्तिः, इष्टप्रवृत्तिगोचरविशिष्टवित्तिसाध्या, प्रवृत्तित्वात्, रजते रजतत्वप्रकारकप्रवृत्तिवत्, इत्यनुमानस्य सत्त्वेन विशिष्टप्रत्ययस्य प्रवृत्तिकारणताकल्पनमिति न प्रमाणाप्रमितत्वकथनं दोषः एवं च असत्यरजतस्थले विशिष्टप्रत्यायानु-

रोधेन कल्प्यमानं ज्ञानस्य प्रत्यासत्तित्वमपि न दोषाय, फलमुखगौरवस्य अदोषताया निषादस्थ[1] पत्यधिकरणन्यायेन मीमांसकैरप्यङ्गीकारात्। यच्च व्यावहृतं भासनानास्पदत्वेन शुक्तिर्नालम्बनं रजतमिदमिति भान इति, तन्न यतस्तदनालम्बनत्वेऽनुभवितुः पुरोवर्तिद्रव्ये रजतमिदमिति करशाखया निर्देशः कथङ्कारं सङ्गच्छताम्? शुक्तित्वस्य अभासमानत्वे तत्तात्पर्यमिति चेदोमिति ब्रूमः

यदपि दोषः कारणे सामर्थ्यं प्रतिहन्ति न चाधत्ते, तदपि न, अनुभूतं हि कारणानां दुष्टानां स्वाभाविककार्यसामर्थ्यप्रतिरोधेन कार्यान्तरजननशक्तिशालित्वम्। यथा दवदहनदग्धान्यपि वेत्रबीजानि कादलीकाण्डं जनयन्ति। यथा च भस्मकदोषदुष्टोऽप्यनलो बह्वन्नं पचतीति। यच्च सर्वे विभ्रमा विमताः, यथार्थाः प्रत्ययत्वात्, इति विमतसन्देहविभ्रमपक्षकं यथार्थत्वानुमानम्, तदप्यसाधु. यथार्थत्वस्य पक्षे प्रत्यक्षतो बाधात् दहनेऽनुष्णत्वानुमानवत्।

अथ च यदभिहितम्—मिथ्यावित्तेर्व्यभिचारित्वेन सर्वप्रमाणेष्वनाश्वासइति, तदप्यापातरमणीयम्, विकल्पत्रयासहत्वात्। तथाहि—किम् अव्यभिचारः प्रामाण्यम्, प्रामाण्यहेतुर्वा, प्रामाण्यव्यापको वा, येन व्यभिचाराज् ज्ञानानामप्रमाण्यमापादितं स्यात् (यद्यव्यभिचारः प्रामाण्य, व्यभिचारोऽप्रामाण्यम्, यद्यव्यभिचारः प्रामाण्यहेतुः, व्यभिचारेण तद्भिन्ने न प्रामाण्याजननेऽप्रामाण्यं सिद्धमेव, यदि चाव्यभिचारः प्रामाण्यव्यापकस्तर्हि व्यापकाभावस्य व्याप्याभावव्याप्यतया व्यभिचारेण प्रामाण्यव्यापकाव्यभिचाराभावपर्यवसितेन अप्रामाण्यरूपो व्याप्याभावोऽनुमितः स्यादिति भावः। सर्वमेवैतन्न संभाव्यम्, सितनीलादिषु व्यभिचरतामपि लोचनादीनां बोधजनकत्वेन प्रामाण्यात्, दहनादिनिरूपिताव्यभिचारवतामपि धूमादीनां कुतश्चित्प्रनिबन्धकाद् अनुद्भावितदहनादिवित्तीनामबाधकत्वेन अप्रामाण्यात्।

---

[1] पूर्वमीमांसायां षष्ठेऽध्याये प्रथमे पादेऽन्तिमाधिकरणे निरूपितोऽयं न्यायः।

ननु—'अहो बत ! महानेष प्रमादो धीमतामपि ।
ज्ञानस्य व्यभिचारित्वे विश्वासः किंनिबन्धनः' ॥

इत्यादिनोट्टङ्कितं ज्ञानगतव्यभिचारदोषमतिवृत्त्य कारणगतदोषो-द्धारेण कः पुरुषार्थः ? ज्ञानेन हि स्वकार्येऽव्यभिचारः (प्रामाण्यम्) अपेक्ष्यत इति चेत्, किं ज्ञेयप्रकाशनेऽव्यभिचारो ज्ञानेनापेक्ष्यते ? उत प्रवृत्तिरूपे कार्ये ? नाद्यः- उत्पत्त्यैव ज्ञानेन वस्तुप्रकाशाविर्भावनात्, तत्रा-लेशतोऽप्यव्यभिचारानपेक्षणात् । न द्वितीयः, प्रामाण्यस्य परतस्त्वेऽ व्यभिचारग्राहकस्य अर्थक्रियासंवादादिबोधस्य ज्ञानान्तरात् प्रामाण्य-निश्चयेऽनवस्थाप्रसङ्गात्, (अर्थक्रियासंवादो नाम दूरतो वह्निवित्तौ जातायां सति सन्निधाने दाहसामर्थ्यानुभवः) अनवस्थाप्रसंगभंगाय ज्ञानान्तरा-त्प्रामाण्यनिश्चये च अनिश्चितप्रामाण्यकादस्मात्प्रथमज्ञानस्य प्रामाण्या-सिद्धेः । अनवधारितप्रामाण्यादपि ज्ञानाद् विषयसिद्धौ दूरत्वादिदोष-वशाच्छङ्कितप्रामाण्याच्चन्द्रसूर्यमण्डलादिप्रादेशिकत्वग्रहणादपि तत्प्रादे-शिकत्वसिद्ध्यापत्तेः । स्वतःप्रामाण्ये च प्रथमज्ञानस्यापि प्रामाण्या-पातात् । एषैव ख्यातिरन्यथाख्यातिपदेन तार्किकैर्व्यवह्रियते, इत्यलं भूम्ना ।

## विशिष्टाद्वैतमतम्

विशिष्टाद्वैतवादिनस्तु अत्राप्यपरितुष्यन्तः सत्ख्यातिवादमेवा-भ्युपयन्ति । ते हि मिथ्याप्रत्ययं गगनकमलिनीकल्पं निह्नुवते । तथाहि— इदं रजतमित्यत्र, मरुमरीचिकासु इदं तोयमित्यत्र च सत्यमेव रजतादिकं भासते. शुक्तिकासु रजतावयवानां मरुमरीचिकासु तोयावयवानां च सत्त्वात्, चाकचिक्यादिसामग्रीवशात् रजतादीनां ग्रहणात्, शुक्तिकादी-नामग्रहणात् । रजतादीनां सत्त्वेऽपि शुक्तिकात्वादिना व्यपदेशस्तु तत्तदवयवभूयस्त्वनिबन्धनः । अन्यत्रापि यत्र यदवयवभूयस्त्वं तत्र तद्व्य-पदेशः । अत एव नेदं रजतमिति प्रत्ययस्य बाधकत्वमुपपद्यते, स्वल्पा-वयवसत्त्वनिबन्धनप्राप्तव्यवहारस्य निवर्त्तनमात्रेण चारितार्थ्यात् । चन्द्रादौ द्वित्वप्रतीतिस्तु समवायेन सामग्रीद्वयाद्दे शद्वितयगतचन्द्रद्वित्वावगाहनेन वा सूपपादा । यत्र यदवयवबाहुल्यं तत्रैव तत्प्रतीतिर्यथारंगादौ रजतादेः ।

अत एव न घटादौ राजतप्रत्ययः । एवं च सर्वं ज्ञानं समीचीनमेवेति, एतन्मतरहस्यम् । तथाचोक्तं तन्मताचार्य्यैरेव—"यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" इत्यलं समासेनैवेति ।

## अद्वैतवेदान्तिनां मतम्

उपनिषत्सारग्राहिणः श्रीमदाचार्यशङ्करभगवत्पादानुयायिनोऽद्वैत-ब्रह्मवादिनः पुनरेतन्मतचतुष्टयप्रतिपादितं ख्यातिप्रक्रियाकलापं श्रुति-विरुद्धमुपपत्तिप्रतिकूलं चेति व्याहरन्ति । तथाहि:—एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किंचनेत्यादिश्रुतिभिर्ब्रह्मणि स्वगत-स्वसजातीय-स्वविजा-तीयभेदानां निरसनात्, सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या ज्ञानरूपस्य ब्रह्मणः सत्यत्व ( नित्यत्व ) प्रतिपादनाच्च पूर्वदर्शनेषु श्रुतिविरोधः स्फुट एव । मीमांसकतार्किकरामानुजीयसौत्रान्तिकवैभाषिकैर्ब्रह्मणोऽतिरिक्त-स्यापि सत्यत्वाभिधानात् योगाचारेण बाह्यालीकत्वं मन्यमानेन विज्ञानानां क्षणिकत्वाङ्गीकारात् कस्यापि वस्तुनो नित्यत्वानङ्गीकारात् । उपपत्ति-विरोधस्त्वित्थम्—योगाचारातिरिक्ताः सर्वेऽपि विश्वं निर्वचनीयं मन्यन्ते। नचैतत्संभवति, लक्षणाधीना हि लक्ष्यव्यवस्थितिर्लक्षणानि चानुपन्नानि, ज्ञाताधिकरणादिलक्षणनिरूपणद्वारेण चक्रकाद्यापत्तेः । अयमस्याभिप्रायः—गन्धादिलक्षणादिना पृथिवीरूपे लक्ष्यात्मकेऽधिकरणे ज्ञाते सति 'इयं पृथिवी, गन्धात्; पृथिवी, इतरभिन्ना गन्धात्, इत्येवं व्याप्तिज्ञानेनानु-मानेन पृथिवीव्यवहारः, इतरभेदो वा साधनीयः, तत्र लक्षणज्ञानमितर-साधरण्येन भवदप्यकिंचित्करम्, व्यावृत्ततया लक्षणज्ञानमेषितव्यम्, ततश्च यदि लक्षणव्यावर्त्तनं लक्ष्यायत्तं तदा परस्परापेक्षत्वादन्योन्याश्रयः, एकलक्षणव्यावृत्तिर्लक्ष्याधीना, लक्ष्यव्यावृत्तिश्चापरलक्षणाधीना तर्हि त्रयाणां परस्परसापेक्षत्वाच्चक्रकं, लक्षणे लक्षणान्तरं तत्रापि लक्षणान्तर-मित्येवमविश्रान्तावनवस्थेति ।

योगाचारो बाह्यालीकत्वं वदन् प्रत्यादेश्य एव, यतः प्रतिप्रत्ययं बाह्योऽर्थ उपलभ्यते स्तम्भः, कुड्यं, घटः, पटः, दण्डः, मठ इति । उप-लब्धिरूपत्वं त्वेषामर्थानां व्याहतमेव, उपलब्ध्यात्मना स्तम्भादीनां केना-प्यग्रहणात्, प्रत्युतोपलम्भविषयतया सर्वैर्वेद्यमानत्वात्, नहि भवति विषयी

विषयश्चैक इति । एवं च तन्मतानां श्रुत्युपपत्तिविरोधेन दूषिततया तन्मतकल्पिता तत्तदनुपपन्नपदार्थावगाहिनी ख्यातिप्रक्रियाप्युपेक्षितव्यैव । तस्मादनिर्वचनीयख्यातिरेवाश्रयितुं युज्यते । इदं रजतमित्यादौ अनिर्वचनीयमेव रजतमविद्यया जनितं गृह्यते । अनिर्वचनीयत्वं च सदसद्भ्यां विलक्षणत्वम् । तथाहि रजतं न सद्, बाधानुपपत्तेः, नाप्यसत्, गगनकमलिनीशशविषाणादिवदप्रत्ययापत्तेः । अनिर्वचनीयं च रजतं तत्र मन्तव्यमेव, असत्त्वे त्वसन्निकर्षेण अप्रत्यक्षत्वप्रसंगात् । न च ज्ञानेन प्रत्यासत्त्या तत्प्रतीतिः समर्थ्या, तदनभ्युपगमात् तदङ्गीकारे तु तेनैव अनुमित्याद्युपपत्तौ व्याप्तिज्ञानादिप्रमाणानामुच्छेदापत्तेः । न च सुरभि चन्दनमितिप्रत्यक्षे सौरभत्वभानार्थं तन्मन्तव्यम्, तत्प्रत्यक्षे सौरभत्वं पश्यामीत्यनुव्यवसायस्य दुर्निवारतापत्तेः । न च इदं रजतमितिज्ञानद्वयम्, विशिष्टज्ञानमन्तरेण इदङ्कारास्पदे रजतार्थिनः प्रवृत्त्यनुपपत्तेः । एवं मरुमरीचिकादिषु तोयगन्धर्वनगरादिभ्रान्तयोऽप्युपपादनीयाः । एवं ब्रह्मणि विश्वभ्रान्तिरपि अनिर्वचनीयख्यातिरेव, विश्वस्यापि मुक्त्यवस्थायामधिष्ठानब्रह्मसाक्षात्कारात् बाधितत्वात्प्रत्यक्षतः संसारदशायां प्रतीयमानत्वाच्च ।

इत्थं च क्रमेण आत्मख्यातिः, अख्यातिः, अन्यथाख्यातिः, सत्ख्यातिः, अनिर्वचनीयख्यातिश्च निरूपिताः । अन्याश्च सदसत्ख्यातिः सांख्यानां वैयाकरणानाञ्च, शून्यख्यातिर्माध्यमिकानाम्, इतराश्चैवंजातीया अर्थसंसर्गजाकारख्यात्यादयो विस्तरभयान्निःसारत्वाच्चोपेक्षिता इति शिवम् ।



# धर्माऽधर्मयोर्निर्णयपद्धतिः

*डॉ० गजाननशास्त्री मुसलगाँवकरः*

अस्मिन् वैज्ञानिके युगे बहुविदोऽपि विचक्षणा धर्माऽधर्मविषये विप्रतिपन्ना दृश्यन्ते। केचित् अर्थकामपुरस्कारेण धर्माधर्मपरिवर्तनं, केचित् धर्मस्याप्रामाणिकत्वादनावश्यकत्वं, केचित्तु तत्त्वतोऽसिद्धत्वान्नवेश्वरः; नापि वा धर्माऽधर्माविति मन्वानाः प्रसृतामिमां धर्माऽधर्मबुद्धिमन्धपरम्परया व्यसनमिति मन्यन्ते। तदेतेषां मतानाम्पर्यालोचनं कर्तव्यतया समापतितमस्ति। तच्च पर्यालोचनं वाद-जल्पवितण्डानामन्यतमां कथामाश्रित्यैव कर्तव्यम्। तत्र स्वपक्षस्थापनं विनापि विपक्षपराजयेऽपि वितण्डया स्वपक्षे जनानाम्प्रवृत्तिर्न सेत्स्यतीति स्वपक्षस्थापनमप्यावश्यकं विधेयम्, जल्पस्य स्वपक्षस्थापकत्वेऽपि तत्त्वनिर्णायकत्वाऽभावः जीगीषामूलकत्वात्। अतस्तत्त्वबुभुत्सयैव वादे प्रवृत्तिः साधीयसीति तामनुसृत्यैव किञ्चिदत्र विचारयामः।

## विप्रतिपत्तेरनिवार्यता

विचारावसरे च "असन्दिग्धोह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः"[1] इति भाट्टोक्त्या विचारस्य सन्देहपूर्वकत्वात् आदौ विप्रतिपत्तिः प्रदर्शनीया। यद्यपि सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षत्वेन तत्सम्पादकत्वेन साध्यसन्देहस्यानुपयोगित्वान्नविप्रतिपत्तिप्रदर्शनस्याऽऽवश्यकता, तथापि वादिप्रतिवादिमतश्रवणानन्तरमितरेषां सन्देहस्यावश्यम्भावात् तत्र यथावन्निर्णयार्थं विप्रतिपन्नांशस्य स्पष्टप्रतिपत्तये च विप्रतिपत्तिः प्रदर्शनीयैव। एवं च विप्रतिपत्तिप्रदर्शनेन विचारणीयांशस्य विशदावगमे तदनुसारेण वादप्रवृत्तौ च तत्त्वाऽवधारणं सम्यक्तया भवति, तदभावे च वादिप्रतिवादिनोर्निग्रहादिकस्य ज्ञातुमशक्यत्वाज्ज्ञातेऽपि वादे न निर्णयसंभवः, इति कथायां विप्रतिपत्तिप्रदर्शनमत्यावश्यकम्।

---

१ श्लो० वा०

यद्यपि धर्माधर्मविषये बहूनां बहुधा विप्रतिपत्तिः, तथापि धर्माधर्मयोः काँश्चिदेकदेशान् परिगृह्य कुत्रचिद् एकदेशेषु देशकालपरिस्थितिमुखेन-विवदमाना धर्मस्य सामयिकत्वं चाभिप्रीयमाणा इदानीमपि आत्मानं शिष्टम्मन्याः फलतोऽर्थकामफलक एव धर्म इति साधयन्तस्तदर्थं चेतिहासं प्रमाणत्वेन पुरस्कुर्वन्तः केचन स्वकीया एव प्रत्यवतिष्ठन्ते। अतः प्रथमतस्तेषामेव मतं समालोचनीयम्। तेषां मते धर्मोऽस्ति न वा? विमताः क्रिया धर्मो न वा? इति विप्रतिपत्तिरेव न संभवति। वेदबोधितेष्टसाधनताको धर्मः, वेदबोधिताऽनिष्टसाधनताकोऽधर्म इति धर्माधर्मलक्षणयोस्तैरप्यङ्गीकारात्। अंगीकृते चैतादृशेलक्षणे विरुद्धकोट्युपस्थापने प्रमाणाभावात् एकधर्मिकविरुद्धनानाधर्मावगाहिज्ञानरुपसंशयस्यानुत्थानात्। स्मृत्यादिपुरस्कारेण तथाविधसंशयोपस्थितिसंभवेऽपि तन्मते स्मृत्यादीनां वेदमूलकत्वाभावेन पुरुषरचितत्वात्, पुरुषाणां च भ्रम-प्रमादविप्रलिप्सादोषत्रयसंभवात् प्रामाण्यमेव नास्तीति न तन्मते तादृशसन्देहसंभवः। येषान्तु वेदमूलकत्वेन स्मृत्यादीनाम्प्रामाण्यं, तत्र तु धर्माधर्मत्वेन संशयोऽत्यन्तासंभवि। न चापाततः प्रतीयमानस्मृतौ तदर्थे च तादृशः सन्देहः संभवति। एवंविधस्थले इयं स्मृतिः प्रमाणं न वा, इयं वेदमूलिका न वेति सन्देहस्यैव संभवात्। न च प्रामाण्यसंदेहमूलकस्तदर्थे धर्माधर्मत्वसंदेहः। प्रमाणसिद्धमप्यर्थमपह्नुवाना एते प्राचीनैः प्राचीनकलानुसारेण तादृंशार्थस्य धर्माधर्मत्वे निश्चितेऽपि इदानीं तथानुष्ठानाऽसम्भवेनास्माभिस्तदानीन्तनविहितानुष्ठानस्य अधर्मत्वं निषिद्धस्य च धर्मत्वमधुनोद्घोष्यते इति मन्यन्ते। अतस्तेषां मतानुसारेण तादृशसन्देहस्याऽप्यसंभवात्। अन्ततो गत्वा नास्ति परलोकः, न वा धर्माधर्मौ, केवलं लोकयात्रानिर्वाहार्थमेव सामायिकी धर्माधर्मपरिभाषा इत्येव तेषां गूढाभिसन्धिः। अतस्तादृशवादिप्रसङ्गे पूर्वोक्तविप्रतिपत्तेरनुपयोगः।

एतेषां गूढाभिसन्धिमाविर्भावयन्तीयमत्र विप्रतिपत्तिः—विमताः क्रिया, अलौकिकेष्टसाधनं न वा? अत्र च क्रियाणां विप्रतिपत्तिविषयत्वेन पक्षत्वात् विशिष्टक्रियात्वमेव पक्षतावच्छेदकं न तु सामान्यतः क्रियात्वम्, तद्रूपेण पक्षत्वाभावात्। साध्यसिद्धावपि अनुमित्साया आहार्यसंदेहवत्

कथाकालेऽपि वादिप्रतिवादिनोराहार्यसन्देहसंभवेन विप्रतिपत्तिविषयत्वस्य क्रियाणां तदानीं संभवात्। अतएव साध्यसन्देहवत्वमित्यपि लक्षणम्।

अलौकिकेष्टसाधनत्वं प्रसिद्धं न वा? प्रसिद्धं चेत् सिद्धसाधनम्। अथाप्रसिद्धम्; सन्देहासंभवः, प्रसिद्धस्यैव ज्ञानविषयत्वात्। अथ यत्र कुत्रापि एकदेशे प्रसिद्धं पक्षतावच्छेदकावच्छेदेन साध्यते चेत् तादृशोपलम्भः प्रदर्शनीयः। इष्टं च अलौकिकं चैतद्विरुद्धम्। तथाहि—इष्टं चेच्छाविषयः, इच्छा च ज्ञातस्यैव, तच्च ज्ञानं यदि लौकिकैः प्रमाणैर्निश्चितप्रामाण्यैर्भवति, तदा कथं तावत् तस्यालौकिकत्वम्? यदि च ज्ञान मेव न स्यादिच्छापि न स्यादिति इष्टत्वव्याघातः एवंच परस्परविरुद्धयोरनयोरेकरूपेण प्रसिद्ध्यभावात् सन्देहानुपपत्तेर्विप्रतिपत्तेरेवासम्भवः। तत्रोच्यते—स्यान्नाम विरोधः, यदि सर्वथा तस्याप्रसिद्धिः, न तु तथास्ति। लोके शपथसमयबन्धादिषु तस्य प्रसिद्धत्वात्। न हि शासनसभादिषु राजनिष्ठा-शपथादिकमिदानीमपि धर्माधर्मानादरतत्परैरपि क्रियमाणं लौकिकेष्टसम्पादनाय भवति, तथैव स्वकृतसमयबन्धोऽपि "मया भोजनव्यतिरेकेण पानीयं न पातव्यम्", "इयं संस्था एतादृशनियमैरेव संचालनीया" इत्यादिको महताभिनिवेशेन परिपाल्यमानो लौकिकेष्टफलाय कल्पयितुं शक्यः। एवं च अलौकिकेष्टस्य प्रसिद्धत्वात् क्वचित् तस्य सन्देहस्यापि संभवात् सूपपादेयं विप्रतिपत्तिः। एकदेशे साध्यसिद्धावपि न सिद्धसाधनतेति प्रसिद्धमेव घटदृष्टान्तेन कार्यत्वलिङ्गकानुमानेन क्षित्यङ्कुरादिषु कर्तृजन्यत्वसाधने। एवं सिद्धायां विप्रतिपत्तौ "तच्च पञ्चतयं केचित् द्वयमन्ये वयं त्रयम्। उदाहरणपर्यन्तं यद्वोदाहरणादिकम्[1]।" इति भाट्टमतमनुसृत्य त्र्यवयवात्मकः कश्चन प्रयोगो वादिप्रतिवादिभिः प्रतिपादनीयः। पञ्चावयवानामतिविस्तृतत्वाद् गतार्थत्वाच्च द्व्यवयवयोरत्यन्तसाकाङ्क्षत्वात् क्लेशगम्यत्वाच्च वाक्यस्य त्र्यवयवात्मकत्वमेवोचितं मन्यन्ते वार्तिककाराः। अतः प्रतिपन्नार्थस्य अनुमानेन प्रतिपिपादयिषायां साधनस्य पञ्चावयवात्मकस्य, त्र्यवयवात्मकस्य, द्व्यवयवात्मकस्य वा वाक्यप्रयोगस्यातीवावश्यकत्वात् तदेव प्रथमतः प्रतिपादयितुमुचितम्।

---

१. शा. दी. १।१।५, पृ० ६४

अयमत्र सिद्धान्तसम्पादकोऽनुमानप्रयोगः—विमताः क्रियाः अलौकिकेष्टफलसाधनम्, वेदबोधितेतिकर्तव्यताकत्वात्, ईश्वरोपासनावत्। ईश्वरानङ्गीकारे च व्यावहारिककर्मदृष्टान्तेन केवलव्यतिरेकव्याप्तिः । यन्नैवं तन्नैवं यथा व्यावहारिकं भोजनादिकर्मेति । यद्वा "विमताः क्रियाः सफलाः क्रियात्वात्, लौकिकक्रियावत्" इति सामान्यतः क्रियात्वेन सफलत्वं संसाध्य "विमताः क्रिया अलौकिकेष्टफलकाः लौकिकफलराहित्ये सति सफलत्वात्" इति परिशेषानुमानेन अलौकिकफलसिद्धिः। अत्र च इतिकर्तव्यतायाः साधनस्वरुपनिष्पादकत्वात् साधनेन साध्ये साधयितव्ये अवान्तरव्यापाररूपत्वाद्वा साधनेन सह नियतसम्बन्धस्य अवश्यंभावात् "यदि हि इतिकर्तव्यता इष्टसाधनत्वव्यभिचारिणी स्यात् साधनस्य साधनत्वमेव न स्यात्" इति व्यभिचारशङ्कानिवर्तकस्तर्कोऽनुसन्धेयः। इतिकर्तव्यतास्वरुपं चेत्थमुक्तं [1]भावार्थाधिकरणे शास्त्रदीपिकायाम् "अतो यदवस्थो यागः स्वर्गं सम्पादयति, तदवस्थो यागो येन व्यापारेण निष्पद्यते, स व्यापारः स्वर्गकृतिरित्येवंरूपेणाख्याताभिधेयो भवति। तस्यापि व्यापारस्य विशेषरूपं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते । यागेन स्वर्गं कुर्यात् इत्यनेन ह्येतावदवगम्यते यथा यागात्स्वर्गो भवति तथा व्याप्रियेतेति। तच्च कथं व्यापारयितव्यं, कोऽसौ व्यापार इति व्यापारविशेषात्मकं कथंभावापेक्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारसम्पादनं शास्त्रान्तरैरवगम्यते यागस्वरुपस्य च प्रयत्नादिसम्पादनमर्थापत्त्या। नह्यनिष्पादितस्य करणत्वमुपपद्यते, तेन स्वरूपसम्पादनं प्रयाजादिभिश्चोपकारसम्पादनमिति सकलोऽयं व्यापारः स्वर्गकृतिरित्यनेनाकारेणाऽख्यातशब्देनाभिधीयते। विशेषरूपन्तु प्रयाजादिशास्त्रान्तरैरवगम्यते । तेन सकलोऽयं प्रयाजादिव्यापारः प्रधानकरणिकाया भावनाया एव प्रपञ्चः। तेन च व्यापारेण फलसाधनात्मना सम्पद्यमानो यागः करणम्। एतदेव हि करणानां करणत्वं यदुत फलोद्देशप्रवृत्तकर्तृव्यापारेण फलसाधनात्मना सम्पत्तिः परशोरिवोद्यमननिपातनाभ्यां द्वैधीभावसाधनतया" इति।

---

१. शा. दी. २।१।१

वस्तुतस्तु लिङ्गस्य लिङ्गिना सह नियतः सम्बन्ध एव व्याप्तिः, तस्या एव ज्ञानमनुमाने कारणम्। न कार्यकारणभावो वा प्रयोज्यप्रयोजक-भावो वा तत्राऽपेक्ष्यते। अत एव कृत्तिकारोहिण्युदयादीनां लिङ्गलिङ्गिभावः। अतएवोक्तम्–"[1]सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना' इति। अतएव च "ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः "इत्य-नुमानलक्षणमुक्तं [2]शाबरभाष्ये। व्याख्यातं चेदं शास्त्रदीपिकायामित्थम्–"[3]यस्य यादृशस्य येन यादृशेन सह साक्षाद्वा प्रणाड्या वा यादृशः सम्बन्धः संयोगः समवाय एकार्थसमवायः कार्यकारणत्वमन्यो वा दृष्टान्त-धर्मिषु नियतो ज्ञातः तं तादृशं साध्यधर्मिषु दृष्टवतः तस्मिन् तादृशे तादृशसम्बन्धसम्बन्धिनि प्रबलेन प्रमाणेन ताद्रूप्यतद्विपर्ययाभ्यां अपरि-च्छिन्ने या बुद्धिः साऽनुमानम्। अतएव च यद् रसवत् तद् रूपवत्, कपिसंयोगि एतद्वृक्षत्वात् इत्यादौ व्यभिचारशङ्कानिवर्तकतर्काभावेऽपि व्याप्तिबुद्धिरप्रतिहतैव। एवमत्रापि साधनस्वरूपनिष्पादकत्वेन इतिकर्त-व्यताया नियतः सम्बन्धो साधनेनेति व्यभिचारशङ्कानिवर्तकतर्काभावेऽ पि का क्षतिः।

व्यभिचारवारणम्–ननु एवमपि कारीर्यादीनां दृष्टवृष्ट्यादिफलसाधन-त्वात् वेदबोधितेतिकर्तव्यताकत्वेऽप्यलौकिकेष्टसाधनत्वं नास्तीति व्यभिचार इति चेत् स्यादेतदेवं यदि सर्वत्र कारीर्याद्यनुष्ठानानन्तरमेव वृष्ट्यादिफलदर्शनं स्यात्। नच तथास्ति कदाचित् कालान्तरेऽपि वृष्टि-दर्शनात्। तदानीं तु प्रागनुष्ठितकारीर्यादीनामेवेदं फलमुताहो अन्यस्य कस्यचित् कारणस्येति कार्यकारणभावानवधारणेन योगजसिद्धिवत् तस्यापि फलस्यालौकिकत्वमस्त्येव, किंच फलस्य लोकसिद्धप्रमाणगम्यत्वे-ऽपि तत्साधनस्यालौकिकप्रमाणगम्यत्वेन कारीर्यादिष्वपि अलौकिकेष्ट-साधनत्वमकामेनापि ऊरीकरणीयम्। तदुक्तम्—

"[4]द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता॥
श्रेयः साधनता ह्येषां नित्यं वेदात् प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥" —श्लो. वा.

१. श्लो. वा. १।१।५ अनु. श्लो. ४ २. शा. भा. १।१।५, पृ० ३६.
३. शा. दी. १।१।५, पृ० ६०-६१ ४. श्लो. वा. १।१।२ श्लो. १३-१४.

साध्यनिर्वचनम् ।

ननु किमिदमलौकिकेष्टसाधनत्वं नाम ? किमलौकिकं यदिष्टं तस्य साधनत्वं उत अलौकिकं यदिष्टसाधनत्वम्? नाद्यः—इष्टत्वमिच्छाविषयम्, ज्ञानं विना च नेच्छोदयः । ज्ञानं च लौकिकप्रमाणैरेवेति सर्वथा इष्टस्यालौकित्वासंभवात् । नान्त्यः,—साधनस्योपादेयत्वादलौकिकस्य चोपादातुमशक्यत्वात्, उभयथापि साध्याप्रसिद्धिः । न च शपथसमयबन्धादिषु पूर्वमेवोक्ता तस्य प्रसिद्धिरिति वाच्यम् । तस्या अपि प्रामाणिकत्वसन्देहेन मूलभूतप्रमाणपर्यालोचनस्यावश्यकत्वात् । अन्यथा धर्माधर्मयोरपि तथैव प्रसिद्धेः किं तद्विचारेण । तथाचोक्तं भट्टपादैः—

[1]प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः ।
धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥
धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ ।
प्रसिद्धौ हि तथा चाह पाराशर्योऽत्र वस्तुनि ॥
इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ।
निर्मूलासम्भवादत्र प्रमाणैः सैव मृग्यते ॥

अनेन चेदं स्पष्टमवगम्यते यत्प्रसिद्धिरपि प्रमाणमूलिकैवापेक्ष्यते, न निर्मूला । अतः अलौकिकेष्टसाधनत्वरूपसाध्यस्यापि मूलभूतप्रमाणापेक्षाऽनिवार्या ।

ननु माऽस्तु तर्हि अलौकिकेति विशेषणम् । केवलमिष्टसाधनत्वमेव साध्यतामिति चेन्न । दृष्टादृष्टार्थक्रियासु दृष्टार्थसाधनत्वस्य सिद्धत्वेऽपि अदृष्टेष्टसाधनत्वस्य साध्यत्वात् क्रियात्वेन सेतिकर्तव्यताकसकलक्रियाणामपि दृष्टेष्टसाधनत्वस्य सिद्धौ सिद्धसाधनत्वेन कथोच्छेदप्रसंगात् । अतः अलौकिकेति विशेषणमत्यावश्यकम् ।

## अलौकिकत्वनिर्वचने पूर्वपक्षः

ननु तर्हि निरूप्यतां किमिदमलौकिकेष्टसाधनत्वम् । किमलौकिकप्रमाणगम्येष्टसाधनत्वं वा, लौकिकप्रमाणागम्येष्टसाधनत्वं वा ? साधने लोकसिद्धसाधनातिरिक्तत्वं वा ? इष्टे अलौकिकव्यापारजन्यत्वं वा ?

---

१. श्लो. वा. १।१।५ श्लो. १ – ३½

ममेतच्छरीरातिरिक्तशरीरभोग्यत्वं वा ? अतीन्द्रियत्वं वा ? नाद्यः, लोकसिद्धप्रमाणातिरिक्तप्रमाणस्याप्रसिद्धावलीकत्वापत्तेः। प्रसिद्धौ तस्य लौकिकत्वात् साध्याप्रसिद्धेः। अतएव न द्वितीयः, लोकसिद्धप्रमाणागम्यत्वे तस्य प्रमाणाप्रसिद्ध्याऽलीकत्वम्। तदतिरिक्तप्रमाणस्याभावात्।

"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्" इति न्यायेन प्रमाणाप्रवृत्तौ प्रमेयाऽप्रसिद्धेः। तृतीयस्तु सर्वेषां व्यापाराणां क्रियात्वेन क्रियाणां च प्रत्यक्षगोचरत्वेन अलौकिकत्वाप्रसिद्धेर्व्यापारस्य विकल्पासहत्वात् नोपादेयः। चतुर्थे तु सिद्धसाधनता। अस्ति चेत् साधनता विमतानां क्रियाणां तर्हि सा लोकसिद्धसाधनतातिरिक्तैव। न वयमपि तादृशीं साधनतां लोकसिद्धां मन्यामहे। यत्र साधनत्वे एव विप्रतिपत्तिः। तत्र तस्या अलौकिकत्वमुभयवादिसिद्धमेवेति व्यर्थमेवेदं विशेषणम्। न हि पर्वतो भास्वरशुक्लवह्निमान् इति साध्ये वह्नेर्भास्वरशुक्लत्वे विप्रतिपत्तिर्भवितुमर्हति। तथात्रापीति व्यर्थविशेषणत्वम्। पञ्चमस्तुपक्षः चित्राकारीर्यादिषु व्यभिचारान्नयुक्तियुक्तः। तत्फलानां वृष्टिपश्वादीनां एकस्मिन्नेव शरीरे भोगसंभवात्। अतएव न षष्ठोऽपि। अतीन्द्रियस्य उपभोगासंभवेन इष्टत्वव्याघातात्। इष्टं च अनुपभोग्यं चेति विरुद्धमेतदन्योन्यम्। न चातीन्द्रियस्यापि वायो भोग्यत्वादिष्टत्वं संभवत्येवेति वाच्यम्। येषां मते वायोरतीन्द्रियत्वं तेषां मते तत्स्पर्शस्यैवेन्द्रियगोचरस्य भोग्यत्वेनेष्टत्वात् शब्दवत्। न हि शब्दो भोग्य इत्येतावता अतीन्द्रियस्याऽऽकाशस्य भोग्यत्वेन इष्टत्वं मन्यन्ते। न हि आकाशो मे स्यादिति समुद्भवति कस्यापीच्छा। अतोऽतीन्द्रियस्येष्टत्वासंभवो युक्तिसहः। ननु परमाणूनामतीन्द्रियत्वेऽपि तत्साध्यमूर्तपदार्थसिद्ध्यर्थं तेषामिष्टत्वं वर्तत एवेति चेन्न; तत्साध्यमूर्तपदार्थस्यैव तत्रेष्टत्वात्। प्रवृत्तिस्तु इष्टसाधन एव नेष्टे इति परमाणुषु प्रवृत्तिः सूपपन्ना। नैतावता परमाणुत्वेन तेषामिष्टत्वमपि तु मूर्त्तसाधनत्वेन। नचात्र तथा। इष्टस्यैव अतीद्रियत्वात्। तस्मात् सर्वथा साध्याप्रसिद्धिः। इति चेन्न,

### अलौकिकत्वनिर्वचने उत्तरपक्षः

प्रमाणान्तरागोचरार्थविषयकज्ञानजनकत्व[illegible]णस्य। तस्य च लौकिकेषु प्रमाणेषु अभा[illegible] वेदे च तत्सत्वात् सा[illegible]

प्रसिद्धेः। तथाहि–प्रत्यक्षादीनि लौकिकप्रमाणानि हि अन्योन्यविषय-गोचराणि सुप्रसिद्धानि। वेदविषयस्तु न केनापि प्रत्याय्यते इत्यतस्तस्याऽलौकिकप्रमाणत्वम्। अत एवोक्तम्—

"प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।"

अतएव द्वितीयः पक्षोऽपि सूपपन्नः। यानि लौकिकानि प्रमाणानि प्रत्यक्षादीनि तेषामत्र विषयेऽप्रवृत्तेः। क्रियासु इष्टसाधनताबोधनद्वारा प्रवर्तनैव सर्वस्य वेदस्य विषयः। तत्र चेष्टं च तत्साधनं चैतद्वयमपि यदि प्रत्यक्षादिना गृह्येत, तदा तयोरन्वयव्यतिरेकाभ्यां साध्यसाधन-भावोऽपि प्रत्यक्षादिनैव ग्रहीतुं शक्यः स्यात्। नत्वेतदस्ति, साध्यस्य स्वर्गादेः कालान्तरभावित्वेन शरीरान्तरभोग्यत्वेन च इह जन्मनि कथ-मप्युपलंभासंभवात्। जन्मान्तरे च तस्योपलंभेऽपि तत्कारणीभूतयागादि-क्रियाणां साधनत्वेन परामर्शासंभवात् न तयोः कार्यकारणभावः कथ-मपि ग्रहणविषयतामपतीति वेद एव शरणीकरणीयः। अतश्च अलौ-किकवेदरूपप्रमाणगम्यस्वर्गादीष्टसाधनत्वं लौकिकप्रत्यक्षादिप्रमाणागम्य-तादृशेष्टसाधनत्वं वा सर्वथा संभवति।

## प्रत्यक्षादिप्रमाणाप्रवृत्तिप्रतिपादनम्

तत्र प्रत्यक्षप्रमाणस्य "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" इति सूत्रेण प्रत्यक्षव्याख्या-प्रदर्शनपूर्वकं सूत्रकारेण निरस्तत्वात्, अनुमानादीनां व्याप्तिज्ञान-शक्ति-ज्ञानादिकारणकानां च प्रत्यक्षपूर्वकत्वात्तन्निरासेनैव गतार्थत्वम्। तच्च तत्रैवसूत्रे वार्तिके भट्टपादैर्विशदीकृतमिति। तथाहि—

"[1]प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं ध्रुवम्।
प्रवृत्तिरनुमानादे र्नच धर्मेऽस्ति तादृशम्॥
अनुमानानुमानादे न चाप्यस्तीह संभवः।
सम्बन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसंभवात्॥
सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते।

१. श्लो. वा. १।१।४ श्लो. ९६-११०

धर्मेणान्यद् विशेष्यं चेत् पक्षोऽसिद्धविशेषणः ॥
तस्माददृष्टपूर्वत्वात् केनचिद् वस्तुना सह ।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥
अदृष्टसदृशत्वाच्च स्वयं चानुपलंभनात् ।
धर्मस्य नोपमेयत्वमसाधारणवद् भवेत् ॥
नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।
सुखदुःखादिभेदो हि नादृष्टात् कारणाद् भवेत् ॥
दृष्टस्य व्यभिचारित्वात् तदभावेऽपि संभवात् ।
सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥
स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।
कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद् यदि ॥
यथा च फलवैचित्र्ये कर्मणां शक्तता स्वतः ।
तथापि चित्रता लोके स्वभावादुपपत्स्यते ॥
अधर्मे धर्मरूपे वा ह्यविभक्ते फलम्प्रति ।
किमप्यस्तीति विज्ञानं नराणां कोपयुज्यते ॥
किं नु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।
स्वर्गपुत्रादिभेदश्च कीदृशात् कर्मभेदतः ॥
इतियावदविज्ञानं तावन्नैव प्रवर्तते ।
प्रवृत्त्यङ्गं च विज्ञानं तस्य मूलं प्रतीक्ष्यते ॥
तस्मात्सिद्धेऽपि सामान्ये विशेषो नागमादृते ।
विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥
गम्यमाने विशेषे च तदन्तर्भावकारितः ।
सामान्यप्रत्ययोऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥
यथार्थापत्तिरेवं च नानुमानोपमेष्यते ।
शास्त्रं चेत्तदपेक्षेत तस्यैव स्यात् प्रमाणता ॥११०॥
[1]यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।
विना सम्बन्धबोधेन न तु तस्योद्भवः क्वचित् ॥
न सामान्यविशेषाभ्यां धर्मसम्बन्धदर्शनम् ।
लिङ्गस्य कस्यचित्सिद्धं येनस्यादनुमानता ॥

---

१. श्लो. वा. १।१।२ श्लो. १७-१८.

ननु निवर्तनमपि वेदविषय इति कथं प्रवर्तनैव वेदस्य विषयः उच्यते इति चेत् सत्यम्, एवं च प्रवृत्तिनिवृत्ती उभे अपि वेदतात्पर्यविषये इत्यत्र न विवादः।

ननु कथं प्रवर्तनानिवर्तनारूपविषयद्वयमेव वेदतात्पर्यार्थः सिद्धरूपाणामाख्यायिकावंशादीनामपि तत्रतत्रोपलब्धिर्न केनाप्यपलपितुं शक्या। न च तत्र वाक्यार्थबोधो न भवति, गृहीतशक्तिकानां पदानां श्रवणानन्तरं वाक्यार्थप्रत्ययस्य सर्वानुभवसिद्धत्वात्, न च न स तात्पर्यविषयः, तथात्वे वेदे तत्प्रतिपादनस्य वैयर्थ्यापातात्। न च अपुरुषार्थत्वेन निष्फलत्वं माभूदिति विधिनिषेधविषयकप्रशंसाद्वारा प्रवृत्तिनिवृत्तिपरत्वे तात्पर्यम्। विनापि तादृशवाक्यानि विधेयनिषेध्यप्रशंसोपपत्तेः। स्थितस्य गतिश्चिन्तनीयेति न्यायेनाम्नायस्य गतिं वक्तुं प्रभवामो नाम्नायं पर्यनुयोक्तुमितिभाट्टोक्त्या च तेषां विधिनिषेधपरत्वं तु स्वसमयसिद्धान्तः, न तु प्रमाणसिद्धःसिद्धान्तः। न च अपुरुषार्थत्वान्निष्फलत्वं, 'देवदत्त पुत्र स्ते जातः' 'कन्या ते मृता' इत्यादि सिद्धवस्तु प्रतिपादकवाक्येभ्योऽपि सुखदुःखस्वरूपपुषार्थप्राप्तेः संभवात्। न हि तत्र श्रोतुः किमपि कर्तव्यं प्रतिपाद्यते। तथा आख्यायिकादिभ्योऽपि स्ववंशजानां कार्यज्ञानात् एतादृशो महात्मानः कार्यकुशला मत्पूर्वजा इति स्वाभिमानोद्बोधद्वारा सुखदुःखादिभोगरूपपुरुषार्थस्य संभवात्। तस्मात् "आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्" "विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां, स्युः" "दृष्टो हि तस्यार्थः कर्मावबोधनम्" इत्यादि प्रलपनं स्वसमयकाल्पितमेव इतिचेदत्रोच्यते—स्यादिदं यदीतिहासरूपत्वं स्याद् वेदानाम्। न त्वेतदस्ति। तत्रतत्रोपक्रमसंहारे विधिनिषेधप्रतीतेः। न हि केवलं वंशकथनं वाऽख्यायिकाकथनं वा कुत्राप्युपलभ्यते वेदे। कमपि विधिं वा निषेधं वा प्रस्तूय क्रियमाणं वंशकथनमाख्यानोपन्यासश्च पूर्वापरसंदर्भलोचनया तेषामेव विधिनिषेधानामङ्गतया प्रतिभातीति शाब्दीयं मर्यादा न केनाप्यपलपितुं शक्या। तथात्वे त्वाधुनिकग्रन्थेष्वपि भिन्न-भिन्नतात्पर्यनिवेदनं स्यात्।

## वेदस्य शास्त्रत्वम्

किंच शास्त्रमिदं वेदरूपम्। तस्य चेदं स्वरूपमेव यच्छासनं नाम।

अतएव—"प्रवृत्ति र्वा निवृत्ति र्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥" इति तल्लक्षणम्। न चाहेये चानुपादेये च कश्चन प्रेक्षावान् प्रवर्तते निवर्तते वा। हानोपादाने च भव्यकर्मान्तरेण न कुत्रापि केनापि बोधयितुं शक्ये। तेषां स्वरूपत एव कर्मत्वात्। कथं वा हानोपादाने कर्तव्ये इति कथंभावाकांक्षायां कर्मस्वरूपस्यैव भव्यस्य कथंभावपूरकत्वात्। अत एव कस्मिँश्चिद् विषये प्रवर्तयत् कुतश्चिद्—विषयान्निवर्तयदेव अर्थवच्छास्त्रम्। किं बहुना सर्वेषामपि साहित्यादिशास्त्राणामिष्टानिष्टप्राप्तिपरिहारोपायप्रदर्शनद्वारा कुत्रचिद् विषयविशेषे प्रवृत्तिः, कुतश्चिद् विषयविशेषान्निवृत्तिरेव परमं प्रयोजनमिति तत्तच्छास्त्राणां डिण्डिमः। अत एव—"चतुवर्गफलप्राप्तिः सुखादल्पधियामपि। काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥" इति साहित्यदर्पणारम्भे चतुवर्गफलप्राप्तिरेव प्रयोजनत्वेनोपन्यस्ता। तद्विवरणमपि 'रामादिवत् प्रवर्तितव्यं न रावणादिवत्" इत्येवं प्रकारेण ग्रन्थकृता स्वमेव विशदीकृतम्। एवं च यत्र पुरुषबुद्धिपरिकल्पितानां सिद्धार्थप्रतिपादकानां काव्यनाटककादम्बर्यादिप्रबन्धानामपि प्रवृत्तौ निवृत्तौ वा तात्पर्यमवसीयते। तत्र प्रत्यक्षप्रवृत्तिनिवृत्तिबोधकविधिनिषेधात्मकवाक्यसमूहस्य वेदरूपप्रबन्धस्य सिद्धचरित्रादिबोधने तात्पर्यपरिकल्पनमाहोपुरुषिकामात्रमेवोत्पश्यामः। ननु इदं वचनं पुरुषार्थपरत्वमेव बोधयति, न कार्यपरत्वम्। पुरुषार्थश्च सुखःदुखप्राप्तिनिवृत्तिरूपः, सिद्धार्थादपि वाक्याज्ज्ञातो भवति। 'पुत्रस्ते जातः, भार्या ते मृता' इत्यत्र। एवमेव काव्यादिभ्योऽपि स्यात्। किमर्थं विधिनिषेधपरत्वं शास्त्रस्य कल्पनीयमिति-चेत्—स्यादेतदेवम् यदि पुरुषार्थस्य भोगरूपत्वं स्यात्, नत्वेतदस्ति। अनिच्छयापि अकस्मात् केनचन उच्चरितात् 'पुत्रस्तेजात' इति वाक्यात् भोगोपलब्धिसंभवात्। पुरुषार्थस्तु पुरुषेणाभ्यर्थ्यमानत्वादेवं पुरुषेच्छाविषयो भवति। न तथा भोगः। एवं च यत्र पुरुषेच्छाविषयस्य स्वव्यापारतन्त्रेण सम्पादनं तत्र पुरुषार्थत्वम्। इच्छाभावेऽपि ज्ञानमात्रादेव यत्र इष्टाऽनिष्टप्राप्तिः तत्र भोगत्वमितिसिद्धे विषयविवेके अर्थादेव पुरुषार्थे पुरुषव्यापारस्य इष्टसाधनीभूतस्य भव्यस्यावश्यमुपदेश्यत्वात् तत्परकत्वमेव शास्त्रस्य न भूतपरत्वमिति युक्तमेवोक्तमाम्नायस्य क्रियार्थत्वादिति। ननु तर्हि सिद्धार्थप्रतिपादकानां वाक्यानां

का गतिरितिचेत्—विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति। यत्र क्रियासिद्ध्यर्थं साधनीभूताः पयोदध्याहवनीयादयः सिद्धा एव पदार्थाः प्रतिपाद्यन्ते। एवमाख्यायिकादयोऽपीति नाभिलषितमनोरथ–परिपूर्तिरैतिहासिकानाम्, यत्परः शब्दः स शब्दार्थ इति न्यायात्। तात्पर्यनिर्णयश्च उपक्रमापसंहारादिना भवति। तत्सिद्धं वेदतात्पर्यं प्रवर्तनानिवर्तनयोरेव। इष्टप्राप्त्यनिष्टपरिहारसाधने प्रत्यक्षादिप्रमाणाऽगोचरे बोधयद्वेदरूपं प्रमाणमलौकिकं सिद्धं भवति।

ननु न साम्प्रतमिदं यच्छब्दस्य प्रमाणत्वम्। तथाहि प्रमाकरणं प्रमाणमिति तल्लक्षणम्। प्रमा च अनधिगताबाधितार्थविषयकज्ञानरूपैव नान्या। न च शब्दस्यानधिगतार्थबोधकत्वं कुत्राप्युपलभामहे। विज्ञाताच्छब्दाच्छक्तिधीद्वारा पदार्थोपस्थितौ यद्वाक्यार्थज्ञानं तच्छाब्दं प्रमाणमिति सर्वसंमतोऽयं सिद्धान्तः। तथाच पदार्थज्ञानं शक्तिद्वारैव प्रथमत एव संजायते। वाक्यार्थश्च पदार्थसंसर्ग इत्यपि सर्वसम्मतम्। शब्दबोधे हि एकपदार्थः अपरपदार्थे संसर्गमर्यादया भासते इति भट्टगदाधरोक्तिः। स च क्रियाकारकादिसर्वविधसंसर्गः तद्वाचकविभक्तिप्रत्ययादिनैव उपस्थाप्यते इति किमधिकं बोध्यते वाक्येन। अतश्च न पदार्थबोधातिरिक्तो वाक्यार्थः। पदार्थानां च तच्छक्तपदैरेव पूर्वमुपस्थापितत्वाज्ज्ञातत्वम्। अतश्च ज्ञातज्ञापकत्वमेव वाक्यस्येति नानधिगतार्थबोधकज्ञानकरणत्वेन प्रमाणत्वं सेत्स्यति। ननु नानधिगतार्थबोधकरणत्वं प्रमाणत्वम्। पूर्वक्षणे चक्षुःसंनिकर्षादिना ज्ञातस्यापि घटस्य उत्तरक्षणे तथैव सन्निकर्षसत्वे तद्वदेव प्रत्ययस्य धारावाहिकस्थले दर्शनात्। अनुमितावपि ज्ञातस्यापि साध्यस्य अनुमित्सायामनुमानप्रयोगस्य सर्वैरङ्गीकारात् तज्ज्ञानस्यापि प्रमात्वेन तत्कारणस्य तादृशाऽनुमानस्य प्रामाण्याङ्गीकारात्। तथैव शब्दस्यापि ज्ञातज्ञापकस्य प्रामाण्यं भवतु। तदर्थं च अबाधितार्थविषयकज्ञानकरणत्वमेव प्रमाणत्वम्। तच्च शब्देऽप्यस्तीति प्रमाणं शब्द इति चेन्न, तादृशस्थले प्रमाणमूलकत्वेन प्रमाणत्वोपचारात्। अन्यथा अनुवादस्यापि प्रामाण्यापत्तेः।

ननु अनुवादो नाम शब्दजन्यं शब्दविषयकं ज्ञानम्, अत्र तु अर्थविषयकमिति भेदात् तत्र अर्थांशे न प्रमाण्यमिति चेन्न, भाषणार्थक-

धातोरप्रयोगेऽनुवादत्वस्यागम्यत्वेन तत्पदानामेव शब्दविषयकज्ञान-जनकत्वाद्वाक्यस्थपदानां स्वार्थविषयकज्ञानेऽबाधात्। सति शक्तिग्रहे वाक्यश्रवणानन्तरं वाक्यार्थज्ञानमवश्यमेव भवतीति महिमाऽयं शब्दप्रमाणस्य। अतएव 'वह्निना सिञ्चती'-त्यादौ संसर्गबाधसत्त्वेऽपि अद्रवेण वह्निना कथं सेकं ब्रवीषीति प्रत्युत्तरप्रदानेन गमकेन बोद्धुरपि पदार्थ-बोधो भवति। किंच शब्दे किल शक्तिद्वयम्। एका स्ववाच्यपदार्थे, द्वितीया स्वरूपे शब्दे। तत्र "दर्शनस्य परार्थत्वात्" इति न्यायेन अर्थस्य प्राधान्यात् वाचकस्य शब्दस्य गौणत्वात् घटमानयेत्यादौ घटशब्द-वाच्यकम्बुग्रीवादिमन्तमानयेति बोध उत्सर्गतो भवति। यत्र तु घटमुच्चारयेति प्रयोगः, तत्र उच्चारणस्य शब्दकर्मकत्वेनार्थस्योच्चारयितुमशक्य-त्वादर्थप्रकारकशब्दविशेष्यकबोधो भवति। एवं च उत्सर्गत उक्त्यर्थक-शब्दप्रयोगासमभिव्याहारे च सिद्धा अर्थबोधकशक्तिः सर्वथा अपलपितु-मशक्येति अनुवादेऽपि गौणतया अर्थप्रतीतिरस्त्येव। न च अज्ञातार्थ-शब्दस्योच्चारणे अर्थबोधकशब्दोपस्थितेरसंभवाद्वाक्यार्थो न स्यादिति वाच्यम्। शक्तिग्रहासंभवे पदार्थानुपस्थितौ केवलशब्दविषयकबोधजन-कत्वमुभयवादिसिद्धमेव। तत्रापि विभक्तिज्ञाने तदर्थोपस्थितौ च न शब्दप्रत्ययः प्रथमत एव भवति। किन्तु सन्दर्भविमर्शानन्तरमिति शब्दादिकमध्याहृत्यैवेति न केवलज्ञातशक्तिकपदानां स्वरूपशाब्दबोधे सामर्थ्यम्। एवं च अनुवादस्थलेऽपि उपस्थितपदार्थबोधे प्रमाणाभावात् प्रकारतया बोधविषयत्वमकामेनापि ऊरीकर्तव्यमिति तत्र प्रामाण्यं मा भूदित्यज्ञातज्ञापकत्वमेव प्रमाणत्वमूरीकर्तव्यम्। गौणप्रमाणं तु इतरप्रमाणवद्भवतु नाम इदंशब्दानुवादे। अर्थानुवादे तु "अग्निर्हिमस्य भेषजम्" इत्यादौ अर्थबोधस्य उभयमतसिद्धत्वात् तत्रप्रामाण्यापत्तिः। इष्टापत्तौ तु अनुवादत्वव्याघातः। वस्तुतस्तु अनुवादस्य स्मृतेरिव ज्ञातज्ञापकत्वमेवेति न प्रामाण्यमिति सर्वसम्मतः सिद्धान्तः। अतएव न्यायदर्शने "विध्यर्थ-वादानुवादवचनविनियोगात्" इति त्रेधा खलु ब्राह्मणवाक्यविभागम्प्र-दर्श्य "विधिविहितस्यानुवचनमनुवादः" (अ. २।१।६४) इत्यनुवादलक्ष-णमभिहितम्। "विध्यनुवचनं चानुवादो विहितानुवचनं च" इति तद्भा-ष्यम्। एवं यस्यानुवादस्तत्प्रामाण्यसापेक्षमेवानुवादस्य प्रामाण्यमिति न स्वातन्त्र्येणानुवादस्य प्रामाण्यं सिध्यति। अत्र च ज्ञातत्वेन ज्ञापकत्वमेव

ज्ञातज्ञापकत्वम्। न तु ज्ञातस्य ज्ञापकत्वम्। तथा च प्रत्यक्षगोचरेऽपि अनुमित्सायां अनुमितौ ज्ञातत्वेन ज्ञापकत्वाभावात् प्रामाण्यमव्याहतमेव। अन्यथा प्रमाणमात्रोच्छेदप्रसंगात्। अत्र च स्पष्टप्रतिपत्तये ब्रह्मसिद्धिर्यथा—

विधेर्विना कार्यशून्यं भूतार्थमनुवादकम्।
वचः स्यादनुवादश्च प्रमाणान्तरगोचरे ॥१०॥
तत्प्रमाणान्तरापेक्षं प्रामाण्यमतिवर्तते।
मानान्तरस्याविषये विध्यर्थे तु प्रतिष्ठितम् ॥११॥
अनपेक्षं प्रमाणत्वमश्नुते कर्मवाक्यवत्।
परप्रवृत्त्यभावेऽपि प्रामाण्यायैव तद्विधिः ॥१२॥

विधिमन्तरेण न कार्योपदेशप्रतीतिः। यथावस्थितं वस्तु तद्विधस्यानुवादमात्रत्वंगम्यते। अनुवादश्च प्रमाणान्तरविषय इति तदपेक्षो भूतार्थो नार्थ उच्यते इति सापेक्षत्वादप्रामाण्यम्। विध्यर्थस्यतु प्रमाणान्तराविषयत्वात्तन्निष्ठमनपेक्षंप्रमाणं कर्मविधिवाक्यवत्। प्रमाणान्तराविषयश्च विध्यर्थः। नहि "कुरु" इति शब्दज्ञानादन्यतः प्रतीतिः। एवं च सति तत्त्वप्रतिपत्तिपरे वाक्ये यद्यपि वाक्यार्थबोधात् पराचीना प्रवृत्तिर्विधिफलं नास्ति। प्रामाण्यायैव तु विधि निष्ठत्वमेषितव्यम्। अत्र च स्पष्टप्रतिपत्तये ब्रह्मसिद्धिर्यथा—"अत्रोच्यते—प्रमाणान्तरयातार्थभावः किमनुवादता। उत भूतार्थता तत्र सिद्धार्थमपि यद्वचः॥" न मानान्तरलब्धार्थतया तस्यावबोधकम्। न तत्सापेक्षमेषा चेदभिप्रेतानुवादता॥" कः पुनरनुवादः—अधिगमान्तरसंभिन्नार्थत्वम्, मानान्तरेणाधिगत—इति प्रतिपादनम्? आहोस्विद्भूतार्थमात्रम्? तत्र पूर्वस्मिन् कल्पे भवत्वधिगमान्तरसंभिन्नार्थं सापेक्षम्। यत्तु भूतार्थमपि न मानान्तराधिगत इति बोधयति न तदनुवादकम्, न सापेक्षम्, पूर्वाधिगमसंस्पर्शेन प्रतिपत्तेरभावात् इति। एवञ्च यत्र शब्दस्यैव प्रामाण्यं नास्तीति तत्समूहस्य वेदस्यापि प्रामाण्यं दूरापास्तमेव। अत एव शाब्दप्रमाणव्याख्या प्रस्तावे "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे ज्ञानम्" इति शास्त्रप्रमाणलक्षणमेव निर्दिष्टं शबरस्वामिपादैः। अन्यथा प्रत्यक्षलक्षणवत् व्यभिचारशङ्कानिवृत्तये शब्दमात्रस्यैव लक्षणं

कर्तव्यं न तद्विशेषस्य शास्त्रस्य। न च सामान्यलक्षणं विना विशेष-लक्षणमपि कर्तुं शक्यते। कृतं च तथेति मन्यामहे न लौकिकस्य शब्दस्य प्रमाणत्वमभ्युपयान्ति आचार्या इति। तत्सिद्धं शब्दस्य अप्रामाण्यं तद्वि-शेषत्वाच्छास्त्रस्य वेदरूपस्य।

## शब्दप्रामाण्यव्यवस्थापनम्

अत्राभिधीयते—यदि नाम पदार्थतत्संसर्गादिशाब्दप्रमाणमर्यादोपस्था-पितानां सर्वविषयाणां बोधो जायमानो यदि पदेभ्य एव सविभक्तिभ्यो जायते, तत्किं वाक्यात् बोध एव यत्किञ्चिद्विषयको न भवति वा, आहोस्वित् जायमानोऽपि अकिञ्चित्करोऽन्यथासिद्धत्वात्? नाद्यः, वाक्याज्जायमानस्य बोधस्य सर्वानुभवसिद्धत्वेनापह्नोतुमशक्यत्वात्। न द्वितीयः–पदेभ्यः पदार्थानां विभक्त्यादिना कारकाद्यर्थानां चोपस्थिता-वपि अस्याः क्रियाया एव इदं कारकमिति नियमस्य अन्यथासिद्ध्यभावेन केवलवाक्यशक्त्यधीनत्वात्। न च सोऽपि सांनिध्यादिना बोद्धुं शक्य इतिवाच्यम्। किमिदं सान्निध्यं नाम? यदि च परस्परसाकांक्षाणां पदानां निराकांक्षपदाव्यवहितोच्चारणविषयत्वं वाऽनन्वितपदव्यवधानराहित्यं वा? सर्वथा तु तादृशपदसमूहात्मकत्वमेव वाक्यत्वं नातिरिक्तं किमपि। अत-एव "वाक्यं स्याद्योग्यताकांक्षासत्तियुक्तः पदोच्चयः" इति तल्लक्षणम्, अय-मेव संसर्गः। तथाहि 'राम' इत्युक्ते रामनिष्ठकर्तृत्वनिरूपिका काचन क्रियेति सामान्यतो ज्ञायते। गच्छतीत्युक्ते गमनादिक्रियानिरूपितः कश्चन कर्तेत्यपि ज्ञायते सविभक्तिकतादृशपदोच्चारणात्। परं चेयमेव क्रिया कर्तृत्वनिरूपिकाऽयमेव वा कर्ता एतत्क्रियानिरुपित इत्येवं निरूप्य-निरुपकभावो निश्चितो न भवति। स च तादृशपरस्परसाकांक्षपदानामा-सत्त्यैव भवतीति तदासत्तियुक्तपदसमूहस्य वाक्यत्वेन वाक्यगम्य एव। अयं च निरूप्यनिरूपकभावः पूर्वमज्ञात इत्यज्ञातज्ञापकत्वेन शब्दस्यापि प्रामाण्यमव्याहतमेव। किं च यदि नाम शब्दाज्ज्ञानमेव न स्यात् तर्हि पदार्थोपस्थितिरपि न स्यात्। जायते चाऽसौ। न च सा पूर्वं ज्ञातेति कथं नाम ज्ञातज्ञापकत्वं प्रमाजनकत्वाभावो वा शब्दस्य मन्यतेऽत्रभवान् देवानाम्प्रियः। अतो न सर्वथा शब्दोऽप्रमाणम्। संसर्गविषये प्रामा-

ण्यात्। अस्यैव संसर्गस्य अभिप्रायविषयत्वेन अभिप्रायाऽनुमापकत्वं शब्दस्य मन्यते कैश्चित्। परन्तु संसर्गज्ञानात् प्राक् कोवाऽभिप्रायोऽनुमितिविषयः स्यात्? ज्ञाते तु शब्देनैव संसर्गे पश्चादभिप्रायानुमानेऽपि न शाब्दप्रमाणस्य स्वातन्त्र्यमनुमित्याऽपहर्तुं शक्यम्। अतएव 'शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय', 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादिस्थलेषु कीदृशो वक्तुरभिप्रायोऽनुमातव्य इति सन्देहे शब्दशक्तिमर्यादैव शरणीकरणीया। एवं सिद्धायां शब्दशक्तौ तज्जन्याभिप्रायबोधे च सिद्धे पुनश्चानुमानमजागलस्तनायमानं व्यर्थमेव। इयमेव तात्पर्याख्यावृत्तिः शब्दस्य। एवं च शब्दस्यापि प्रामाण्ये सिद्धे विज्ञाताच्छब्दादसन्निकृष्टेऽर्थे यज्ज्ञानं तच्छाब्दं प्रमाणमिति तल्लक्षणम्। तदुक्तं शास्त्रदीपिकायाम्—"विज्ञाताच्छब्दात् पदार्थाभिधानद्वारेण यद्वाक्यार्थाभिधानं तच्छाब्दं नाम प्रमाणम्। तल्लोकसिद्धत्वान्न परीक्षितव्यम्। तच्च द्विविधं पौरुषेयमपौरूषेयं चेति।" औलूक्यमतानुवादावसरे च तत्रैव अनुमानरूपत्वं शाब्दस्य निरस्तम्। तद्यथा—"इदं शाब्दं" अस्येदं कारणं कार्यं सम्बन्ध्येकार्थसमवायिविरोधिचेति लैङ्गिकम्। इत्यनुमानलक्षणमभिधाय "एतेनैव शाब्दं व्याख्यातम्" इति वदन्तः काश्यपीयाः, "प्रत्यक्षं चानुमानं च द्वे एव प्रमाणे"-ति ब्रुवाणाः सौगताश्चानुमानादभिन्नमितिमन्यन्ते। तत्र यत्तावत् पदार्थज्ञानं तदवगतार्थविषयत्वात् प्रमाणमेव न भवतीति किं तस्य भेदाऽभेदपरीक्षया। यत्तु वाक्यार्थज्ञानं तदगृहीतसंबन्धैरेव पदार्थैः उपजायमानं नानुमानशंकामर्हति। नहि सर्वैर्वाक्यार्थविशेषैः सम्बन्धग्रहणमस्ति। न च संभवत्यनन्तैः सम्बन्धग्रहणम्। अत्यन्ताऽपूर्वोपि वाक्यार्थविशेषः पदार्थैरवगम्यते दूरदेशवार्तास्विति सार्वजनीनमेतत्। यत्तु आप्तवाक्यत्वादविसंवादानुमानं तद्वाक्यार्थावगमोत्तरकालत्वान्न तस्यानुमानत्वमापादयति। वाक्यश्रवणानन्तरमेव हि आप्तानाप्तज्ञानानपेक्षैरेव पदार्थैर्वाक्यार्थोऽवगम्यते। अत्यन्ताऽदृष्ट पुरुषप्रणीतेऽपि वाक्येऽवगते तु वाक्यार्थे सत्यत्वाऽसत्यत्वसंशये प्रणेतुराप्तत्वावगमे सति सत्यत्वमनुमीयमानं न वाक्यार्थावगतेराप्तत्वाधारणानपेक्षजन्मनोऽनुमानत्वमापादयति। तस्मात् प्रमाणान्तरमेव लोके शाब्दम्" इति। विस्तरस्तु

"विषयोऽन्यादृशस्तावद् दृश्यते लिङ्गशब्दयोः" इत्यादिना महता प्रबन्धेन विषयभेदेन सामग्रीभेदेन च पञ्चात्मकस्य भेदो निरूपितो वार्तिककारैः।

इत्येवं मनसि निधायैव धर्मे प्रमाणं बोधयता सूत्रकारेण जैमिनिना शब्दप्रमाणकत्वमेव धर्मस्याभिहितं 'चोदनालक्षणोऽर्थो धर्म' इत्यनेन। तथाच शब्दस्यैव तादृशार्थबोधनसामर्थ्यम्, न तु तद्व्यतिरिक्तप्रमाण-सामान्यस्य। वार्तिककारेणापि तथैव व्याख्यातम्। तथाच—'प्रदर्शनार्थ-मत्रोक्तमिन्द्रियं सूत्रकारवत्। नान्यत् किञ्चेति वा छेदः सामान्यार्थः प्रयुज्यते॥'. 'तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम्। किञ्चेति मध्य-मच्छेदो हेतुप्रश्ने प्रयुज्यते॥' अत्र वार्तिके त्रेधा व्याख्यातम्। 'नान्यत् किञ्चन इन्द्रियम्' समर्थमिति। 'नान्यत् किञ्चन प्रमाणं समर्थं यथा इन्द्रियम्' इति। 'नान्यत् प्रमाणं समर्थम्, किञ्च कस्मात् इत्यर्थः, यस्मात् नेन्द्रियं समर्थं, तस्मात् इन्द्रियपूर्वकत्वात् इतरस्य प्रमाणस्य न तत् समर्थम्' इति।

एवञ्च धर्माधर्मनिर्णये किमीया पद्धतिरभ्युपगन्तव्या, वैदिकी मीमांसापद्धतिरैतिहासिकीपद्धतिर्वा ? इति विचारे क्रियमाणे इदम-विस्मरणीयं यद्वादस्य प्रयोजनं यथा सिध्येत् सैव स्वीकर्तव्या। 'तत्त्व-बुभुत्सोः कथा वादः' इति वादस्वरूपमभिदधता वादप्रयोजनं सूचितं भवति। तत्त्वावबोधश्च प्रमाणाधीनः। तदुक्तम्—

इदमीदृशमित्येवं यत्तत्त्वमवबुध्यते।
तदुद्भवः कथं नु स्यात् प्रमाणानुसृतिं विना॥

प्रमाणानुसरणं च यथा मीमांसापद्धतौ सुस्फुटमवगम्यते न तथेति-हासपद्धतौ। इतिहासेन हि श्रुतेन केवलं कस्मिँश्चिदर्थे दृष्टान्तावगमो भवति। दृष्टान्तो हि वस्तुसंभवमात्रं प्रदर्शयन् प्रमाणप्रवृत्तिप्रतिबन्धक-मसंभवं दूरीकरोत्येव, न तु तावता अर्थसिद्धिः, दूरे तत्त्वावबोधः। तस्माद् धर्माधर्मयोस्तत्त्वबोधार्थं वैदिकीमीमांसापद्धतिरेवगरीयसीति-शम्।]

●

१. श्लो. वा. १।१।५ श्लो. ५४३

# कालिदासवर्णित'कारापथ'राज्यस्य स्थितिनिर्धारणम्

डॉ० कैलाशनाथद्विवेदी

महाकविना कालिदासेन स्वकाव्यकृतिषु महिममयस्य तत्कालीन-राष्ट्रस्य तथ्यात्मकस्वरूपस्य चित्रणं नैसर्गिक्या प्रतिभया कृतमिति सुविदितमेव तथ्यं सर्वेभ्यः साहित्यिकेभ्यः। तदानीमपि देशोऽयं विविध-शासकीयविभागोपविभागेषु विभक्तमासीत्। इदं प्रतीयते यत् रामोत्तर-कालीनायां राज्यव्यवस्थायां प्राचीना केन्द्रीभूता राज्यसत्ता प्राशासनिक-दृष्ट्या तदा विकेन्द्रीकृता लवकुशतक्षपुष्कलाङ्गदचन्द्रकेतुसुबाहु-शत्रुघातिभी राज्यस्योत्तराधिकारिभिः।

अतएव कथयितुं शक्यते यत् रामोत्तरकालीनविकेन्द्रीकृतायां राज्यव्यवस्थायामेकं कारुपथराज्यमपि तत्कालीनशासकैः निर्मितमासीत्। रामानुजलक्ष्मणस्य सुयोग्यपुत्रौ चन्द्रकेत्वङ्गदौ राज्यस्यास्य शासका-वास्ताम्। आदिकविना महर्षिवाल्मीकिना रामायणकालीनेषु समृद्धि-शालिराज्येषु रमणीयस्य कारुपथराज्यस्याऽपि वर्णनं कृतं रामायणस्यो-त्तरकाण्डे[1]।

अनेन रामायणस्योल्लेखेनैव ज्ञायते यत् कारुपथराज्यस्य जल-वाय्वादिभौगोलिकदशाः मानवीयजीवनाय अत्यन्तमेव अनुकूला आसन्। अस्य राज्यस्य प्राकृतिकसुषमाऽतीव मनोहारिणी, जनजीवन-ञ्चापि स्वास्थ्यपूर्णमासीत्। अतएव ईदृशे सुरम्ये देशे कोशलेश्वरैः पुनर्गठितरूपेण राज्यस्थापनम् स्वाभाविकमेव।

---

१. वाल्मीकिरामायणे, उत्तरकाण्डे—

तथोक्तवति रामे तु भरतः प्रत्युवाच ह।
अयं कारुपथो देशो रमणीयो निरामयः॥
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः।
चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम्॥

(सर्गः १०२, श्लोकौ ५, ६)

निखिलकविचक्रचूडामणिः कालिदासः रामायणमनुसृत्य कारु-पथराज्यं कारापथनाम्ना गृहीतवान् रघुवंशमहाकाव्ये पञ्चदशसर्गे। महाकविरिदमत्यन्तं संक्षेपेण वर्णितवान्—

अङ्गदचन्द्रकेतु च लक्ष्मणोऽप्यात्मसंभवौ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ॥ रघु० १५.९०

अवस्थितिविषयकानि विदुषामभिमतानि—

श्रीमतां विल्सन[1] ( Wilson ) महोदयानामभिमतेन कारापथ-राज्यमिदं हिमालयीयोपत्यकायाः बहिरासीत्, किन्त्वनेन मतेन अस्य राज्यस्य सुनिश्चितावस्थितिः ज्ञातुं न शक्यते।

प्रतिभातीदं यत् रघुवंशमहाकाव्यस्य यशस्विनष्टीकाकारवल्लभ-देवस्य चन्द्रपथराज्यं सामान्यतः रामायणस्य चन्द्रकान्तस्थानात् दूरं नासीत्, यत् चन्द्रकेतोः शासनस्य प्रधानप्राशासनिककेन्द्रमासीत्।[2]

ए० बोरुआ महोदयानां मतानुसारेण इदं समीकर्तुं शक्यते यत् वर्तमानस्थ बिजनौरजनपदस्य चाँदपुरस्थानमेव वाल्मीकिरामायणस्य चन्द्रपुरम् चन्द्रकान्तं वाऽऽसीत्, यस्य प्रशासकश्चन्द्रकेतुरासीत् एतच्चोत्तरे[3] मल्लभूमेः प्रधानप्राशासनिककेन्द्रमासीत्। सौमित्रेः (लक्ष्मणस्य) द्वितीयपुत्रस्य अङ्गदस्य शासनकेन्द्रं, ए० बोरुआ महाशयानां मतानु-सारेणाङ्गदपुरमेव[4] प्रतिभाति, यस्य समीकरणं वर्तमानशाहाबादस्थानेन

---

१. विष्णुपुराणम्, तृतीयो भागः ( Volume 3 ), पृ० ३९०.

२. रघुवंशम् सम्पादकः—नन्दार्गिकरः, १५/९० टिप्पण्या आधारेण।

३. वा० रामायणे उत्तरकाण्डे, १०२/७,९,

चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता।
चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा॥

४. वा० रामा०, उत्तर०, १०२/८

अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता।
रमणीया सुगुप्ता च रमेणाक्लिष्टकर्मणा॥

शोधकर्तृभिः क्रियते। अपरञ्चापि फर्रुखाबादनाम्नि जनपदे एकं चाँदपुर-स्थानं वर्तते, किन्तु अस्य चन्द्रकान्तेन समं समीकरणमसमीचीनमेव; यतश्चेमे चाँदपुर-शाहाबाद( अंगदपुर )इति उभे स्थाने अत्यन्तमेव समीपस्थे वर्तेते, यत् सामान्यस्थितौ समकालीनशासकाभ्यां सममेव शासितुं न शक्येते।

पण्डितप्रवरैः [1]रामनारायणमिश्रमहोदयैः कारापथराज्यं सिन्धोः मध्यवर्तिनि रम्योपत्यकायामवस्थितं मत्वा तत्रैव मानचित्रेऽपि प्रदर्शितम्, किन्तु तेषामियं मान्यता सर्वथा भ्रान्तिपूर्णैव प्रतीयते, यतोऽस्मिन् क्षेत्रे काराबागस्थानस्य अवस्थितिर्विद्यते तथा कारापथराज्यं काराबाग-स्थानेन समीकर्तुमसमीचीनमेव।

समीक्षा—

उपर्युक्ततथ्येन कथयितुं शक्यते यत् सहारनपुरजनपदात्पूर्वं बिज-नौराख्यजनपदस्य चाँदपुरस्थानेन चन्द्रकेतोः शासनकेन्द्रं चन्द्रकान्त-नगरं, शाहाबादेन अङ्गदपुरञ्च समीकर्तुं सर्वथा समीचीनमेवाऽस्ति। इत्थं महाकवेर्कालिदासस्य कारापथराज्यं वर्तमानगङ्गारामगङ्गयोर्मध्यवर्ति-क्षेत्रादभिन्नं मन्तव्यम्। शाहाबादस्थानमुत्तरकोशले ( अवध ) राज्ये-ऽवस्थितमस्ति, तस्योत्तरपश्चिमेऽवस्थितः चाँदपुरस्थानस्य भूभागश्च, यः प्राचीनपाञ्चालराज्यान्तर्गते आसीत्, रामायणकालीनकोशलराज्यस्य प्रभुत्वे वर्तते स्म। विल्सनमहाभागैर्निर्दिष्टा कारापथराज्यभूमिः या हिमालयीयोपत्यकाऽन्तर्गताऽऽसीत्, सा वर्तमानबिजनौरजनपदान्तर्गते चाँदपुरस्थानस्य समीपवर्तिरम्यक्षेत्रेण समीकर्तुं शक्यते।

आशासे, चन्द्रकेत्वङ्गदयोरनयोर्नगरयोरिदं समीकरणं तथ्यपूर्णं मत्वा कारापथराज्यस्थितिं च सम्यक् निर्धार्य विद्वज्जनाः अस्य राज्यस्य सांस्कृतिकैतिहासिकपुरातात्त्विकराजनैतिकधार्मिकक्षेत्रेष्वपि अनुसन्धा-नात्मिकाध्ययने प्रवृत्ता भविष्यन्ति।



---

१. भूगोल, 'भुवनकोषाङ्कः' सं० रामनारायणमिश्रः, प्रयाग, १९२१ ( मई, जून, जुलाई। )

# कालिदासस्य चत्वारि पद्यानि

डा. सुदर्शनः शर्मा

रघुवंशम् कवेः कालिदासस्य प्रौढा कृतिः सम्पद्यते। आख्यानतत्त्वाक्रान्तमति कथातत्त्वमस्याः क्वचित् पद्येषु कवेः मस्तिष्कगौरवम् प्रथयति। क्वचित्पद्यानिदृशान्यायान्ति येषु व्याख्याकृद्भिरपि व्याख्यादोषवृत्तिः प्रदर्श्यते। तद्दोषनिवारणम् चात्र शोधसमयाकारमर्हति। यथा

[ १ ]

प्रथमे सर्गे—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला।
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम्[१] ॥

पद्यमिदम् मल्लिनाथेन न सम्यग्व्याकृतम्। मया चात्र विशेषेण व्याख्यायते।

अस्मिन् पद्ये टीकाकृतमतिरिच्याङ्ग्लानुवादकृद्भिरपि अनुवादः स्वाभिप्रायानुगतागतो वा दत्तः, न दत्तो वा। एम-ए करन्दिकर-शैलजा-करन्दिकराभ्याम् अनुवादः एवं दत्तः—

"( She ) who was pak red and glossy like a tender leaf sore a slightly curved mark of white hair risiny on her forehead, like the evening twilight with the crescent-moon."

नन्दर्गिकरमहोदयश्च—

"Bearing a little curved round mark of white hair on her forehead, she, with her colour pale red like that

१. रघुवंशे १।८३

of a new leaf, appeared like the twilight hour adorned with the new moon." पद्यमिदमेवमनुवक्ति ।

हरगोविन्दशास्त्रिमहोदयश्च—

"पल्लव की तरह चिक्कण श्वेतयुक्त लाल रङ्ग वाली, ललाट में उत्पन्न हुए, कुछ टेढ़े, सफेद रोयें रूपी चिह्न को धारण करती हुई, अतएव द्वितीया के चन्द्रमा को धारण करती हुई सन्ध्या के समान, वह नन्दिनी ( वन से लौट कर आई )" ।

मल्लिनाथश्च पद्यमिदमेवम् व्याख्याति—

"संप्रति धेनुं विशिनष्टि ।। ललाटेति । पल्लववत्स्निग्धा चासौ पाटला सन्ध्यायामप्येतद्विशेषणं योज्यम् । ललाटे उदयो यस्य सः ललाटोदयः तमाभुग्नमीषद्वक्रम् ।। "नदितश्च" निष्ठातस्य नत्वम् ।। श्वेतरोमाण्येवाङ्कस्तं बिभ्रती । नवं शशिनं बिभ्रती सन्ध्येव स्थिता"

वस्तुतोऽर्थोऽस्य पद्यस्य एकत्रिंशत्पद्यमधिकृत्यैव वाच्यः स्यात् ।

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ।।[1]

वादी अत्र वसिष्ठः होता यज्ञकृत् आहुतिसाधनम् यज्ञसामग्रीयोजनी नन्दिनी निर्दोषा गौः अघ्नी ( अनिन्द्या ) ( धेनुः ) आववृते प्रत्यावर्तत वनात् अरण्यात् । दिलीपाय सन्ततिबाधकतत्त्वं निर्दिशन् वसिष्ठः वादी उद्यते ।। प्रसंगान्तरेण वादिन एवास्य होतुः—होतुः एवास्य वादिनः—भाषमाणस्य वसिष्ठस्य होतुः प्रार्थयितुः आहुतिसाधनम् प्रार्थनापूरकोपायभूता, अथवा—होतुर्याज्ञिकस्य वादिनः वसिष्ठस्य वसिष्ठेन इति वार्तालापकरस्य याज्ञिकस्य याज्ञिकाय वा होतुरिति होत्रे इति भावात् षष्ठी चतुर्थ्यर्थे वा कथने दाने च चतुर्थी–षष्ठ्योः प्रयोगः विकल्पेन स्यात् । हुधातोः आकारणार्थात् होतृशब्दः षष्ठीभावे । होतुः आकारकस्य प्रार्थकस्य वादिन एव प्रार्थकाय राज्ञे दिलीपाय भाषमाणस्य आहुतिसाधनम् यज्ञक्रियोपायभूता दुग्धादिदानात् यज्ञसाफल्यकरी गौः । प्रार्थकस्य प्रर्थनापूरणी गौः । अथवा वादिनः निर्देशकस्य होतुः प्रार्थकस्य आहुतीनां

---

१. रघु० १।३१

प्रार्थनानाम् साधनम् पूरकोपायभूता गौः अथवा होतुः प्रार्थकस्य विसर्गलोपे वादिन एव इति भावे चतुर्थ्यर्थोऽपि बोध्यः स्यात्। वादिने इति वादिन एव। प्रार्थकस्य राज्ञः दिलीपस्य वादिने एव निर्देशकाय वसिष्ठाय आहुतिसाधनम् प्रार्थकप्रार्थनोपायभूतत्वं प्रख्यापयन्ती धेनुः गौः अथवा भाषमाणस्य वसिष्ठस्य होतुः प्रार्थकस्य आहुतिसाधनम् सन्तानदानपूरणोपायभूता गौः अनिन्द्या अन्नो निर्दोषा सती नन्दिनी नाम वनात् अपाववृते अरण्यात् प्रत्यागमत् वसिष्ठाय राज्ञे वा उभयायैवेति भावमनुक्रम्य द्वात्रिंशत्तमं पद्यमपि विवेच्यते। पद्येऽस्मिन् बभ्रुवर्णा गौः पाटलसन्ध्याकल्पेति भावः प्रमुख एव। अतः श्लेषानुप्राणितोपमा-द्वारा पद्यमिदं व्याख्यायते। ललाटोदयम् आभुग्नम् श्वेतरोमाङ्कं बिभ्रती पल्लवस्निग्धपाटला ( गौः–धेनुः ) तथैव वादिनः होतुर्वा वादिनः होतुः राज्ञो वसिष्ठस्य वा समक्षम् आगात् यथा नाम ललाटोदयम् आभुग्नं श्वेतरोमाङ्कं नवं शशिनं श्वेतरोमाङ्कं बिभ्रती पल्लवस्निग्धपाटला सन्ध्या समायाति उपगच्छति व्याप्नोति वेति इत्यन्वयः। भालपट्टोद्गतम् किञ्चिद्गोलाकारं सितलोमचिह्नम् धारयन्ती पत्रमिव चिक्कणा पाटला च, पर्णकान्तिरक्तपीतवर्णा च गौः ( नन्दिनी ) तथैव वसिष्ठस्य राज्ञो वा समक्षमाजगाम यथा नाम भालपट्टस्योपरि शिर उपरि वा आकाशे इति वा उदयो यस्य सः तम् व्योम्नि विराजमानं बिम्बाकारं सितलोमसदृश-लक्ष्मलक्ष्मीकं नवम् प्रत्यग्रोदितं चन्द्रमसम् सितलोमशाकारा पत्रैश्चि-क्कणरक्तपीतवर्णा सायं-श्रीः सूर्यास्तमनवेलायाम् चन्द्रोदयललामलालिमा उपगच्छतीति विश्लिष्टोऽर्थः। आङ्ग्लभाषायां चानुवाद ईदृश एव स्यात्—

(She i. e. the Cow) Crimson-hued or trumpet-hued and bland or glossy like a sprout ( freshane ), bearing the mark of a bright ( lit. white ) shag ( hair ), slightly roundish and appearing on her pate, come (to him i. e. the King as well as the sage ) in the same way as does the twilight trumpet-hued and cadeverous ( lit. glossy or unctuous) like a fresh sprent or with the fresh-sprouts,

bearing tints of the types of bright-shags, follow the new-moon bearing mark of the size of a bright hair being slightey arbed and appearing over head ( i. e. in the sley ).

हिन्दी-भाषायां चानुवाद एवं स्यात्—

माथे पर प्रकट, थोड़े से गोल चमकीले ( सफेद ) बाल के चकत्ते (चिह्न) को धारण कर रही (ताजे) पत्ते की तरह चिकने तथा रक्तपीत-वर्ण वाली (वह-गौः नन्दिनी) (राजा तथा मुनि के पास) (वन से लौटी हुई) उसी प्रकार आ पहुँची जिस प्रकार कि पत्तों द्वारा या पत्तों जैसी चिकनी और रक्तपीतवर्ण वाली सन्ध्या सायंकालीन लालिमा चमकीले बालों के रंग को धारण किए हुए, माथे पर अर्थात् सिर के ऊपर अर्थात् आकाश में उभरे हुए थोड़े से गोल और चमकीले बाल जैसे कलङ्क को धारण कर रहे चन्द्रमा के साथ साथ प्रकट होती है।

[ २-३ ]

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वचमादते वदतां वरः ॥[१]

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥[२]

अनयोः प्रथमे पद्ये 'विजितारिपुरः पुरः' इति शब्दः श्लेषेण बोध्यः । द्वितीये च 'मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः' इति समस्तपदानि श्लेषेण मुनिसम्राड्व्यञ्जकानि विकल्पेन मल्लिनाथलब्धार्थभेदमर्हन्ति । इति भावमधिकृत्यास्माभिरत्र विवक्षा विधेया ।

मल्लिनाथः पद्यद्वयमेवमाह—

*अथेति*—अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां वरः श्रेष्ठः, "यतश्च निर्धारणम्" इति षष्ठी । अर्थपती राजाथर्वणोऽ-

१-२ रघुवंशे नन्दर्गिकरसंस्करणे १।५६, ६१

थर्ववेदस्य निधेस्तस्य मुनेः पुरोऽग्रेऽर्थ्यामर्थादनपेताम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः वाचनाददे। वक्तुमुपक्रान्तवानित्यर्थः। अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीती सूच्यते। यथाऽऽह कामान्दकः—त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः। अथर्वविहितं कुर्यान्नित्यं शान्तिपौष्टिकम्॥ इति॥ ५६॥

तवेति। दूरात्परोक्ष एव प्रशमितारिभिः मन्त्रान्कृतवान्मन्त्रकृत्। 'सुकर्मपापमन्त्रपुण्येषु क्रमः' इति क्विप्। तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्तृभिः। दृष्टं प्रत्यक्षं यल्लक्ष्यं यन्मात्रं भिदन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव। वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इत्युत्प्रेक्षा। 'प्रत्यादेशो निराकृतिः'—इत्यमरः। त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः॥" ६१॥

सान्वयमत्र विवक्षामहे—

अथ तदनन्तरमथर्वनिधेरथर्ववेदविज्ञस्य तस्य विजितारिपुरः विजिताः अरीणां पुरः येन सः तस्येति मुनिवसिष्ठविशेषकम्। पुरः पुरस्तादग्रे वा विजिताः संयमिताः अरीणां पुरः कामक्रोधलोभमोहमदाहङ्कारादयो येन सः तस्य पुरः पुनरपि राज्ञो विशेषकम् विजिताः विधेयीकृताः अरीणाम् बाह्यान्तःशत्रूणां प्रकृत्यमित्राणां कृत्रिममित्राणां च, अन्तरेव स्वदेशे विद्रोहकृतां जनसमवायानां पुरो येन सः। श्लेषेणात्रापि 'प्रतिपक्षाणामान्तराणां च विजेता"[1] "आन्तराणाम् अन्तःकरणभवानां रागद्वेषादीनामतरङ्गाणाम्। अन्तराणाम् बाह्यानाम् नृपान्तररूपाणाम्, प्रतिपक्षाणां विपक्षाणाम् विजेता अपनेता"[2] इति भावो घटयितुं शक्यते। अतः—

अथ तदनन्तरं अथर्वनिधेः विजितारिपुरः पुरः तस्य पुरः विजितारिपुरः वदतां वरः अर्थपतिः अर्थ्याम् वाचमादद इत्यवन्यः कल्पयितुं शक्यते। अथर्ववेदविज्ञस्य संयमितान्तःकरणभवविपक्षावष्टम्भस्य तस्य मुनेर्वसिष्ठस्य समक्षम् वशीकृताकृत्रिमामित्रकृत्रिममित्रनगरः नियम-

---

१. धनपालीयतिलकमञ्जर्याम् प्रथमे भागे ५६ तमं पृष्ठम्।

२. तत्रैव टीकायाम्।

मितान्तःकरणप्रभावप्रभवोऽर्थपतिर्दिलीपः सम्राट् वदतां वरः वक्तृगण-वरीयान् वाचामुक्तौ विशेषेण शिष्टः अर्थगर्भामभ्यर्थाम् अभिप्रायपूर्णाम् वाचम् उक्तिम् आददे स्वीचकार प्रोक्तुं प्रारभत। इति विश्लिष्टोऽ-र्थोऽस्य पद्यस्य भवितुमर्हति।

द्वितीये च पद्ये मन्त्रकृत् मुनिर्वसिष्ठः अथर्ववेदगतान् मन्त्रान् कर्तुम् योग्यः प्रयोक्तुं प्रवणो वा अथर्ववेदगतान् सूक्तमन्त्रान् सार्थकत्वेन संस्तभ्य प्रयोगसाक्षीकृत्य च कौटिल्यादिकृतौपनिषदिकाधिकरणगतान् विधाय शत्रुक्षपणक्षमत्वात्तेषां स्वरक्षायै स्वशिष्यगणभूतराज्ञां च हिताय प्रयुक्तानां वा साहाय्यभावात् प्रशमितारिभिः दूरादिति–दवीयोदेशेभ्यः एव प्रशमितारिभिः वशीकृतशत्रुभिः दूरापसारितशत्रुभिः दूरभावित-कामक्रोधलोभमदादिभिरिति वा मन्त्रैः अथर्ववेदान्तर्गतसूक्तपद्यगतशब्दो-च्चारणप्रभावकैस्तत्त्वैः तवेति मुनेर्वसिष्ठस्य मे इति राज्ञो दिलीपस्य कीदृशस्य श्लेषेण मन्त्रकृतः प्रशमितारिभिः मन्त्रैः दूरात् दवीयोदेशादेव मित्रीकृतविपक्षैः मन्त्राः राज्यकार्ये मन्त्राधिकारगताः विमर्शाः परामर्शाश्च तन्त्रावापगताः गुप्तभावाः योजना विधायकाः नीतिप्रयोगाः तेषां कृदिति कर्ता रचयिता आयोजकः तस्य राज्ञो दिलीपस्य मन्त्रैः वा दृष्टलक्ष्यभिदः-शराः नेत्रविलिगतभेद्यतत्त्वभेदनशीलाः बाणाः शत्रूणां शिलीमुखाः प्रत्यादिश्यन्त इव पराङ्मुखीक्रियन्त इव। अथवा—

अथर्वमन्त्रकर्त्तुः वसिष्ठस्य तव संयमितान्तरङ्गशत्रुभिः प्रयोगयुक्तैः मन्त्रोच्चारैः उच्चारितरक्षाविधायिसूत्राक्षरैः ( अक्षरसूत्रैर्वा ) अपसारित-शत्रुकैर्नीतियोगप्रयोगकुशलस्य मे राज्ञो दिलीपस्य च मन्त्रैः प्रयुक्त-नीतिमार्गैः परिचितभेद्यतत्त्वमर्दनदक्षाः ( शत्रूणां ) शराः दूरादेव पराज-यन्ते पराङ्मुखीक्रियन्त इति वा विश्लिष्टो भावोऽस्य द्वितीयस्य पद्यस्य भवितुमर्हति।

[ ४ ]

सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम्।

त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ।।[1]

वल्लभदेवेन मल्लिनाथेन चापि प्रथमं पादद्वयं तथा व्याख्यातं यथानयोरर्थः प्रायेणैवं भवति—

"परित्यक्तशरीरभूषणं अनेकविधं दुःखं तस्य दुःख नेन शय्यायाः मध्यभागे निहितम् प्रस्थापितम् आन्दोलितं वा गात्रम् शरीरम् सा अबला विरहिणी पेशलं सकोमलं मृदुतया धारयन्ती नवीनजलरूपं नेत्रसलिलं मोचनाय त्वाम् बाधितं करिष्यति कुतः प्रत्येक एव दया-द्रवितो जनः परस्य व्यसनमवलोक्य समवेदनां प्रकटयितुं पारयते ।

परं मदीयेन मतेन पद्यमिदं विवक्षान्तरेणापि विविच्यते ततः अत्र सान्वय एवाभिप्रायः प्रस्तूयते ।

"संन्यस्ताभरणं शय्योत्सङ्गे निहितं पेशलं असकृद्दुःखं गात्रम् दुःखेन धारयन्ती सा अबला त्वाम् नवजलमयम् अस्रं अवश्यं मोचयिष्यति—इति समम् न्यस्तान्याभरणानि येन तत् सम्यङ्न्यस्तानि धारितानि आभरणानि यस्मिंस्तत् इति वा पेशलं सुन्दरं विपुलं वा असकृत् दुःखम् यस्मिस्तत् बारं बरं मुहुर्मुहुर्वा मनः आधिपीडितम् गात्रं शरीरं दुःखेन धारयन्ती सा अबला इति शोधसमयाकारोऽर्थः प्राप्तुं शक्यते। अथ हिन्दीभाषायामर्थोऽयमेवं प्रवक्तुं पार्यते—

"साथ या पास रखे गहनों वाले या भली प्रकार पहने हुए गहनों वाले शय्या की गोद अर्थात् शय्या के मध्य में रखे सुन्दर या भारी या सुडौल अनेकविध पीड़ायुक्त शरीर को दुःख से या कठिनाई से धारण कर रही वह विरहिणी नए पानीरूपी आँसुओं को अवश्य तेरे से छुड़ा देगी; क्योंकि दयापरक प्रत्येक प्राणी पसीजने वाले अन्तःकरण वाला होता है ।"

---

१. मेघदूतविलासे—श्रीवाक्कम्बे विरचिते ३० तमं पद्यम् ।
मेघदूते—एस. के. डे.—सम्पादिते—१० तमं पद्यम् ।
मेघदूत एक अनुचिन्तनम्—श्रीरञ्जनसूरिदेवः ३० तमं पद्यम् ।
मेघदूते एस. आर. काले-सम्पादिते–३३ तमं पद्यम् ।



# अजविलापः कालिदासस्य कवितारीतिश्च

*काल्लूरि हनुमन्तरावः*

रीतिपदं पद्धतिरीति सामान्यार्थे प्रयुज्यते न तु आलङ्कारिक-परिभाषायाम्। सर्वोऽपि कविः काञ्चन रचनारीतिमनुसरति। तस्य शक्तिः अशक्तिश्च तस्यामेव रचनारीत्यां समं व्यक्तीभवतः। सुन्दराभिवर्णनं कालिदासस्य कवितारीतिरस्ति। प्रतिसन्निवेशं स भावनायां व्यक्तीकरणे च सौन्दर्यं प्रदर्शयति। न केवलं सुन्दरमाद्रकरं च वस्तु, असुन्दरं वा उद्वेगकरं वा वस्तु कालिदासः सुन्दरं वर्णयति। एतदेव रचनाविधानं तस्य कवितारीतिः। रघुवंशस्थस्याजविलापवर्णनस्य कुमारसंभवगतस्थरति-विलापवर्णनस्य च परिशीलनात् कालिदासस्येयं कवितारीतिरवगम्यते—

क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला।
निमिमील नरोत्तमप्रियाहृतचन्द्रातमसेव कौमुदी॥
वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत्।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम्॥
(८, ३७, ३८)

अनयोः प्रथमे श्लोके इन्दुमत्याः मृतिः अतिमृदुतयोक्ता। 'विह्वला' इति पदस्थः बाधः 'सुजातयोः स्तनयोः' इति सौन्दर्यवर्णनया अप-सार्यते। अनन्तरे श्लोके अकस्मान्मृतां भार्यां वीक्ष्य राजा मूर्छितो बभूवेति वक्तव्ये 'निपतन्ती पतिमप्यपातयत्' इति वक्रमास्ते वचनम्। अग्रे प्रयुज्यमानस्योपमानस्य कृते इत्थं वक्रतया उच्यते कविना।

उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः।
विहगाः कमलाकरालयः समदुःखा इव तत्र चुक्रुशुः॥ (३९)

कवेर्दृष्टिः न परिजनस्याकुलत्वे किन्तु सरस्थानां पक्षिणामारवेषु लग्ना वर्तते। कविरस्मिन् शोकसन्निवेशेनिमग्नस्सन् न वर्णयति। निर्लिप्तमालोचयन्निव वर्णयति—

प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविक्रियात् ।
स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ।। ४१ ।।

अस्मिन्नुपमाने प्रयत्नकृतं कल्पनं दृश्यते । इन्दुमत्यां मृतायामजराजे दुःखमग्ने कवेर्दृष्टिः तयोः शृङ्गारविहारेभ्यो न प्रतिनिवृत्तेव दृश्यते । अनन्तरमज इत्थं विलपति—

कुसुमान्यपि गात्रसंगमात् प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ।।
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ।।
( ४४–४५ )

वाक्यान्येतानि सद्योहृदयोद्गतानीव न स्फुरन्ति । सालोचनो राजा सबुद्धिचातुर्यं विलपतीव दृश्यते । चमत्कारभरितेऽपिभावे असहजत्वं दृश्यते पठितॄणां दुःखोत्पादनाभावात् ।

कालिदासस्य कवितारीतिरेवेदृशी वर्तते । अन्ये कवयः ताटकायाः भयङ्करत्वं विकृतत्वं च वर्णितवन्तः । कालिदासस्तु "राममन्मथशरेण ताडिता" इति ताटकायां शृङ्गारं प्रदर्शयामास । कालिदासवर्णितेषु युद्धेषु निष्ठुरत्वं[1] न विद्यते । यथा रामरावणयुद्धवर्णनम्—

तस्य स्फुरति पौलस्त्यः सीतासंगमशंसिनि ।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे ।।
रावणस्यापि रामास्तो भित्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ।।
( १२, ९०-९१ )

द्वयोरपि श्लोकयोरन्यार्थचमत्कृतिः पठितुर्मनोयुद्धादपनयति । बाण-वेधबाधः मनागपि न स्फुरति । यथा इन्द्ररघुयुद्धवर्णने—

---

१ कालिदासकलामन्दिरमु ( आन्ध्रग्रन्थः )—इन्द्रगण्टि हनुमच्छास्त्री ।

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः।
बभूव युद्धं तुमुलं जयैषिणो रधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥
(रघु० ३, ५७)

इत्यस्मिन् श्लोके यद्यपि "आशीविषभीमदर्शनै" रित्युक्तं तथाप्येषु बाणेषु क्रूरत्वापेक्षया आतपकान्तिदीपितानां तिर्यक्पततां वर्षाबिन्दूनां सौन्दर्यमेवाधिकतो दृश्यते।

अजविलापवर्णने यावती अर्थचमत्कृतिः चकास्ति न तावान् शोकभावो निष्पद्यते। कुमारसंभवे रतिविलापश्चैवमेव प्रचलति। सर्वस्मिन् वस्तुनि सौन्दर्यदर्शनशीलस्य महाकवेः कालिदासस्य मनोव्यापार एवात्र मुख्यं कारणमस्ति।

रचनाशिल्पमपि यत्किञ्चिदपरं कारणं स्यात्। यः कोऽपि विषयः साहित्ये पर्यवसानानुगुणमुपस्थाप्यते। अत्रायं दृष्टान्तः। कस्यचिन्मरणवार्तां श्रुतवतस्तस्य बन्धुवर्गस्य विलापं सुदीर्घं वर्णयित्वा अन्ते सा वार्ता मिथ्या स जीवतीति च यदि रच्येत तर्हि तद्विलापवर्णनं प्रायेण व्यर्थं भवेत्। लोके कस्यचिन्मरणवार्तायामसत्यायामपि बान्धवानां विलापः सत्य एव भवति। साहित्ये तु पर्यवसानदृष्टिना कविना स विलापः अतिशयेन न वर्ण्यते पर्याप्तकलिताभावात्।

कुमारसंभवे मन्मथः पुनरुज्जीवति। यद्यप्ययं विषयः रत्या न ज्ञातः तथापि कवेर्विदित एव। अतः रतिविलापः शोकशृङ्गारमिश्रः संवृत्तः। रघुवंशे मृता इन्दुमती पुनर्न जीवति। तथापि—

पूर्वाकाराधिकतररुचा संगतः कान्तयाऽसौ।
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥

इति कवेर्वचनादस्मिन् सन्निवेशे इन्दुमत्या मरणमपि तात्कालिकसदृशं गणनीयं भवति। अत एवात्रापि शृङ्गारः शोकमावृणोति।

यद्यपि कस्यचिद्व्यक्तेर्मिथ्यामरणवार्तामवलम्ब्य तद्बन्धुविलापः पर्यवसानाभावात् प्रसह्य न वर्ण्येत तथाऽपि तद्वार्ताश्रवणोत्तरक्षणे तेषां दुःखावेशः निरूपणीय एव। नोचेदसहजत्वं स्फुटं स्यात्। महाभारते सर्पदष्टा प्रमद्वरा म्रियते अनन्तरं रुरोरायुषः अर्धेन उज्जीवति च।

प्रमद्वराया मृतिः तात्कालिकी वर्तते। किन्तु व्यासः रुरोदुःखावेशमित्थं वर्णयति—

तां ते कन्यां व्यसुं दृष्ट्वा भुजङ्गस्य विषार्दिताम्।
रुरुदुः कृपयाविष्टा रुरुस्त्वार्तो बहिर्ययौ ॥
(आदि० ८, २६–२७)

तेषु तत्रोपविष्टेषु ब्राह्मणेषु महात्मसु।
रुरुश्चुक्रोश गहनं वनं गत्वातिदुःखितः ॥
शोकेनाभिहतः सोऽथ विलपन् करुणं बहु।
अब्रवीद्र वचनं शोचन् प्रियां स्मृत्वा प्रमद्वराम् ॥ (आदि० ६, १–२)

उक्तिचमत्कारहीनमपि वर्णनमिदमत्यन्त सहजमस्ति। रामायणे चेदृशानि वर्णनानि सन्ति। कालिदासस्तु अजविलापे सहजत्वं विसृज्य उक्तिचमत्कृतिं प्रधानतया आश्रितवान्।

नैतावता कालिदासः शोकभावनिर्वहणे असमर्थ इत्युच्यते। शाकुन्तले शोकमत्यन्तसहजं पुपोष। अजविलापे चानन्तरश्लोकेषु—

मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम्।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥
(रघु० ८, ५२)

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥
(रघु० ८, ६६–६७)

इति विनष्टस्य मधुरदाम्पत्यजीवितस्य चित्रणेन शोकं सुष्ठु निरूपयामास। किञ्च जीवितमरणतात्त्विकसमालोचनयुतान् गम्भीराभिप्रायान् उपन्यस्तवान्।

इत्थंअजविलापवर्णनं कालिदासस्य कवितारीतेरुचितं निदर्शनमस्ति। भावनायां सौन्दर्यं, विज्ञानशरिता अभिप्रायाः, उक्तौ चमत्कृतिः, शब्दसंघटनायामसदृशं रामणीयकं चैते गुणाः सर्वत्र तस्य कविकुलगुरोः कवित्वे दृश्यन्ते।



## भासनाटकचर्चा

*काल्लूरि हनुमन्तरावः*

सुसंपन्नं संस्कृतसाहित्यं सुसंपन्नतरं समजायत अर्धशताब्द्याः प्राक् भासस्य नाटकानां लाभेन। "प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहूमानः" इति महाकविना कालिदासेन,

> सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
> सपताकैर्यशो लेभे भासो देवकुलैरिव ॥

इति बाणेन अन्यैश्च प्रकीर्तिता भासस्य कृतयः दिष्ट्या अलभ्यन्त। वाल्मीकिव्यासयोरिव भासस्यापि भावान् पदबन्धांश्च कालिदासः प्रीत्या स्वकाव्येषु तत्र तत्र उपायुङ्क्त यत्तस्य भासनाटकेषु आदरं सूचयति।

भासकृतानि नाटकानि त्रयोदश[1] सन्ति। यथा–१. रामायणभारतभागवतकथात्मकानिः, २. चारित्रिकाणिः, ३. कल्पितानि चेति तानि त्रिविधानि सन्ति।

### भासनाटकपात्राणामुदात्तता

भासनाटकपठनमुदात्तं धार्मिकं गुणवन्तं कमपिविशिष्टलोकमस्मान् नयतीव। मूलकथासुस्थितानि रावणदुर्योधनादीनि दुष्टपात्राण्यपि भासनाटकेषु उदात्ती कृतानि संदृश्यन्ते। दुर्योधनः, रावणः, वाली, कर्णः, कैकेयी, उदयनशत्रुः महासेनः, धृतराष्ट्रः, उत्तरः, शल्यः इत्यादिषु त्रयोदशनाटकस्थेषु उपशतद्वयसंख्येषु पात्रेषु केवलं बालचरितस्थं कंसं, पञ्चरात्रस्थं शकुनिं, दूतवाक्यस्थं दुर्योधनं, चारुदत्तस्थं शकारं च विना अन्यद् दुष्टपात्रं नाम न विद्यते। ये खलु रामार्जुनधर्मराजादयः प्रकृतित

---

१. एतेषां नाटकानां कर्तृत्वविषये विमर्शकाः अद्यापि विवदन्ते।

उदात्ताः सन्ति ते उदात्ततरा लक्ष्यन्ते। धार्मिकाणिद् ानविनयादिसद्गुणो-पेतानि जीवितानि प्रदर्शयन्ति भासकृतानि नाटकानि। कर्णभारे कर्ण एवं वदति—

शिक्षा क्षयं गच्छति कालपर्ययात्
सुबद्धमूला निपतन्ति पादपाः।
जलं जलस्थानगतं च शुष्यति
हुतं च दत्तं च तथैव तिष्ठति॥ (२२)

पञ्चरात्रे द्रोणाय दत्तां प्रतिश्रुतिमनुसृत्य पाण्डवेभ्यः अर्धराज्यं प्रयच्छन् दुर्योधन इत्थं वदति—

बाढं दत्तं मया राज्यं पाण्डवेभ्यो यथापुरम्।
मृतेऽपि हि नरास्सर्वे सत्ये तिष्ठन्ति तिष्ठति॥ (३, २५)

मानवजीवितोपरि प्रगाढाशाविश्वासौ बध्नाति भासः। प्रतिज्ञा-यौगन्धरायणे यौगन्धरायणमुखेन इत्थं वदति—

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति॥ (१,१८)

पञ्चरात्रस्थ उत्तरो महाभारतस्थ उत्तर इव भीरुर्नास्ति। दूत-घटोत्कचे—

यातोऽभिमन्युनिधनात् स्थिरतां विरोधः
प्राप्तो जयः प्रचलिता रिपवो निरस्ताः।
उन्मूलितोऽस्य च मद्रो मधुसूदनस्य
लब्धो मयाऽद्य सममभ्युदयेन शब्दः॥

इति वदन् प्रवेशितो दुर्योधनः तथोपस्थापितः यथाऽस्य कृष्ण-पाण्डवैस्सहाप्रहयुतं राजकीयवैरुद्धयमेव प्रवर्तते न तु कुटिलत्वेन निष्पादितं दुष्टशत्रुत्वम्। ईदृश एव दुर्योधन ऊरुभङ्गे आमरणं लक्ष्यते। भीमगदाछलप्रहारेण दुर्योधनपतनादेव तस्योपरि अस्माकं गौरवभावः समुत्तिष्ठति।

"हन्त भो ! दत्तमूल्या इव मे प्राणाः । कुतः—

आदीप्तानलदारुणाज्जतुगृहाद् बुद्ध्यात्मनिर्वाहिणा
युद्धे वैश्रवणालयेऽचलशिलावेगप्रतिस्फालिना ।
भीमेनाद्य हिडिम्बराक्षसपतिप्राणप्रतिग्राहिणा
यद्येवं समवैषि मां छलजितं भो राम ! नाहं जितः ॥

( ३४ ) इति,

येनैव मानेन समं प्रसूतस्तेनैव मानेन दिवं प्रयामि ॥ इति,
भर्ता ते न पराङ्मुखो युधि हतः किं क्षत्रिये रोदिषि ।

इति च वदतो दुर्योधनस्य व्यक्तित्वं समुन्नतं स्थापितमस्ति नाटके। य एवं मानधनः नाटकस्य पूर्वभागे अस्माभिराश्चर्यविस्तृतनयनै-रुद्वीक्ष्यते स तदनन्तरं दयनीयो मातापितृभक्तितत्परः पश्चात्तप्तश्च भूत्वा अस्मन्मनो विषादभरितं कृत्वा म्रियते । भग्नोरुः पितृपादाभिवन्दनार्थ-मुत्थातुमशक्तो दुर्योधनः—

हृतं मे भीमसेनेन गदापातकचग्रहे ।
सममूरुद्वयेनाद्य गुरोः पादाभिवन्दनम् ॥ ( ४१ )

इति विलपति ।

नमस्कृत्य वदामि त्वां यदि पुण्यं मया कृतम् ।
अन्यस्यामपि जात्यां मे त्वमेव जननी भव ॥ ( ५० )

इति गान्धारीं वदति । दुर्योधनोऽयमभिमन्योः मरणे दुःखितो भवति । पाण्डवैस्सहास्य वैरं स्वपतनोत्तरक्षण एव विनश्यति । अत एव बलरामे तान् हन्तुमुद्युक्ते,

त्वत्पादयोर्निपतितं पतितस्य भूमा
वेतच्छिरः प्रथममद्य विमुञ्च रोषम् ।
जीवन्तु ते कुरुकुलस्य निवापमेघाः
वैरं च विग्रहकथाश्च वयं च नष्टाः ॥ ( ३१ )

इति तं प्रार्थयते । अश्वत्थाम्नः पाण्डववंशसौप्तिकवधप्रतिज्ञामसौ दुर्योधनो नानुमोदते प्रत्युत तन्निवारणाय प्रयतते ।

कर्णभारे कर्णः कवचकुण्डलदानविनिमयत्वेन शत्रुघाति अस्त्रं न याचते । तस्य दानशौण्डीर्येण विलज्जितः इन्द्रः स्वमेव तदस्त्रं प्रयच्छति ।

गृहीतुमनिच्छन्नपि ब्राह्मणभक्त्या कर्णः तदस्त्रं गृह्णाति। शल्यश्च महाभारतस्थः शल्य इव कर्णं तृणाय मन्यमानो न विजल्पति। यथा कृष्णः अर्जुनस्य शुभं काङ्क्षति तथाऽयं शल्यः कर्णस्य हितमिच्छति।

स्वप्नवासवदत्ते वासवदत्ता सपत्नीं पद्मावतीं न द्वेष्टि। सोदरीवत्तस्यामनुरजति। स्वापेक्षया वासवदत्तायामधिकतरं सक्तो भर्तेति ज्ञात्वाऽपि पद्मावती नैवेर्ष्यति। बालचरितस्थे कंसे वसुदेवापत्यहननं विना अन्यो दुर्गुणो न विद्यते। स्त्रीशिशुं घ्नन् कंसः "अहो! राजदर्शनीयेयं दारिका। मयाऽपि नाम स्त्रीवधः कर्तव्यो भवति" इति वदति। प्रतिमानाटके खरवधकृतवैरप्रतीकारार्थं सीतामपहरन् रावण एवमुद्घोषयति—

बलादेष दशग्रीवः सीतामादाय गच्छति।
क्षात्रधर्मे यदि स्निग्धः कुर्याद्रामः पराक्रमम्॥ (५, २१)

रामायणीये रावणे राक्षसत्वमेव दृश्यते। प्रतिमानाटकस्थो रावणो न केवलं क्रूरः। तस्य पतिव्रतासु स्त्रीषु गौरवभावो वर्तते। "न रामो मत्सदृशः" इति रावणेन भणिता सीता कोपेन "शप्तोऽसि" इति वदति। तदा,

योऽहमुत्पतितो वेगान्न दग्धस्सूर्यरश्मिभिः।
अस्याः परिमितैर्दग्धः शप्तोऽसीत्येभिरक्षरैः॥
(५, २०)

इति तर्कयति रावणः। आश्रमे प्रविश्य "भो! काश्यपगोत्रोऽस्मि। साङ्गोपाङ्गं वेदमधीये। मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं च।" इति स्वस्य बहुमुखं वैदुष्यं प्रकटीकरोति। यथा—

स्वरपदपरिहीनां हव्यधारामिवाहं।
जनकनृपसुतां तां हर्तुकामः प्रयामि॥
(५, ७)

माययापहृते रामे सीतामेकां तपोवनात्।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम्॥
(५, १५)

इत्यनयोः श्लोकयोरस्य वैदिकव्याकरणज्ञानं स्पष्टं भवति। स रामं च सगौरवं पश्यति। यथा—

> अहो बलमहो वीर्यमहो सत्त्वमहो जवः।
> राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत्॥
>
> (५, १४)

इति रामं प्रशंसति। एवं पञ्चमाङ्कमात्रप्रवृत्तिरपि रावणः तस्मिन्नेक एवाङ्के स्वीरत्वौद्धत्यशास्त्रवैदुष्यराक्षसत्वगुणान् निरूप्य हिमालयोन्नतस्य रामस्य समः प्रतिद्वन्द्वी उत्तिष्ठति।

अभिषेकनाटके सुग्रीवो वालिनं कियता सौम्यभावेन कियता च गौरवेण योद्धुमाह्वत इति पश्यत,

> अपराधमनुद्दिश्य परित्यक्तस्त्वया विभो।
> युद्धे त्वत्पादशुश्रूषां सुग्रीवः कर्तुमिच्छति॥
>
> (१, ८)

इत्थं भासनाटकचक्रे वर्तमानानि सर्वाणि च पात्राणि अस्मदपेक्षया समुन्नतानि भवन्ति उत्तमानादर्शानस्माकं प्रदर्शयन्ति च।

## नाटकशिल्पम्

भासस्य नाटकरचनाशिल्पमुत्कृष्टं विभासते। अस्मिन् शिल्पे कालिदासोऽपि भासाद् हीयते, भवभूत्यादीनां का कथा।

प्रारम्भ एव कथामध्ये अस्मान् प्रणुदति। यथा प्रतिज्ञायौगन्धरायण-प्रारम्भः —

यौगं०—सालक ! सज्जस्त्वम् ?

साल०—आर्य ! अथ किम्।

यौगं०—महान् खल्वध्वा गन्तव्यः।

साल०—महत्तरेण स्नेहेनार्यमुपतिष्ठे।

इत्थं भासनाटकप्रारम्भास्सर्वे उदाहरणयोग्याः सन्ति। संभाषण-रचनायां भासः अत्यन्तं निपुणोऽस्ति। अल्पाल्पैः संभाषणैः कथायाम-स्माकमासक्तिं प्रेरयन् लघु लघु नाटकं गमयति भासः। प्रतिमा-

नाटके सर्वविदितायां रामायणकथायामपि कथमौत्सुक्यं जनयतीति दृश्यताम्—

देवकुलिकः—अयं दिलीपः ।

भरतः—पितृपितामहो महाराजस्य । ततस्ततः ।

देव०—अत्रभवान् रघुः ।

भर०—पितामहो महाराजस्य । ततस्ततः ।

देव०—अत्र भवानजः ।

भर०—पिता तातस्य । किमिति किमिति ?

देव०—अयं दिलीपः । अयं रघुः । अयमजः ।

भर०—भवन्तं किञ्चित् पृच्छामि । धरमाणानामपि प्रतिमाः स्थाप्यन्ते ।

देव०—न खलु । अतिक्रान्तानामेव ।

भर०—तेन ह्यापृच्छे भवन्तम् ।

देव०—तिष्ठ ।

येन प्राणाश्च राज्यं च स्त्रीशुल्कार्थे विसर्जिताः ।
इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसे ॥

( ३, ६ )

## भासस्य हास्यम्

हास्यरचनायां भासस्य सामर्थ्यं नितरां चकास्ति यत्तस्य हास्यमुदात्तमुत्पाद्यते । भासनाटकेषु अनद्वारो विदूषकः, हास्योत्पादनाय न कोऽपि भण्ड इव चेष्टते च ( शकारमेकं विना ) । अर्थस्फूर्त्या हास्यमुत्पादयति भासः । यथा प्रतिमानाटके सप्तमाङ्के तापसनन्दिलकयो संभाषणम् —

नन्दि०—आर्य ! सर्वं सज्जीकृतम् । किन्तु—

तापसः—किमेतत् ?

नन्दि०—अत्र विभीषणसंबन्धिनो राक्षसाः । तेषां भक्षणनिमित्तं कुलपतिः प्रमाणम् ।

तापसः—किमर्थम् ?

नन्दि०—ते खलु खादन्ति ।

ताप०—अलमलं संभ्रमेण । विभीषणविधेयाः खलु राक्षसाः ।

नन्दि०—नमो राक्षससज्जनाय ।

हास्योत्पादनार्थं भासः बलात् संदर्भं न प्रकल्पयति यतोऽस्य हास्य-सन्निवेशे अनौचित्यं न प्रसज्यते ।

सूक्ष्मानपि विषयान् भासः श्रद्धया निर्वहति यतोऽस्य नाटकेषु यथार्थतायाः सुष्ठु परिपोषः अवलोक्यते । यथा दूतघटोत्कचे—

दुश्शासनः—तात ! बालो न बाल इति । अभिमन्युना······

धृतराष्ट्रः—किं किं दुश्शासनो व्याहरति ?

अन्धस्य धृतराष्ट्रस्यैष प्रश्नः भासस्य यथार्थतासूक्ष्मावगाहनं प्रदर्शयति । प्रतिमानाटके अयोध्यां प्रत्यागच्छन् भरतः सद्यः अयोध्यायामात्मानं बन्धुपरिवारयुतमित्थमूहते—

सदृश इति महानिति व्यायतश्चेति
भृत्यैरिवाहं स्तुतः सेवया ।
परिहसितमिवात्मनस्तत्र पश्यामि
वेषं च भाषां च सौमित्रिणा ॥ ( ३, ४ )

. सूक्ष्ममनःपरिशीलनेन साकं भरतलक्ष्मणयोः सोदरानुरागं निरूप-यतीदमूहचित्रणम् ।

भासः वीरेषु प्रीणाति ! अस्य नाटकचक्रे वीरप्रशंसाः दरिदृश्यन्ते । अवीरान् स न श्लाघते । दूतवाक्यनाटके दुर्योधनपात्रद्वारेण धर्मराजस्य मृदुस्वभावमित्थं परिहसति—

प्रातः किलाद्य वचनादिह पाण्डवानां
दौत्येन भृत्य इव कृष्णमतिः स कृष्णः ।
श्रोतुं सखे त्वमपि सज्जय कर्ण कर्णौ
नारीमृदूनि वचनानि युधिष्ठिरस्य ॥ ( १३ )

चारुदत्ते शकारे दुतवाक्ये दुर्योधने च मूर्खपात्रनिर्वहणे प्रतिभा प्रादर्शि भासेन । कृष्णागमनवार्तां श्रुत्वा इत्थं वदति दुर्योधनः—

"अपि च योऽत्र केशवस्य प्रत्युत्थास्यति स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः । को नु खलु ममाप्रत्युत्थानस्योपायः ? हन्त दृष्ट उपायः । बादरायण ! आनीयतां स चित्रपटो ननु यत्र द्रौपदीकेशाम्बराकर्षणमालिखितम् । ( अपवार्य ) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।"

## भासस्य कविता

भासस्य कविताशक्तिः बहुमुखी विजृम्भते । परन्तु वीरवर्णनेऽस्य लेखनी असदृशीं शक्तिं प्रदर्शयति । ऊरुभङ्गदूतघटोत्कचादिभ्यो नैकानि पद्यानि दृष्टान्तीकर्तुं शक्यते । स्थालीपुलाकन्यायेन ऊरुभङ्गे अश्वत्थाम्न उद्घोषो दृश्यताम्—

छलबलदलितोरुः कौरवेन्द्रो न चाहं
शिथिलविफलशस्त्रः सूतपुत्रो न चाहम् ।
इह तु विजयभूमौ द्रष्टुमद्योद्यतास्त्रः
सरभसमहमेको द्रोणपुत्रः स्थितोऽस्मि ॥ (५७)

भासस्य कविताभावनायां गाम्भीर्येण सह विस्तृतिरपि विद्यते । यथोरुभङ्गे—

भो दुर्योधन ! मुहूर्तं तावदात्मा धार्यताम् ।
सौभोच्छिष्टमुखं महासुरपुरप्राकारकूटाङ्कुशं
कालिन्द्रीजलदेशिकं रिपुबलप्राणापहारार्चितम् ।
हस्तोत्क्षिप्तहलं करोमि रुधिरस्वेदार्द्रपङ्कोत्तरं
भीमस्योरसि यावदद्य विपुले केदारमार्गाकुलम् ॥ (२८)

प्रतिमानाटके रामवियुक्तदशरथपात्रचित्रणे, ऊरुभङ्गनाटके गान्धारीधृतराष्ट्राभ्यां दुर्योधनस्य समावेशे च भासः शोकं बाढं निर्वहति । यथा—

मेरुश्चलन्निव युगक्षयसन्निकर्षे
शोषं व्रजन्निव महोदधिरप्रमेयः ।
सूर्यः पतन्निव च मण्डलमात्रलक्ष्यः
शोकाद् भृशं शिथिलदेहमतिर्नरेन्द्रः ॥ ( २, १ )

इति कञ्चुकिना निर्दिष्टो दशरथः प्रविशति ।

सूर्य इव गतो रामः
सूर्यं दिवस इव लक्ष्मणोऽनुगतः ।
सूर्यदिवसावसाने
सन्ध्येव न दृश्यते सीता ॥ ( २, ७ )

( ऊर्ध्वमवलोक्य ) भोः ! कृतान्तहतक !

अनपत्या वयं रामः पुत्रोन्यस्य महीपतेः ।
वने व्याघ्री च कैकेयी त्वया किं न कृतं त्रयम् ॥ (२, ८)

अविमारके शृङ्गारभावनिर्वहणे भासस्य सिद्धहस्तता गोचरीभवति ।

अद्यापि हस्तिकरशीकरशीतलाङ्गीं
बालां भयाकुलविलोलविषादनेत्रां ।
स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
जातिस्मरः प्रथमजातिमिव स्मरामि ॥ ( २,१ )

किमपि भावं भासः कयापि नव्यतया परिपुष्य हृदयावर्जकं करोति । मध्यमव्यायोगस्थेऽस्मिन् पद्ये उपमालङ्कारस्य रामणीयकमवलोक्यताम्—

पुत्रनक्षत्रकीर्णस्य पत्नीकान्तप्रभस्य च ।
वृद्धस्य विप्रचन्द्रस्य भवान् राहुरिवोत्थितः ॥ ( ३३ )

अपरमिदं पद्यमविमारकगतं भासस्य सुन्दर ऊहो यस्मिन् विद्योतते । यथ—

पूर्वा तु काष्ठा तिमिरावलिप्ता
सन्ध्यारुणा भाति च पश्चिमाशा ।
द्विधाविभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम् ॥ ( २, १२ )

इत्थं भासस्य प्रतिपद्यं प्रतिगद्यं च भावोल्बणत्वमनुभूयते । यद्यपि रामायणमहाभारतकथाधारेण बहूनि नाटकानि स रचितवान् तथाऽपि तत्काव्यभावान् नानुकृतवान् । भासेन व्यक्तीकृतः सर्वो भावः तदुपज्ञमेव । अस्य शैली ललिता पुनः पट्वी च । एकमपि पदं पद्ये व्यर्थं न तिष्ठति । किन्तु कचित् कचित् भावव्यक्तीकरणार्थं पर्याप्तानि आवश्यकपदान्यपि

न वर्तन्ते यतः अर्थपूरणार्थमेकद्विपदसंयोजनं तत्रावश्यकं भवेत्। यथोपर्युदाहृते "छलबल" इति श्लोके "प्रतियोधम्" इत्यर्थपूरकं पदमावश्यकमस्ति।

## भासनाटकेषु दोषाः

यद्यपि काव्यरचनायां नाटकरचनायां चैतावच्छक्तिसंपन्नोऽस्ति भासः तथाऽपि तस्य नाटकेषु केचन प्रमुखा दोषा विद्यन्ते। प्रायो रामायण-महाभारतकथाः अवलम्ब्य नाटकानि रचयन्नपि भासः काव्यभावेष्विव पात्रचित्रणेऽपि वाल्मीकिव्यासौ नानुससार। बहूनि नूतनसंघटनानि प्राकल्पयत्। तत्तत्कथासु परिणामान् कृत्वा नूतनत्वप्रदर्शनमेव तस्य नाटकरचनालक्ष्यमित्याभाति। यद्यप्येते परिणामाः क्वचित् क्वचित् युज्यन्ते तथाऽपि प्रायेण समीचीना न सन्ति। ऊरुभङ्गदूतघटोत्कचमध्य-मव्यायोगेषु मूलकथाभ्यो भासेन कृताः अल्पाः परिणामाः युक्ताः सन्तः नाटकेषु शोभन्ते। किन्तु प्रतिमानाटके कैकेयीपात्रचित्रणे भासेन कृतः परिणामः, सीतापहरणनवीनसंघटनकल्पनं, पञ्चरात्रे भारतकथां मध्ये त्रोटयित्वा कृतं कथासंविधानं चैतानि न युज्यन्ते।

## वाल्मीकिभासयोः कैकेयी

प्रतिमानाटके रामस्य यौवराज्याभिषेकं विघ्नयित्वा तं वनं प्रेषयितुं स्वपुत्रराज्यकाङ्क्षा कारणं नास्ति कैकेय्याः। दशरथः पुत्रशोकान्मरिष्यतीति स्थितं शापं तथ्यं कारयितुं सा रामं वनं प्रेषयति। किमर्थमयं वनवासो ममैव न विहित इति भरतेन पृष्टा कैकेयी, सर्वदा मातुलगृह एव वर्तमानस्य तव वनवासो विहितोऽपि किमपि विशेषं न जनयेदिति सा वदति। तर्हि चतुर्दशसंवत्सराणां दीर्घकालः किमर्थं विहित इति पुनः पृष्टा चतुर्दशदिवसा इति विवक्षुः संभ्रमवशात् चतुर्दशवत्सराः इत्यवदमिति उक्त्वा तं समहितं करोति।

परन्तु पुत्रशोकात् विपत्स्यसीति यो मुनिशापो दशरथस्यास्ति स सर्वथा तथ्यो भविष्यति। कदाऽपि महर्षेः शापः सत्यो भविष्यत्येव। तं शापं द्राक् स्वभर्तरि प्रयोजयितुं कोऽयं व्यवसायः कैकेय्याः? मतेन भर्त्रा सह यमं समनुपत्य भर्तारं पुनरुज्जीवयाञ्चक्रे पतिव्रता काचित्

भारतीया स्त्री। एषैव संस्कृतिः भारतीयस्त्रीणां प्रवर्तते। रामायणं नाम भारतीयसंस्कृतेः खनिः दर्पणश्च। रामायणकथानाटके भर्तृमरण-विधात्री कैकेयी उत्तमं स्त्रीपात्रं न भवति।

वाल्मीकीये रामायणे कैकेय्या व्यवसितमन्यद्वर्तते। अस्या अपि राज्यं स्वपुत्रस्य भवत्विति दुराशा नासीत्। यथा—

राज्यं च यदि रामस्य भरतस्यापि तत्तथा।
मन्यते हि यथात्मानं तथा भ्रातॄंश्च राघवः॥
(अयो०, ४, १६)

इति सा प्रथमं मन्थरां वदति। यदि रामो युवराजो भविष्यति तदा राज्यं निष्कण्टकं कर्तुं भरतं हनिष्यति यस्यापि राज्याधिकारोऽस्तीति कुशाग्रबुद्धिर्मन्थरा कैकेयीमुद्बोधयति, स्वपुत्र आपदं प्राप्स्यतीति भयेन कैकेय्या मन आविष्टं भवति। भरतादपि रामे कैकेयी अधिकं स्निह्यतीति लोकोक्तिरतिशयोक्तिर्भवेत्। काऽपि माता स्वपुत्रापेक्षया सपत्नीपुत्रे अधिकं न स्निह्यति। विवाहशुल्कं स्वहस्तस्थितामलकायमानं राज्यं ज्येष्ठाय गुणगरिष्ठाय रामाय प्रदातुं या निश्चितवती सोदात्तैव कैकेयी। परन्तु तत्कारणेन स्वपुत्रो विपत्स्यतीति यदैव भीपरिगता साऽभवत् तदैवाञ्जसा रामनिष्कासने कृतनिश्चया परिणता। इदानीं तस्याः भरताय राज्यं, रामनिर्वासनमिति आवश्यकद्वयमस्ति। केवलं स्वपुत्रराज्याधिकार एक एव चेदावश्यकः तर्हि स्वविवाहशुल्करूपेणैव स्वायत्तीकुर्यात् कैकेयी। किन्त्विदानीं तस्याः पुत्रराज्यप्राप्तिर्नालम्। भरतस्य क्षेमाय रामस्य विवासनमप्यावश्यकम्। चतुर्दशसु वर्षेषु भरतः अमात्यान् प्रजाश्च स्वपक्षे प्रत्यावर्त्य राज्याधिकारं सुस्थिरं करिष्यतीति तथा तर्कितं भवेत्। अत एव विवाहशुल्कविषयमप्रस्तुत्य अन्यथा संप्राप्तं वरद्वयमुपायुङ्क्त। कैकेय्या एवं चित्रणे वाल्मीकिः स्त्रीस्वभावं यथार्थं निरूपितवान्। यद्यपि रामनिष्कासनं कैकेय्याः धर्मबद्धं वा युक्तं वा नास्ति तथाऽपि सहजमस्ति।

## वाल्मीकिभासयोः रामः

भासेन सुखदुःखातीतो रामः प्रतिमानाटके चित्रितः। स्वस्य कष्टदशाया स मनागपि व्याकुलो न भवति। अभिषेकनाटके रामः

वालिनं हत्वा किञ्चिदपि पश्चात्कारुण्यं नानुभवति। वाल्मीकीये रामायणे रामो महान् धीरो निरूपितः परन्तु न सुखदुःखातीतः। बलिवधानन्तरं दुःखितं सुग्रीवं वीक्ष्य रामः स्वयं दुःखमनुभवति। यथा—

इत्येवमार्तस्य रघुप्रवीरः
श्रुत्वा वचो वाल्यनुजस्य तस्य।
संजातबाष्पः परवीरहंता
रामो मुहूर्तं विमना बभूव॥
(किष्किं०, २४, २४)

## वाल्मीकिभासयोः सीतापहरणसंघटना

भासेन प्रतिमनाटके सीतापहरणसंघटनान्यथा प्रकल्पिता। पितुः श्राद्धकार्यमत्यन्तपितृप्रीतिकरं कथं करणीयमिति रामे आलोचयति रावणः संन्यासिवेषेणागच्छति। बहुशास्त्रविदहं श्राद्धकल्पं चाध्यैयीति वदति। पितृप्रीतिकरं किं भवेदिति रामेण पृष्टः स्वर्णमृगः श्रेष्ठः स हिमवच्छृङ्ग एव प्रतिवसति मानवदुर्लभश्चेति प्रतिवक्ति। तदा—

सौवर्णान् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति।
भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति॥
(५, १२,)

इति रामः प्रतिजानीते। सहसा रावणः स्वमायया तत्रैव स्वर्णमृगं प्रदर्श्य त्वत्कृते हिमवताऽत्रैव स्वर्णमृगः प्रहितः पश्येति वदति। तदा लक्ष्मणस्तत्रासन्निहितोऽस्ति, रामः स्वयं तन्मृगमानेतुं गच्छति, तदन्तरे सीतापह्रियते च।

अस्मिन् सन्निवेशे यद्यपि भासस्य कल्पनाशक्तिर्विजृम्भते तथापि कल्पनमिदं समीचीनं नास्ति। मायाविनो राक्षसाः सन्त्यरण्ये इति जानाति रामः। एवं स्थिते विवेकिनो रामस्य न युज्यत इदं यत्तामपरिचितस्य संन्यासिनः समीपे त्यक्त्वा स गच्छति।

रामायणे स्वर्णमृगे दृष्टमात्र एव नायं मृगः किन्तु राक्षसमायामय इति लक्ष्मणो वदति। तथाऽपि सीतायाः स्त्रीचापल्येन प्रेरितो रामः तं मृगमानेतुं गच्छति। अनन्तरं सीतायाः निष्ठुरोक्तीरसहमानो लक्ष्मणो

निर्गच्छति। स न मृगः, राक्षसो भवेदिति संदिहानावपि रामलक्ष्मणावित्थं गच्छतः। अतः भासनाटक इव दशरथस्य श्राद्धनिर्वहणं सीतापहरणकारणं नास्ति रामायणे। आत्मापहरणस्यात्मैव हेतुर्भवति सीता। यथा रामनिर्वासनं विदधती कैकेयी अनुदारं प्रवर्तते तथा लक्ष्मणं निन्दित्वा प्रेषयति अदूरदर्शना सीता। परन्तु कैकेयीसीतयोर्द्वयोश्च सहजत्वमस्ति वाल्मीकीये रामायणे।

## पञ्चरात्रकथासंविधानम्

पञ्चदिनेषु यः पाण्डवानां स्थितिं जानाति तस्मै अर्धराज्यं ददामीति प्रतिश्रृणोति दुर्योधनः पञ्चरात्रे नाटके, तत्प्रतिज्ञां पालयति च। अस्मिन्नाटके गोहरणानन्तरं पाण्डवानामर्धराज्यप्राप्त्या कथा सुखान्तमवसीयते अभिमन्योर्विवाहेन। गोहरणयुद्धे दुर्योधनपक्षाद्योद्धुं गतवतः अभिमन्योर्भीमेन ग्रहणं पश्चाद्विवाहश्चापरा कल्पना। अत्र दुर्योधनपक्षादभिमन्योर्युद्धगमनं न युज्यते। किं च दुर्योधनस्य प्रतिज्ञानिर्वहणनिरूपणार्थं पटुविस्तृता महाभारतकथा मुधाकृता। नाटकं नाम प्रवृत्तिप्रधानं भवति। अस्मिन्नाटके स्तोकस्याभिप्रायस्य कृते महती प्रवृत्तिस्त्यक्ता। एतन्नाटकपठनोत्तरक्षण एव सर्वा महाभारतकथा उत्सादितेति स्फुरति। रामायणमहाभारतकथे जगत्प्रसिद्धे स्तः। एतयोः काव्यवस्तुरूपेण ग्रहणे परिपूर्णमूलव्यतिरिक्तानि कल्पनानि न युज्येरन्। स्वल्पाः परिणामा युज्यन्ते यथाभिज्ञानशाकुन्तले वेणीसंहारे ऊरुभङ्गे दूतघटोत्कचे वा कृताः। भवभूतिकृत उत्तररामचरिते लोकविश्रुतपराक्रमस्य रामस्य पराक्रमो यद्नामकेन लवेन तिरस्कृतः तन्नयुक्तमिति क्षेमेन्द्रेण औचित्यविचारचर्चायां प्रत्यपादि। अनौचित्यदोषोऽयं भासस्य प्रतिमापञ्चरात्रनाटकयोर्दृढं प्रवर्तते।

शृङ्गारनाटकरचनायां भासस्य यावती शक्तिरस्ति तावती रक्तिर्नास्ति। अविमारकं स्वप्नवासवदत्तं च द्वे एव शृङ्गारनाटके भासेन रचिते स्तः। द्वयोरप्यनयोः प्रारम्भे विद्यमानं सन्निवेशपटुत्वमन्ते विश्लथते। ऊरुभङ्गनाटकान्ते अश्वत्थामप्रतिज्ञातं सौप्तिकवधमनुमनुते बलरामो येन तत्पात्रं न्यूनीभवति। सत्स्वप्येतेषु दोषेषु भासः महान् प्रतिभावान् महान् कविः महान् नाटककर्ता च विराजते।



# चिमनीचरित्रस्य ऐतिहासिकता

*डॉ० प्रभाकरशास्त्री*

भारतीय-वाङ्मये प्रेमाख्यानानां विद्यते स्वतन्त्रमस्तित्वम्। प्रेमाख्यानेष्वपि कवयः संयोगापेक्षया वियोगवर्णने स्वचातुर्यं प्रदर्शयन्ति। यथा पण्डितराजस्य जगन्नाथस्य यवनकन्यया 'लवंगिका' नामिकया सह प्रणयवर्णनं विद्वांसः प्रमाणयन्ति तथैव यवनकन्यायाः 'चिमनी'-त्याख्यायाः राजकुमार्याः प्रणयोपाख्यानमपि प्रमाणीकर्तुमत्र विचारणा क्रियते।

सर्वप्रथमं श्रीनीलकण्ठकविरचितं "चिमनीचरित्राख्यम्" काव्यमिदं ख्रिस्तीय १८९६ ईशाब्दे गवेषितमासीत्, यस्योल्लेखः 'केटेलोगस् केटेलोगोरम्' नाम्नः सूचीपत्रस्य द्वितीये खण्डे समुपलभ्यते। अस्य काव्यस्य अनेकाः प्रतयः विभिन्नेषु ग्रन्थागारेषु प्राप्यन्ते। प्रो. श्री एन. ए. गोरे महोदयेन 'जर्नल ऑफ ओरियन्टल स्टडीज' ( Vol. I. No. 1. ) नामके शोधपत्रे, यस्य मुद्रणादिकं स्वाध्यायमण्डल, पारडीतः सञ्जातमासीत्, सर्वतः पूर्वं समालोचनात्मकरूपेण सम्पाद्य प्रकाशितमिदं काव्यं चिमनीचरिताख्यम्। सम्पादितस्यास्य लघुकाव्यस्य प्राक्कथने प्रो. गोरे महोदयेन लिखितम् यत् श्री पी. के. गोडे महोदयेन १९२८ ख्रिस्ताब्दे सर्वप्रथमं अस्य परिचयात्मकं विवरणादिकं एनल्स ऑफ भण्डारकर ओरियन्टल रिसर्च इन्स्टीट्यूट ( पूना ) नामिकायाः पत्रिकायाः नवमखण्डस्य ३३१-३३२ पृष्ठांके प्रकाशितम्। तत्र हि तेन ग्रन्थस्य रचनासमयविषये स्वमतं संस्थापितं यत् प्रेमाख्यानमिदं कविनीलकण्ठेन १६५६ ख्रिस्ताब्दे रचितम्, न तु १४१४ ख्रिस्ताब्दे, यथा श्रीपीटरसनमहोदयेन कल्पितमासीत्। प्रो. गोडे महोदयेन द्वितीयं शोधपत्रं प्रस्तुतं यस्य शीर्षकमासीत्—"Historical Background of the chimani-charitam" अस्मिन् शोधपत्रे सः नासिकनगरस्थशिलालेखानां पर्शियन( पारसीक )प्रमाणानाञ्च संकेतं कृतवान्।

खिस्तीयसप्तदशके-शताब्द्यां विद्यमानानां अलहविरदीखान, मुखलिस, जाफरादीनां ऐतिहासिकदृष्ट्या परिचयादिकं समुपस्थाय संकेतितवान् रचनामहत्त्वम्। अस्मिन् काव्ये एतेषां विषये एवमुपलभ्यते—

चेतोवृन्दान्यल**लहविरदीखान**सीमन्तिनीनाम् (२)
सोऽयं देवा**दलहविरदी खान**नामानमेत्य (३)
यासावासी**दलहविरदी ज्येष्ठ**बन्धोस्तनूजा
भार्यात्वं चा**प्यलहविरदी** ज्येष्ठसूनोरयासीत्। (५१)
मुक्तागर्भा निजगृहमगादालया**ज्जाफरी**यात्। (६६)
कृत्वा सार्द्धं**मुखलिसभुवा** मानिकेति प्रतिज्ञाम् (६६)
आलापो यो **मुखलिसभुवा** सार्धमासीत्तमेनम्। (७०) इत्यादि।

श्री पी० के० गोडे महोदयाः काव्यस्यास्य नाटकस्य श्रीदयादेवशर्मणः विषये सर्वथा मौनमेवालम्बन्ते। यद्यपि ते नायिकायाः चिमन्या, तस्यापितुः, भर्तुः ज्येष्ठादीनां समुल्लेखनेन अस्य काव्यस्य ऐतिहासिकतां पुष्णन्ति, परं कथानकस्य प्रेमाख्यानस्य वा सत्यता विषये न किमपि कथयति। अस्मिन् पत्रे एतत् सर्वमपि व्याख्यातुकामोऽहम्।

## कथानक-संक्षेपः

अस्य प्रेमास्यानस्य नायिका 'चिमनी' एका यवनमहिला आसीत्, या हि यवनसम्राजः 'शाहजहाँ' इत्यस्य नामकस्य मन्त्रिणः खानखाना अल्लाहवर्दीखानस्य ज्येष्ठभ्रातुः मुखलिशखानस्य पुत्री आसीत्, तस्याः पाणिग्रहणमपि अल्लाहवरदीखानस्य ज्येष्ठपुत्रेण जाफरेण सह सम्पन्नमासीत्। यथा—

यासावासीदलहविरुदी ज्येष्ठबन्धोस्तनूजा
भार्यात्वं चाप्यलहविरुदी ज्येष्ठसूनोरयासीत्।
याताख्याति जगति चिमनीत्याख्यया या गवाक्षे
दैवादेशात् क्वचिदथ दयादेवमेषा ददर्श॥ ५१॥

काव्यस्य प्रारम्भे कविः नीलकण्ठः नायकस्य वर्णनं एवं प्रस्तौति—

आसीदाशीर्वचनविषयः पश्यतामाननाब्जं
सौन्दर्यान्तःकरणमवनीकौतुकं काव्यतत्त्वम् ।
स्फूर्तेर्मूर्तिर्मदनमहिमा भारतीभागधेयं
क्रीडास्थानं रसिकमनसां श्रीदयादेवशर्मा ॥१॥

श्रीदयादेवशर्मा दैवाद् अलहविरुदीखानस्य सविधे गच्छति । स हि तं शर्माणं स्वान्तःपुरयुवतीनां प्राध्यापकत्वेन नियुङ्क्ते । "घृतकुम्भसमानारी तप्तांगारसमः पुमान् । तस्माद् घृतञ्च वह्निञ्च नैकत्र स्थापयेद् बुधः" वचनमिमं स्मारं स्मारं तेन तासां पठनसमये "नीश"नाम (अनीश इति वा) एकः क्लीबः नियुक्त।[1] परं तस्य नियुक्तिः निष्फलैव संजाता, यतोहि स तासां प्रणयचेष्टासु अंगस्पर्शनादिमुखविलोकनादिक्रियासु सर्वथा 'अनीश' एव सिद्धः।[2]मानिकाद्याः नताङ्ग्यः स्वप्राध्यापकस्य श्रीदयादेवशर्मणः सौन्दर्येण अत्यधिकरूपेण आकृष्टा बभूवुः, यत् ताः तस्य क्षणवियोगमपि सोढुमशक्ताः बभूवुः । षोडशसंख्यातः प्रारभ्य पञ्चाशत् पद्यपर्यन्तं कविना नीलकण्ठेन यवनकुमारीणां वियोगवर्णनमधिकृत्य वैविध्यं चित्रितमस्ति । यथा—

दातुं वीटीं पुर इव कृतो यावदेवाग्रहस्तः
तावत् पश्चादहह विरहाशंकयाकृष्यते स्म ।
हा धिग्यातेऽप्यहनि गुरुणा प्रार्थ्यमाने विदाये
तन्व्या वीटीवितरणविधिर्नाध्यगच्छत् समाप्तिम् ॥ २० ॥

कविसमयमनुसृत्य श्री नीलकण्ठेन चन्द्रोपालम्भनादिवर्णनमपि प्रस्तुतम् । चन्द्रं निर्दिश्य कापि यवनी कथयति वियोगातुरा—

---

१. अभास्यैवं यवनपतिना 'नीश' नामा नियुक्तः
क्लीबस्तासां पठनसमये पार्श्वे आसां बभूव (श्लो. ६)

२. पाणिस्पर्शो लिखनसमये तेन किं वारणीयो
वर्णोच्चारे वदनकमलालोकनं किं निवार्यम् ।
किं वा काव्यादभिमतविधेर्बोधनं शोधनीयं
कृत्ये नीशः समजनि निजे सर्वतोऽनीश एव ॥ (७)

केनापीन्दोर्हृदयमदयं हन्त निष्कृष्य नीतं
तस्मादेव स्फुरति गगनं मध्यभागेऽस्य रिक्ते।
यच्चैतस्मिन् हृदयरहिते नास्ति कारुण्यमीषत्
तेनैवेन्दुर्व्यथयतितरां मादृशीः क्रूरकर्मा ॥३०॥

एवं तासां विप्रलम्भदशादिकं वर्णयन् कविः एकपञ्चाशत्तमे पद्ये नायिकां चिमनीं प्रस्तौति, यथा नायको दयादेवशर्मा दैवाद्दृष्टः[1]। नायकस्य प्रावारकं नीशस्य सविधे दृष्ट्वा सा नायिका तमाहृत्य शान्तिं प्राप,[2] तस्य परिचयञ्च पृष्टवती। नीशः कथयति—

योसावन्तःपुरमृगदृशां पाठनस्याधिकारे
विप्रो विप्राधिपमुखि! दयादेव नामा नियुक्तः।
प्रावारेऽस्मिन् परिमलभरस्तत्परिष्वङ्गत्यालब्धो
लब्धव्यो वा भुवि परिमलस्तादृशोऽन्यत्र कुत्र ॥ ५६ ॥

नायिकायाः चिमन्याः दयादेवशर्माणं प्रति अनुरक्तिं वीक्ष्य मानिकाद्याः यवनकुमार्यः नीशश्च प्रेमकर्मणि सहयोगं कृतवन्तः। मानिका नायिकातः वीटिकामुपगृह्य[3] नायकाय दयादेवशर्मणे दत्त्वा तमुवाच—

वीटी वक्त्रं सदसि भवतश्चुम्बितुं नैव योग्या
यस्मादेषा वयमिव चमत्कारमन्तर्बिभर्ति।
प्रत्यक्षन्ते विरहजनितां पाण्डुतामुज्झतीयं
तेनैव त्वत्करतलपरिष्वङ्गमासाद्य सद्यः ॥ ६७ ॥

---

१. याता ख्यातिं जगति चिमनीत्याख्यया या गवाक्षे
दैवादेशात् क्वचिदथ दयादेवमेष ददर्श। (५१)

२. यः प्रावारः क्षितिसुरवर-प्रावृतोऽदृष्टपूर्वा
नीशेनांसोपरि विनिहितं तं निरीक्ष्यायताक्षी।
आदाय स्वे वपुषि विरहोषर्बुधं प्रावृतेन
प्रावारेण प्रशममनयत् पश्यताहो विचित्रम् ॥ (५४)

३. आलापो यो मुखलिसभुवा सार्द्धमासीत्तमेनं
प्राप्यैकान्ते कविमकथयत् साध्यमुक्तार्पणान्तम्।

यदा गृहमुपगतेन नायकेन वीटिका उत्कील्य दृष्टा, तदा तेन चतस्रः मुक्ताः प्राप्ताः[1]। नायकेन स्वकण्ठदेशादवतार्य रुद्राक्षमाला प्रत्यर्पिता—

गन्धद्रव्याद्यवनविषयेष्वम्बरेति प्रसिद्धाद्
दिग्धैरक्षैः समुपरचितां मालिकां कण्ठदेशात्।
उत्तार्योधादधिकरतलं मानिकायाः स विप्रः
क्षिप्रं सापि प्रियसहचरीपाणिमेनामनैषीत् ॥ ७१ ॥

एवम् अर्पण-प्रत्यर्पणकर्मणा तयोः सम्मेलनमत्यावश्यकमिति मत्वा नीशेन सारिकाखेलनाय स्वगृहमाहूतो नायको दयादेवशर्मा। वार्तालापप्रसंगेन च चिमन्याः उदन्तं प्रस्तुतीकृत्य तयोः सङ्गममपि तत्रैव कारयामास। यथैव नायिका तत्राजगाम तथैव नायकः तस्मात् स्थानात् पलायितुं प्रायतत परं साफल्यं न प्राप्तवान्। कविः वर्णयति—

हस्तेनास्य द्रुतमथकटीबन्धनं संदधाना
निर्गच्छन्तं बहिरिति महीलेखमेषा बभाषे।
हिन्दूकाद्य व्रजसि हृदयं कुत्र मे चोरयित्वा
लब्धाऽसि त्वं कथमपि मया मृग्यमाणश्चिरेण ॥ ८६ ॥

एवं तयोः विस्तृतं संलपनमुपवर्ण्य कविः प्रेम्णः चरमावधिं प्रकटयामास निम्नाङ्कितैः पद्यैः—

रसावेशोऽध्वर्युर्विलसितगणः सभ्यनिवहो
युवा यज्वा यस्मिन्नपि च शमिता शम्बररिपुः।
त्रपामेथे तस्मिन् कुतुकमिदमालोकि निखिलो
निखातोऽन्तःकुण्डं यदभजत यूपः फलपदम् ॥ ९९ ॥

इति निधुवनक्रीडामेतौ परस्परमादृतौ
निशि-निशि तथा कुर्वातेस्म स्मरेण सुशिक्षितौ
पुनरपि यथा दुष्प्रापेयं भवेन्न भवेद्यथा
न कृतमिदमित्यन्तस्तापौ दिवा विरहे सति ॥१००॥

---

१. 'उत्कील्य स्वं गृहमुपगतो वीटिकां तामपश्यत्।
ताराकाराः क्षितिसुरपतिस्तत्र मुक्ताश्चतस्रः ॥६९-७०॥

अनुनिशमवशिष्टं कर्तुमासीन्न किञ्चित्
किमपि न कृतमेवं प्रत्यभात् तु प्रभाते ।
यवनपतितनूजे प्रोषिते भाग्यभाजो-
रिति विविधविलासैर्वासराणि व्यतीयुः ।। १०१ ।।

एवमुक्त्वा कविः मौनावलम्बनं चकार । परतः किमभूत् नायकस्य, नायिकायाश्च कीदृशी स्थितिः संजातेति न किमपि प्रकटीचकार । अत्र विषये किञ्चिद् वक्तुकामोऽहं ग्रन्थान्तरतः प्रमाणमुपस्थापयामि ।

रायबहादुरोपाधिधारिणा श्रीगौरीशंकर हीराचन्द ओझामहाभागेन राजपूतानाप्रान्तस्य स्वलिखिते इतिहासे (चतुर्थभागे द्वितीयखण्डे-जोधपुर-राज्यस्येतिहासस्य द्वितीये खण्डे) महाराज्ञो भीमसिंहस्य वर्णनं कृतमस्ति । महाराज्ञो विजयसिंहस्य पुत्रः महाराजा भीमसिंहः १६ जुलाई सन् १७६६ खिस्ताब्दे जनिं लेभे । दिनांक २० जुलाई १७६३ वर्षे स जोधपुरनगरे सिंहासनमधिरुढः । १६ अक्टूबर १८०३ खिष्ट्राब्दे ३७ वर्षवयसि एव दिवंगतः ।

अस्यैव महाराज्ञो भीमसिंहस्य यशोवर्णनात्मकं "भीमप्रबन्धाख्यं" काव्यमेकं प्राप्यते, यस्य लेखको भट्टोपाह्वो हरिवंशशर्मा आसीत् । सोऽयं जात्या श्रीमालीब्राह्मणः भट्टलालस्य पुत्रः, पौराणिकशिवभट्टस्य च पौत्रः आसीत् । स्वयं कविना भीमप्रबन्धस्य विंशसर्गे स्वपरिचयमेवं समुपस्थितम्—

पौराणिकोऽजीतनराधिपस्य भट्टः शिवस्तस्य सुतो हि लालः ।
तदात्मजोऽहं हरिवंशभट्टो नृपाज्ञया काव्यमिदं चकार ।।
(२०।११०)

इति श्रीभीमप्रबन्धे महाकाव्ये श्रीमालिब्राह्मणकुलजातभट्टहरिवंशकृतौ दुर्गादिवर्णनो नामकः विंशतितमः सर्गः । समाप्तश्चायं ग्रन्थः ।

अस्मिन् काव्ये भीमसिंहस्य पूर्ववर्तिनां राज्ञां वर्णनं तु विशेषरूपेण नोपलभ्यते, यत् प्राप्यते तस्य सर्गानुसारिवर्णनमत्र प्रस्तूयते । यथा—

"इति श्री···कृतौ वंशवर्णने राज्यलाभः (१), भ्रातृवर्गसंबन्धिवर्गवर्णनम् (२), विवाहवर्णनम् (३), वसन्तवर्णनम् (४), अमात्यादिराजप्रकृतिवर्णनम् (५), राजिकोद्याने वसन्तक्रीडावर्णनम् (६), बालसिंधूद्याने वसन्तक्रीडावर्णनम् (७), सूरसागरोद्याने वसन्तक्रीडावर्णनम् (८), मंडोवरोद्याने वसन्तक्रीडावर्णनम् (९), मंडोवरपंचकुण्डवैजनाथमंडलेश्वरभोगशैलनागनदीवर्णनम्, (१०), नागनदीयात्रावर्णनम् (११), मुक्ताफलहर्म्ये लक्ष्मीगृहे वसन्तक्रीडावर्णनम् (१२), वसन्तक्रीडावर्णने जातकोत्सववर्णनम् (१३), गौरीयात्रावर्णनम् (१४)·विज्ञप्तिप्रस्ताववर्णनम् (१५), मृगयाविहारः (१६), सकलसामन्तवर्णनम् (१७), मन्त्रिवर्गवर्णनम् (१८), कोष्ठरक्षकारिवर्णनम् (१९), अधिकारादिवर्णनम्, सकलहर्म्यवर्णनम, दुर्गादिवर्णनम् (२०)"

अस्यैव काव्यस्य अष्टादशसर्गे चिमनीचरित्रस्य नायकस्य श्रीदयादेवशर्मणः वर्णनमुपलभ्यते, येन काव्यस्यास्य ऐतिहासिकता सिद्धयति। यथा—

अलोहवृद्धेः[1] हि सुतं महान्तं
या ज्येष्ठबन्धोः दुहिता च तस्य।
उद्वाहिता सा चिमनी गवाक्षे
दैवात् दयादेवमपश्यदेषा ॥ ९४ ॥

---

१. [ "अलोहवृद्धेः" इति अल्लाहवर्दीखानस्य, ज्येष्ठबन्धोः मुखलिश खानस्य, दुहिता चिमनी, या तस्य महान्तं सुतमिति जाफरम् उद्वाहिता सैव चिमनी दैवात् कदाचिद् गवाक्षे स्थिता दयादेवशर्माणमपश्यत्। चिमनीचरित्रस्य पद्य सं. ५१तः साम्यं समवलोकनीयम्—

यासावासीदलहविरदी ज्येष्ठबन्धोस्तनूजा
भार्यात्वं चाप्यलहविरदी ज्येष्ठसूनोरयासीत्।
याता ख्यातिं जगति चिमनीत्याख्यया या गवाक्षे
दैवादेशात् क्वचिदथ दयादेवमेषा ददर्श ॥ ५१ ॥ इति ]

विप्रो दयादेव हि काममूर्त्तिः
भाषासु काव्येषु बुधाग्रणी च ।
तं खाननामानमुपेत्य वृत्ति-
मन्तःपुरे स्त्रीपठने चकार[1] ॥ ६५ ॥

स पाठयन् वै चिमनीपुरोगाः मुमोह विप्र स्मरबाणभिन्नः । क्लीबोऽपि तासां पठने नियुक्तः, तथापि ताः प्रेमवशाः बभूवुः[2] ॥ ६६ ॥

सा मोहिता वै चिमनी द्विजाय[3]
ददौ हि मुक्ताः गुरवे चतस्रः ।[4]
विज्ञाय म्लेच्छाधिपतिश्चरित्रम्
सभ्रातरं भित्तिममुं निनाय ॥ ६७ ॥

---

१. चिमनी चरित्रस्योद्धरणैः साम्यमवलोकनीयम्—
स्फूर्तेर्मूर्तिर्मदनमहिमा भारतीभागधेयं ।
क्रीडास्थानं रसिकमनसां श्रीदयादेवशर्मा ॥ १ ॥
सोऽयं दैवादलहविरदीखाननामानमेत्य ।
म्लेच्छाधीशं प्रकटितगुणः स्वीचकारश्च वृत्तिम् ।
तात्राप्येष स्मरसहचरे वर्त्तमानो वयस्य-
प्युद्युक्तोऽन्तःपुरमृगदृशां पाठनस्याधिकारे ॥ ३ ॥

२. तादृक् तासां रहसि मिलनं तादृशी रूपसंपत् ।
तादृग्वेषो विलसितमहो यौवनस्यापि तादृक् ॥ ५ ॥
आभाष्यैवं यवनपतीना नीशनामा नियुक्ताः
क्लीबस्तासां पठनसमये .पार्श्व आसां बभूव ॥ ६ ॥
कृत्ये नीशः समजनि निजे सर्वतोः नीश एव ॥ ७ ॥
ताभिस्तेनाप्यसति मिलनेऽनेकयामा त्रियामा ।
कोकद्वन्द्वैरिव न कथमप्यन्तमानीयते स्म ॥ १७ ॥

३. चेतश्चेतो भवपरिभवं देहदीप्त्या दधाने
तस्मिन् विस्मापित दृशि समाधाय तस्मादवाप ।
द्वेषं पत्यौ, विषमविशिखेऽधीनतां, पीनतां च
श्वासोल्लासे वपुषि कृशतां पाण्डुतामानने सा ॥ ५३ ॥

४. उत्कील्य स्वं गहमुपगतो वीटिकां तामपश्यत् ।
ताराकाराः क्षितिसुरपतिस्तत्र मुक्ताः चतस्रः ॥ ६९ ॥ इत्यादि ।

योो माधवो वै जनकस्तदीयः
पितृव्यपुत्रस्य सुतस्य वार्त्ताम् ।
श्रुत्वा समादाय स मौक्तिकानि
स्वदेशमागत्य तुलाञ्चकार ॥ ६८ ॥

यः शाहिजानस्य बभूव धीमान्
नलेहवृद्धिस्त्वथ खाननामा ।
मन्त्री च साहित्यरसाभिविज्ञो
महावदान्यो विदुषां गुणज्ञः ॥ ६९ ॥ इत्यादि ।

एभिः श्लोकोद्धरणैः प्रतीयते—यत् पं० दयादेवशर्मणः चिमन्याश्च प्रणयसम्बन्धिनीं वार्तां श्रुत्वा सर्वतश्च परिज्ञाय म्लेच्छाधिपतिः पातसाहः शाहजहाँ तं नायकं दयादेवशर्माणं तस्य च पितृव्यपुत्रं भ्रातरं जीवितमेव भित्तौ निनाय । तस्येदृशीं विपत्तिमवलोक्य दयादेवशर्मणः पिता श्रीमाधवभट्टः ताः चतस्रः मुक्ताः समादाय स्वदेशं जोधपुरनगरं प्रति समाजगाम । तत्र च तुलाञ्चकार ।

पं० दयादेवशर्मणः वंशजेन स्वर्गतेन श्रीबदरीशर्मभट्टेन वार्ताप्रसंगे म्लेच्छाधिराजतनयायाः चिमन्याश्चरित्रविषये विस्तरेण निवेदितं हस्तलिखितप्रतिश्चैका प्रदर्शिता । स मां तत्स्थानमपि प्रदर्शितवान् यत्र अद्यापि माधवेश्वरनामकं शिवालयं विद्यते । उच्यते या पं० दयादेवशर्मणः पिता श्रीमाधवभट्टः स्वपुत्रस्य अपमृत्युदोषनिवारणार्थं ताश्चतस्रः मुक्ताः विक्रीय ताभ्यः संप्राप्तेन द्रव्येण महारुद्रयागं तुलादानविधिं च सम्पादितवान् । तुलायागस्य महारुद्रयागस्य च कुट्टिमस्थानमद्यापि भट्टानां वासे ब्रह्मपुर्यां ( भट्टों का वास, ब्रह्मपुरी ) विद्यते । अस्य कुट्टिमस्य ( चबूतरा ) पार्श्वे एव श्रीमाधवभट्टस्य निवासस्थली वर्तते । साम्प्रतं तस्य वशे न कोऽपि विद्यते । एतेषां वंशे सर्वान्तिमौ पुरुषौ भट्टश्रीज्येष्ठमलभट्टवनजीमहाशयावास्ताम् ययोः द्वे कन्ये पं० बदरीशर्मभट्टमहाशयस्य पितामहेन

श्रीपरशुरामेण तस्य भ्रात्रा श्रीद्वारेश्वरजोशिना च उद्वाहिते। तयोः कन्ययोः वंशप्रवर्तनाय श्रीद्वारकादत्तभट्टमहाशयः दत्तकपुत्ररूपेण विद्यते यो हि महाशयः पं० बदरीशर्मभट्टस्य भागिनेयः मम पितृ-चरणानाञ्च शिष्यरूपेण शास्त्रिपरीक्षामुत्तीर्णवान् बहोः कालपूर्वम् ई० १९४६ तमे वर्षे।

श्रीद्वारिकादत्तभट्टमहाशयेन पुरातनीमैतिहासिकीं सामग्रीमालोड्य विगते वर्षे मह्यं प्रेषितवान् किमपि सारजातं पं० माधवभट्टस्य पं० दया-देवशर्मणश्च वंशादिविषये। "भीमप्रबन्ध" महाकाव्यस्य लेखकः श्रीहरिवंशशर्मापि श्रीमाधवभट्टवत् राज्ञा संमानितः आसीत्। भट्टोपाधिश्च राज्ञा दत्तः उपाधिः। पं० दयादेवशर्मणः समकालिकत्वात् सोऽयं श्रीहरिवंशः चिमन्या उदन्तेन सुपरिचित आसीत्। भीमप्रबन्धस्य अष्टादशसर्गसमाप्तौ तेन अल्लाहवर्दीखानस्य वर्णनमेवं प्रस्तुतम्—

"योसावासीदलहविरदीखाननामा पुरासीत्
मन्त्री श्रीमान् गुणिजनरतः पुण्यकर्मा वदान्यः।
नीतौ सक्थः शमदमरतः शाहिजानस्य यादृक्
नाभूद् विश्वे प्रकटितगुणस्त्वीदृशश्चैव धीमान्॥ १७१॥

इति भीमप्रबन्धमहाकाव्ये भट्टश्रीहरिवंशकृतौ अधिकारिवर्णनो नाम अष्टादशसर्गः।"

पं० माधवभट्टस्य समये वैकमाब्दे १६५२ वर्षे जोधपुरनगरे श्रीसूरसिंह नामकः राजा आसीत्। तस्य पुत्र-नाम श्रीगजसिंहः प्रथमः आसीत् यस्य वर्णनं श्रीहरिवंशभट्टेन भीमप्रबन्धकाव्ये कृतमस्ति। श्रीगजसिंहप्रथमस्य श्रीजसवन्तसिंहः, तस्य श्रीअजितसिंहस्य श्रीअभयसिंहः तस्य श्रीरामसिंहः श्रीरामसिंहस्य श्रीबखतसिंहः, तस्य श्रीविजयसिंहः, विजयसिंहस्य च उत्तराधिकारी श्रीभीमसिंहः आसीत। अस्य वंशवृक्षः एवं प्रस्तोतुं शक्यते—




श्रीसूरसिंहस्य शासनकाले सं. १६५२ वर्षे श्रीदयादेवशर्मणः स्थितिरासीत् श्रीनीलकण्ठकविना "चिमनीचरित्रस्य" प्रणयनं सं. १७१२ वर्षे कृतमिति निम्नांकितेन पद्येन सिद्धयति—

> मिहिरमुनीन्दुमितेऽब्देऽतिक्रान्ते विक्रमादित्यात्।
> शिवरात्रौ शिवपदयोर्निजकृतिराधायि नीलकण्ठेन ॥

"अङ्कानां वामतोगतिः" नियमानुसारेण मिहिरः = १२, मुनिः = ७, इन्दुः=१=१७१२ वैक्रमाब्दे शिवरात्रौ कविनीलकण्ठेन चिमनीचरितात्मकं काव्यमिदं शिवपदयोराधायि। श्रूयते, शुक्लजनार्दनपुत्रेण श्रीवत्साचार्यस्य दौहित्रेण श्रीनीलकण्ठेन चिमनीचरित्रस्य निर्माणमपि माधवेश्वर-महादेवमन्दिरे जोधपुरनगरे कृतमासीत।

एवं सिद्धयति यत् चिमनीचरित्रस्य नायकः पं० दयादेवशर्मा नायिका च 'चिमनी' कल्पितपात्ररूपेण न ग्रहणीयौ। घटना चेयं सत्या प्रामाणिकी च मन्तव्या विद्वद्भिरिति विस्तरेणालम्।



## प्रादिप्रासादः

*आजादमिश्रः*

"चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च" इति शब्दप्रकार-प्रदर्शयितृयास्कादिमुनीनां मते चत्वारो भेदा शब्दस्य। तत्र नाम संज्ञा-शब्दः, आख्यातं क्रियापदम्, उपसर्गः द्वाविंशतिः प्रादयः, चादि—प्रादि-गणपठिताः सपादशताधिकसंख्यया दीक्षितेनोक्ताः शब्दाश्च निपाताः। महर्षियास्केन निपातोपसर्गयोः भेदमापाद्य निपातपदेन सर्वाणि अव्ययानि बोधितानि, परं पाणिनिना निपातान्तर्गतप्रादीनामेव यथास्थिति उपसर्गनिपातत्वममानि। पाणिनिरीत्या तु पतञ्जलिना जातिगुणक्रिया-यदृच्छारूपेण शब्दप्रकारचतुष्टयी पस्पशाह्निके भाष्ये प्रोचे। आचार्य-द्वयस्य शब्दभेदे विमतिरियम् लक्ष्यभेदात्। एकस्तु वैदिकशब्दनिर्वचन-मात्रगोचरः, परस्तु वैदिकलौकिकावगाहिव्याकरणविनिर्वर्तकः। प्रादीनामु-उपसर्गत्वे भेदे तु अस्ति एकवाक्यता। अत्र लेखे प्रादयः एव पाणिनीय-रीत्या प्रस्तुता भविष्यन्ति।

शब्दनिर्माणेऽपरविधातारः एते प्रादयः द्वाविंशतिः सन्ति। यथा—प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् (आ) नि अधि अपि सु उत अभि प्रति परि उप इति। व्याकरणे षत्वणत्वस्वरा-द्यनेकफलकतया एषां संज्ञाचतुष्टयं समस्ति। ताश्च—उपसर्गसंज्ञा, गतिसंज्ञा, निपातसंज्ञा, कर्मप्रवचनीयसंज्ञा च। स्वरूपविस्तरस्त्वासां क्रमशोऽभिधीयते।

### १. उपसर्गसंज्ञा

"उपसर्गाः क्रियायोगे" इति—पाणिनीयसूत्रम्। क्रियया सह सम्बन्धे सति प्रादय उपसर्गनामानो भवन्तीति अस्यार्थः। जगति खलु परिदृश्य-माना वाक्यैः अवगम्यमाना व्यापारस्वरूपा भावभावनोत्पादनाख्या क्रिया एकोऽर्थोऽस्ति। अस्या वाचकः शब्दश्च धातुरेव, धातोश्च योऽर्थः

फलव्यापारात्मकः, तस्मिन् प्रादीनामर्थस्य अन्वय एव उपसर्गत्वे बीजम्। योगस्तु अर्थयोरेव भवति, न तु शब्दयोः। एवञ्च प्राद्यर्थ-धात्वर्थयोः मिथो विशेष्यविशेषणभावाख्यसम्बन्धे सत्येव प्रादीनामुपसर्ग-संज्ञा भवति। अन्यथा कर्त्रादिकारकान्तरे विशेषणताङ्गतः प्रादिः जहाति उपसर्गताम्। यथा—विगताः सेचका अस्मादिति विसेचको ग्रामः, अनुगताः सोतारोऽस्मिन् इति अनुसोतृकं कुलमित्यादौ वि-अनु-प्रभृति प्रादीनामर्थस्य सेकादिक्रियायामनन्वयेन प्रत्युतसेचनकर्त्तरि सम्बन्धसत्वात् उपसर्गत्वं पलायितम्। अत एवात्र "उपसर्गात्सुनोति" इत्यादिना सूत्रेण—षत्वं न। क्रियायामन्वये तु विषेचक, अनुषो-तृकमितीष्टमेव। तिङन्तक्रियापदेन भावार्थकक्रृदन्तपदेन च साकं प्रादयः सम्बद्धाः सन्तः उपसर्गाः सन्ति। अस्याः संज्ञायाः फलम-ष्टाचत्वारिंशत् सूत्रेषु उक्तम् पाणिनिना। धात्वर्थफले व्यापारे वा प्राद्यर्थस्य अन्वयः उपसर्ग प्रयोजकः इति ध्येयम्।

एतेषु प्रादिषु "दुर्" इत्यस्य क्रियायुक्तत्वेऽपि षत्वे णत्वे कर्त्तव्ये उपसर्गत्वं विहन्यते। "अन्तर्" इत्यव्ययस्य प्रादित्वाभावेऽपि अङ् कि प्रत्यये णत्वे च कर्तव्ये उपसर्गत्वं वाच्यम्। अत एव अन्तर्धा, अन्तर्धिः, अन्तर्भवाणि इत्यादौ तत्-तत् विधिः सिद्ध्यति, अन्यथा "आतश्चोपसर्गे" इति आदन्तधातोः उपसर्गनिमित्तकोऽङ् प्रत्ययः, डुदाञ् दाने, दाण् दाने, दो अवखण्डने, देङ् रक्षणे, डुधाञ् धारण-पोषणयोः, धेट् पाने इति धातुभ्यः "उपसर्गे घोः किः" इत्यादिना भावी उपसर्गहेतुकः कि प्रत्ययः "आनि लोट्" इत्यादिना णत्वविधिश्च दुर्लभः स्यात्। एवमेव दुःस्थिति, दुःस्थः, दुर्भवानि इत्यादौ उपसर्ग-निमित्तकस्य षत्वस्य णत्वस्य च प्रतिषेधार्थं दुर् इत्यस्य प्रादित्वेऽपि उसर्गत्वं न भवति।

निरुक्तिश्च उपसर्गपदस्य कर्मकरणसाधनद्वयेन अपि भवितुमर्हति। तद्यथा—उपसृज्यते आधिक्येन अधिकार्थप्रतिपादिकत्वेन वा उप-दिश्यते यः प्रादिविशेषः शब्दः स उपसर्गः। आधिक्यं च नामाख्याताभ्यां व्यतिरिक्तत्वम्। अस्यां कर्मव्युत्पत्तौ उपोपसर्गकविसर्गार्थकतौदादिक-सृज्धातोः "अकर्तरि च कारके संज्ञायाम्" इत्यादिना घञि सति

साधुः । उपसृज्यते सामीप्येन नामाख्याताभ्यां सह सामीप्यसम्बन्धेन उत्पाद्यतेऽर्थोऽनेन इति करणसाधनेऽपि उक्तसूत्रेणैव घञा परिनिष्ठितः । वैयाकरणनये "स भूरिति व्याहरत्, स भूमिमसृजत्" इत्यादिश्रुतिप्रामाण्यात् शब्दपूर्वो जगद्रूपार्थोत्पादः इति करणनिर्वचनसङ्गतिः । उपसर्गपदस्य संज्ञार्थकप्रत्ययेन निष्पन्नत्वात् प्रादीनामिदं संज्ञा इत्युचितमेव । इत्थञ्च प्रादिषु योगरूढमिदं पदमिति वेदितव्यम् ।

## २. गतिसंज्ञा

यस्यां परिस्थितौ प्रादीनामुपसर्गसंज्ञा भवति तत्रैव गतिसंज्ञापि, तत्र सूत्रम् पाणिनेः "गतिश्च" इति । प्रादीनामर्थस्य फलव्यापाररूपक्रियार्थेन योगेऽन्वये सति गतिसंज्ञाऽपि स्यादित्यर्थः । या या संज्ञा सा सा फलवतीतिसिद्धान्तात् 'गतिरनन्तरः', 'गतिर्गतौ'. "कुगतिप्रादय" इत्यादि नैकानि सूत्राणि अस्याः प्रयोजनानि । तथाहि प्रभावः, विहसनम्, निर्याणम्, पराजयः इत्यादौ प्र, वि, नि, परा प्रादीनां गतित्वादेव "कुगतिप्रादयः" इत्यनेन सूत्रेण भावेत्यादिना सह समासः साधुः । कृतेऽकृते वा समासेऽत्र न किमपि फलमिति तु कुवाच्यमेव, स्वरस्यैव फलत्वात् । सति समासे अन्तोदात्तस्वरः, तदभावे आद्युदात्तः स्वरः इति फलभेदः इति भावः । किञ्च एषां गतित्वाभावे "व्याघ्री" इति न सिद्ध्येत् । तथाहि विशेषेण आसमन्तात् जिघ्रतीत्यर्थे वि-आ-घ्रा इति स्थितौ "आतश्चोपसर्गे" इति क प्रत्यये "आतो लोप इति च" इति सूत्रेण रकारादाकारस्य लोपे वि-आ-घ्र इति दशायाम् आङो वेश्च गतित्वादेव विभक्त्युत्पत्तेः प्रागेव "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः "इति नियमेन आ + घ्र" इत्यत्र गतिसमासे पुनः वि + आघ्र इत्यत्र गतिसमासे च सति "व्याघ्र" इत्यस्य जातिवाचकत्वात् "जातेरस्त्री विषयादयोपधात्" इति सूत्रेण ङीषि अल्लोपे स्वादिकार्ये 'व्याघ्रीति" रूपं सिद्ध्यति । यदि च प्रादीनां गतिसंज्ञा न स्यात् तदा "गतिकारकोपपदानाम्" इति नियमस्य प्रवृत्त्यभावेन सुबुत्पत्तेः समासनियमात् विभक्त्युत्पत्तेश्च प्राक् लिङ्गबोधकप्रत्ययस्य आवश्यकत्वेन पूर्वं टापि ततः समासे अदन्तत्वाभावेन ङीषोऽप्राप्तेः "व्याघ्रा" इत्यनिष्टरूपमापद्येत । एवञ्च जातिवाचकशब्देष्वपि प्रादीनां धात्वर्थेऽन्वये

सति गतिसंज्ञा भवत्येव, समासश्च तन्निमित्तक एव। अस्याः फलम् स्वरादि-विधौ अधिकेन वर्तते।

## ३. निपातसंज्ञा

निपातान् लक्षयितुं यास्केनोक्तम्—"उच्चावचेषु अर्थेषु निपतन्ति इति निपाताः"। अनेकार्थबोधकाः निपाताः इति भावः। प्रादीनामपि सन्ति अनेकेऽर्थाः सर्वेषाम्, परमेकस्मिन् नाम्नि आख्याते वा संयुक्ताः सन्तः समानार्थकाः न भवन्ति। यथा "आङ्" कथमपि "परा" इत्यस्य अर्थं प्रकाशयितुं न प्रभवति, अन्यथा सम्मानापमानयोः उपकारापकारयोः विजयपराजययोः विहारसंहारयोः भेदो विलङ्घच्छेत्। यद्यपि यास्केन प्रादीनां निपातत्वमनङ्गीकृतं तथापि एषामनेकार्थत्वात् पाणिनिना "प्रादयः" इति सूत्रम् संदृब्धम्। अस्यार्थः लिङ्गसंख्याकारकानन्वितस्यार्थस्य वाचकाः प्रादयः निपातसंज्ञकास्स्युरिति। एकमपरमपि सूत्रम् निपातसंज्ञकमष्टाध्यायां "चादयोऽसत्त्वे" इति चादिगणपठिताः प्रायः नवतिसंख्याकाः शब्दा अपि अद्रव्यार्थाः सन्तः निपातास्सन्ति।। द्रव्यवाचकत्वे तु निपातसंज्ञा न भवति। यथा "पशु" शब्दः चादिगणपठितः यदा चतुष्पादजातेर्वाचकः तदा लिङ्गसङ्ख्याकारकान्वितद्रव्यस्य वाचकत्वात् न निपातसंज्ञकः। यदा तु असत्वस्यार्थस्य वाचकः यथा—लोध्रं नयन्ति पशुमन्यमानाः इत्यादौ सम्यगर्थः पशुशब्दः तदा अद्रव्यार्थकत्वात् निपातसंज्ञा भवति।

इदं ध्येयं यत्—यत्र प्रादीनां क्रियया सह सम्बन्धः तत्र एषामुपसर्गगतिसंज्ञे भवतः, यत्र तु प्रातिपदिकेन कारकेण वा सह योगः तत्र निपातसंज्ञा। किञ्च गत्युपसर्गसंज्ञास्थलेऽपि अद्रव्यार्थकत्वेन निपातत्त्वमक्षतमेव, अन्यत्रापि निधिः, सुधीः, अधिहरिः, अतिमालः, अधिसेचकमित्यादौ प्रादीनामद्रव्यार्थकत्वेन क्रियान्वयाभावेऽपि निपातत्वञ्चकास्ति, किन्तु उपसर्गत्वाभावात् अधिसेचकमित्यादौ षत्वन्न। प्रणेयः, प्रणयः इत्यादौ तु गत्युपसर्गनिपातसंज्ञात्रयं वर्तते तेन उपसर्गत्वात् णत्वम्, गतित्वात् सुबुत्पत्तेः प्राक् समासः, निपातत्वाच्च प्रादेःप दत्वञ्च सिद्धं, 'निपातस्यानर्थकस्य' इति वचनात्। प्रकृष्टोऽधिकारी प्राधिकारी,

कृष्णस्य समीपमुपकृष्णमित्यादौ अव्ययीभावादिस्थले क्रियायोगाभावात् गत्युपसर्गसंज्ञे न स्तः। प्रपतितं पर्णं यस्मात् इति प्रपर्णः, मालामतिक्रान्तः अतिमालः इत्यादौ—तत्पुरुषबहुव्रीहिप्रादिसमासे उपसर्गस्य प्रकृष्टत्वातिक्रान्तत्वादि—अद्रव्यार्थकमात्रत्वे तु एषां निपातत्वं स्वीकार्यम्, तत्र-द्रव्यार्थस्य च अध्याहृतधातुजपदेन बोधः भावनीयः, अन्यथा उपसर्गस्यैव पतितादिरूपद्रव्यबोधकत्वे तु तत्रापि निपातसंज्ञायाः अभाव एव ज्ञेयः।

निपातसंज्ञायाः नैकानि प्रयोजनानि सूत्रैः निर्दिष्टानि यथा—"स देवान् आ इह वक्ष्यति" (ऋ. वे. १।१।२।), "उपत्वाग्ने दिवे-दिवे" (ऋ. वे. १।१।७। ) इत्यादौ निपातत्वादेव "निपाता आद्युदात्ताः" इति सूत्रेण आद्युदात्तत्वं सिद्ध्यति। दीर्घार्थमपि निपातसंज्ञा आवश्यकी। निपातत्वादेव "आ एवं नु मन्यसे", "आ एवं किल तत्" इत्यादौ वृद्ध्यभावः सिद्धः। किञ्च निपातत्वादेव प्रादीनामव्ययत्वं पदत्वञ्च सिद्ध्यतः। एवमेव अन्यान्यपि फलानि मृग्याणि।

## ४. कर्मप्रवचनीयसंज्ञा

कर्म क्रियां प्रोक्तवन्तो ये ते कर्मप्रवचनीयाः इति व्युत्पत्त्या ये प्रादयः भूतकाले क्रियां द्योतितवन्तः सम्प्रति सम्बन्धविशेषमात्रवाचकाः ते कर्मप्रवचनीयसंज्ञकाः कर्मप्रवचनीयशब्दघटकः कर्मशब्दः क्रियायाः, भूतकालिक "अनीयर" प्रत्ययेन निष्पन्नः प्रवचनीयशब्दश्च कर्त्रर्थस्य वाचकः अस्ति। तेन उपसर्गावस्थायां प्रादयः क्रियां द्योतित्वा सम्प्रति तां क्रियाम् अप्रगटीकृत्यैव सम्बन्धवैशिष्ट्यमात्रम् प्रकटयन्तः कर्मप्रवचनीयतां भजन्ते। इत्थञ्चान्वर्थेयं संज्ञा। उक्तञ्च भर्तृहरिणा—"क्रियायाः द्योतको नाऽयं सम्बन्धस्य न वाचकः। नापि क्रियापदापेक्षी सम्बन्धस्य तु भेदकः"। इति यथा—"जपमनु प्रावर्षत्" इत्यत्र प्रयुक्तः "अनु" प्रादिः, "अनुभवति", "अभिभवति" इत्यत्र क्रियापदे प्रयुक्तः "अनु", 'अभि" प्रादिरिव अनुभवादिक्रियां न द्योत्यते, न वा षष्ठीविभक्तिरिव सम्बन्धसामान्यं बोधयति, न हि "प्रादेशं विपरिलिखति" इत्यादौ प्रयुक्तः "वि" प्रादिरिव विमायादिक्रियामाक्षिपति, प्रत्युत जपपदानन्तर-द्वितीयाबोध्य-सम्बन्धसामान्यम् "अनु" प्रादिः लक्ष्यलक्षणभावरूपसम्बन्धविशेषे

परिवर्तयति। एवञ्चात्र अनु प्रादिः सम्बन्धं विशिनषन् भेदकः भवति। तेन जपस्य लक्षणत्वं वर्षणस्य च लक्ष्यत्वम् अनुना द्योत्यते। हेतुभूत-जपोपलक्षितवर्षणमिति वाक्यार्थः पर्यवसन्नः।

"जपमनु प्रावर्षत्" इति वाक्ये अनोः कर्मप्रवचनीयतां ज्ञातुं किञ्चिद्-ध्येयम्। इदञ्च वाक्यं जपमनु निशम्य प्रावर्षत् अस्मिन् वाक्यार्थे एत-द्वाक्यस्थानापन्नम्। अस्मिँश्च मूलवाक्ये निशमनक्रियां विशिनषन् अनुः उपसर्गः निशमनानन्तरं वर्षणमभूत् इति वैशिष्ट्यम् बोधयन् प्रकारान्त-रेण जपस्य कारणत्वं वर्षणस्य कार्यत्वञ्चापि बोधयति। यदा च कार्य-कारणभावमात्रविवक्षा तदा निशम्येति क्रियापदं विलोप्य अनुमात्रं प्रयुज्यते। एवञ्च अत्रोदाहरणवाक्ये प्रयुक्तः अनुः भूतकाले निशम्येति क्रियां द्योतितवान् सम्प्रति च लुप्तक्रियामबोधयित्वैव कार्यकारणात्मक-लक्ष्यलक्षणसम्बन्धविशेषं प्रकाशयतीति कर्मप्रवचनीयसंज्ञां भजते।

महर्षिपाणिनिना पञ्चदशसूत्रैः द्वितीयापञ्चमीसप्तम्याद्यर्थम् एकादश-प्रादीनां कर्मप्रवचनीयसंज्ञा समज्ञायि। ते चाऽमी अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि इति। इयञ्च संज्ञा गत्युपसर्ग-संज्ञयोः बाधिका, तेन तन्निमित्तकं षत्वादिकार्यं न भवति। यथा—सुसि-क्तम्, सुस्तुतम् इत्यादौ प्रादेः पूजार्थत्वेन कर्मप्रवचनीयत्वात् अनुपसर्गत्वेन न षत्वम्। अत्रैव चेपेऽर्थे तु स्यादेव षत्वम्, कर्मप्रवचनीयत्वाभावात्। द्वितीयापञ्चमीसप्तमीविभक्तिविधानमपि फलान्तरमस्याः। तथाहि—वर्जने-ऽर्थे अप, परि, इत्यनयोः, सीम्नि अभिविधौ च "आङ्" इत्यस्य, प्रति-निधिविनिमयार्थयोः प्रतीत्यस्य च कर्मप्रवचनीयत्वात् तद्योगे पञ्चमी भवति। अधिकार्थे उपेत्यस्य स्वस्वामिभावेऽधि इत्यस्य च कर्मप्रवचनीय-त्वात् तत्सम्बद्धे पदे सप्तमी विभक्तिर्भवति। यथा—"उपपरार्धे हरेर्गुणाः" "अधिरामे भूः" इत्यादौ। अधिभिन्नावशिष्टानां दशप्रादीनां पञ्चमीसप्तमी-विधाने उक्तादर्थात् अन्यस्मिन्नर्थे कर्मप्रवचनीयसंज्ञायां सत्यां तदन्विते पदे द्वितीया भवति। अधिकार्थप्रकाशनं तु पञ्चदशसूत्राणामध्ययनेन संभवीति वैशद्यात् लेखान्तरविषयत्वेन परिहीयते।

इदं ध्यातव्यम्—यत्र प्रादीनां क्रियया सहसम्बन्धस्तत्र गत्युपसर्ग-निपातसंज्ञाः भवन्ति, यत्र तु नाम्ना सहयोगः तत्र निपातसंज्ञा भवति,

यत्र च सम्बन्धमात्रभेदकः तत्र कर्मप्रवचनीयसंज्ञा। तत्र गत्युपसर्ग निपात-संज्ञासु सतीषु प्रादीनां लौकिकव्याकरणे धातोः नाम्नो वा प्राक् प्रयोग एव, गत्युपसर्गस्थले "ते प्राग्धातोः" इति नियमात्, निपातस्थले समासत्वाच्च। यथा—प्रहारः, आहारः, विकिरति, अधिहरि, इत्यादि। किन्तु अल्पत्वबोधके प्रति प्रादौ कर्मप्रवचनीयसंज्ञकेषु च नाऽयं पूर्वप्रयोग-नियमः, यथा-शाकप्रति, घृतप्रति, वृक्षं वृक्षं प्रति सिञ्चति, अग्निमभि शलभाः पतन्ति इत्यादौ अन्ते मध्ये वा प्रयोगः। वैदिकसंस्कृते तु नाऽयं नियमः तत्र प्रादिमात्राणां गत्यादिसंज्ञकत्वेऽपि व्यवहिताव्यवहितपूर्वे व्यवहिताव्यवहितपश्चात् अपि दृष्टः प्रयोगः। यथा—"यदग्ने नाति रोहति, आपो वहन्तु, सीदन्नधि बाधन्ते विश्वमभि" इति।

एषां प्रादीनां स्वतन्त्रप्रयोगः नोपलभ्यते। प्रातिपदिकेन आख्यातेन वा परतन्त्राः सन्त एव प्रयुज्यन्ते। सर्वदैवार्थिकसम्बन्धेन सम्बद्धा एव भवन्तीत्यर्थं हरिणाप्युक्तम्—

> चादयो न प्रयुज्यन्ते पदत्वेऽपि च केवला।
> ... ..................परतन्त्रास्तु चादयः॥ इति।

"वृक्षं प्रति विद्योतते" इत्यादौ कर्मप्रवचनीये स्वतन्त्रेण रूपेण भासमानेऽपि प्रादौ क्रियापदे इव वा स्वातन्त्र्यं नास्ति। अत्रैव वाक्ये वृक्षं विना प्रतेः प्रयोगाभावात्। परन्तु वैदिकसंस्कृते स्वातन्त्र्येणाऽपि प्रयुक्तास्सन्ति, यथा—"प्रतिभद्राय भद्रम्" ( ऋ. वे. १।११५।२। ) इत्यत्र "प्रति"शब्दं स्वतन्त्रं मत्वा तस्य प्रत्येकमिति अर्थं कृतवान् सायणः। एवमेव "सीदन्नधि बर्हिषि प्रिये" ( १।८५।७। ) इत्यत्रापि 'अधि' शब्दः अधिकरणार्थकः स्वतन्त्रः क्रियया नहि संयोजितः सायणेन।

एते प्रादयः अनेकार्थकाः समानार्थकाः निरर्थकाश्चापि भवन्ति। समानार्थकाः सन्तोऽपि प्रायः एकत्र पदे भिन्नार्थका एव, अन्यथा अभिभवपराभवयोः भेदः न स्यात्। अनयोः अत्र सामान्येन एकार्थत्वेऽपि अस्ति सूक्ष्मभेदः, तेजश्शालिना आक्रान्ते सति अभिभवः बलादिना च पराभवः इति मृग्यम्।

साम्प्रतं महर्षियास्केन एषां येऽर्थाः उपादिष्टाः ते सर्वप्राचीनत्वात् उपादीयन्ते —

| *प्रादयः* | *अर्थाः* | *प्रादयः* | *अर्थाः* |
|---|---|---|---|
| आङ् | सामीप्यम् | वि | पृथकीभावम् |
| प्र | दूरता | अप | विभागत्वम् |
| परा | दूरता | परि | सर्वतोभावम् |
| अभि | साम्मुख्यम् | नि | प्रतिबन्धता |
| अति | श्रेष्ठता | अव | प्रतिबन्धता |
| सु | श्रेष्ठता | अनु | सादृश्यं पाश्चात्यं च |
| सम् | सङ्गीभावम् | अधि | उपरिभावं |
| उप | सामीप्यमाधिक्यञ्च | | स्वामित्वञ्च |
| | | प्रति | वैमुख्यम् |
| निर् | हीनता | उद् | निर्बन्धता |
| दुर् | हीनता | अपि | समुच्चयः |

यद्यपि विंशतिः प्रादयः उपदिष्टाः यास्केन तदानीन्तना व्यवहृता एषामर्था अपि प्रदर्शिताः, "निस्-दुस्" इति सान्तौ प्रादी तु नोक्तौ । परन्तु "निलयते निलयः, दुलयते" इत्यादिरूपाणां सिद्धयै रान्तयोः निर्दुरोः, निरयणं दुरयते इत्याद्यर्थञ्च सान्तयोः निस्दुसोरपि आवश्यकता अस्ति । न च सान्तयोरेव "ससजुषोः" इति रुत्वेसति "उपसर्गस्यायतौ" इति सूत्रेण तयोः लत्वे कृते "निलयः, दुलयः" इत्यादिसिद्धौ रान्तौ उपसर्गौ अपार्थकौ इति वाच्यम्, लत्वे कर्त्तव्ये रुत्वस्थासिद्धत्वात् । एवमेव "निरयणम्" इत्यादौ लत्वा भावार्थम् सान्तयोः निस्दुसोःअस्ति अपेक्षा। अथेदानीम् एषां कोशादौ लिखिताः अर्थाः प्रस्तूयन्तेः—

*प्र* :—आरम्भे, गतौ, उत्कर्षे, प्राथम्ये, सर्वतोभावे, उत्पत्तौ, ख्यातौ, व्यवहारे, दीर्घे, ईशे, आधिक्ये, तृप्तौ, वियोगे, शुद्धौ, शक्तौ, इच्छायां, शान्तौ, पूजायाञ्च प्रयुज्यते । क्रमशः उदाहरणानि—प्रारम्भः, प्रस्थानम्, प्रगतिः, प्राचार्यः प्रपूर्णम्, प्रभवः, प्रसिद्धिः, प्रवृत्तिः प्राचीनम्, प्रभुः प्रभूतम्, प्रभुक्तः , प्रोषितः, प्रसन्नं जलम्, प्रसक्तः, प्रार्थना, प्रशान्तः, प्राञ्जलिः, प्रदर्शनी इति ।

*परा* :—अयं बधगतिदर्शनविक्रमसम्मुखाधिक्याधीनत्यागप्रतिकूल-परावर्त्तनतिरस्कारपराजयभङ्गमोक्षणधर्षणप्राधान्यादिषु प्रयुज्यते। तत्र क्रमादुदाह्रियते—पराहतः, परागतः, परादृष्टः, पराक्रमः, परावृत्तः, पराकाष्ठा, पराधीनः, पराकृतः, पराङ्मुखः, परावर्त्तनम्, पराभूतः, परास्तः, इत्यादीनि मृग्याणि। "परावागनपायिनी" इति "सा परा यया अक्षर-मधिगम्यते" इत्यादौ "परा" शब्दः मूलाधारस्थे शब्दभेदे ब्रह्मविद्यायाञ्च स्त्रीलिङ्गः।

*अप* :—वियोगविकृतिविपरीतनिदर्शनानन्दवर्जनचौर्यवारणादिष्वर्थेषु अयं प्रयुज्यते। क्रमशो यथा :—अपयाति, अपचयः, अपशब्दः, अपदेशः अपहासः अपतृगर्तः, अपहरणम्, अपवर्तनम्। अपकर्षेऽधः प्रदेशे यथा—अपकर्म, अपानः। तत्र वर्जनेऽर्थे "अपपरिवर्जने"इति कर्मप्रवचनीयत्वात् पञ्चमी यथा "अपमरोः वृष्टो देवः"॥

*सम्* :—सम्यक्-प्रकर्षसंगतिशोभनसमुच्चयाद्यर्थेषु अयं व्यवह्रियते। यथाक्रमेण—संयोगः, समादरः, सम्बन्धः, संदर्शनम् , समुच्चयः, संकरः आदीनि पदानि संज्ञेयानि।

*अनुः*— वेदाध्ययनधार्मिककृत्यसामीप्यपश्चादनुबन्धसाम्याभिमुख-लक्षणहीनविसर्गसहार्थेत्थम्भूतभागवीप्सादैर्घ्ययोग्यक्रमिकव्याप्त्युपासना-द्यर्थेषु अस्य प्रयोगः। क्रमशो यथा—अनुवाकः, अन्वधीते, अनुष्ठानम्, अनुमेघम्, तदनु, अनुशयः, अनुकरणम्, अनुमातरं वत्सः, यज्ञमनु-पुत्रः, अनुहरिम्, अनुज्ञानम्, नदीमन्धवसिता सेना, भक्तो हरिमनु, लक्ष्मीः हरिमनु, वृक्षं वृक्षमनु, अनुङ्गम्, अनुरूपम्, अनुक्रमम्, अन्वर्थः, अन्वासितः इत्यादीनि उदाहरियाणि। विसर्गः आरब्धकार्ये प्रतिबन्धाभावः। इत्थम्भूतः प्रकारविशेषनिरूपितः।

*अव* :—निश्चयव्याप्त्यनादरापूर्णालम्बनशुद्धिपरिभवनियोगनिम्नता-ज्ञानाधिक्याद्यर्थेषु प्रयुज्यतेऽयम् क्रमशः उदाह्रियते—अवसायः, अवकीर्णम्, अवमानम्, अवहननम्, अवलम्बनम्, अवदातम्, अवज्ञा, अवक्लृप्तिः, आवाचीनम्, अवगतम्, अवधात इत्यादि। क्रोशार्थेऽपि

दृश्यतेऽयं यथा—अवक्रुष्टं कोकिलया इति अवकोकिलः। अस्य अकारस्य लोपोऽपि भवति अवगाहः—वगाहः इत्यादौ।

*निस्-निर्*ः—वियोगेऽत्यये आदेशे ऽतिक्रमे भोगे निश्चिते निषेधे च दृश्येते इमौ। यथा क्रमशः—निस्सङ्गः, निर्मेघः, निर्देशः, निस्क्रान्तः, निर्वेशः, निश्चितम्, निर्मक्षिकम् इत्यादि। "निसस्तपतावनासेवने" इति सूत्रे "निस्" "इति निर्देशात् निष्कृतम्, दुष्कृतम् इत्युदाहर्तुः भाष्यकारस्य "इदुदुपधस्य चाप्रत्ययस्य" इति सूत्रव्याख्यावसरे कथनाच्चास्य सान्तत्वम्, तथा "निरः कुषः" इति सूत्रे "निर्" इति निर्देशात् रान्तत्वमपि स्वीकार्यम्। एवमेव दुस्-दुर् इत्यनयोरपि सान्त्वं रान्तत्वञ्च ज्ञेयम्।

*दुस्-दुर्*ः—दुष्टे निन्दायां निषेधे दुःखे ईषदर्थे कृच्छ्रार्थे कृषेऽसम्पत्तौ चादौ व्यवह्रियेते इमौ। यथा क्रमेण "दुर्जीवनम्", "दुर्हितम्" दुर्निवार्यम्", दुर्दिनम्, "दुष्कृतम्", "दुर्बलम्" इत्यादीनि उदाहरणीयानि। निन्दितो हितः "दुर्हितः", "न दुर्हितस्यादग्ने न पापया" (ऋ. वे. ८।१९।२६।)।

*विः*—विविधे वियोगे व्याप्तौ आधिक्ये औदासिन्ये सामर्थ्ये वाचि मिथ्यायां पैशुन्येऽस्मरणे भूषायामिषदर्थे विरोधेऽनवस्थायामप्राधान्ये स्थैर्ये दर्शने निश्चितौ विशेषे नियोगेऽसहनेऽन्यार्थे सम्पत्तौ नियमे च इत्यर्थेषु द्योतते। यथा—विचित्रम्, वियुक्तः, विकीर्णम्, वितटा नदी, विमनस्कः, विभुः, विवादः, विगानम्, विसूचकः, विस्मृतम्, विभूषितः, विलुप्तः, विमुखः, विभ्रान्तः, विवृष्टः, विश्रान्तः, विलोकनम्, विश्वासः, विकाशः, विवाह, विसह्यः, विमाता, विभवः, विधिः इत्यादिक्रमेणोदाहृतम्। कलहेऽपि यथा विग्रहः। शरीरेऽपि विग्रह-शब्दः। गरुडपक्षिणोऽपि वाचकः "वि" शब्दः।

*आङ्*ः—वाक्ये (स्मृतवाक्यार्थस्यान्यथात्वद्योतने) यथा—आ एवं मन्यसे। स्मृतौ (स्मृतस्यान्यथाप्रतिपादने) यथा—आ एवं किल् तत्। अनुकम्पायां समुच्चयेऽङ्गीकारे ईषदर्थे क्रियायोगे मर्यादायामभि-

विधौ च इत्याद्यर्थेषु द्योतकः। यथा—आश्वासितः, आनम्रः, आकम्पः, आगमनम्, आवारिधि, आकल्पमिति। सम्माने आह्वाने च यथा—आदरः, आकारितः इत्यादि। अस्य वाक्यस्मृतिभिन्नेऽर्थे ङित्वमिच्छन्ति, तेन "निपात एकाजनाङ्" इति अङितः प्रगृह्यः संज्ञाविधानात् वाक्ये स्मृतौ च प्रगृह्यत्वात् वृद्धयादिनः, तदुक्तम्—

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित् ॥ इति।

वाक्यञ्च वाक्यार्थद्योतकता, स्मरणं तु प्रमाणान्तरावगतस्य द्योतकता, न तु शब्दमात्रेणाऽवगतस्य इति तयोर्भेदः।

*निः*—सङ्गेऽधोभावे न्यग्भावे भृशे आदेशे नित्ये कौशले बन्धनेऽन्तर्भावे सामीप्ये दर्शने उपरमे आश्रये संशये क्षेपे दाने मोक्षे विन्यासे निषेधे निश्चये च इत्याद्यर्थेषु प्रयुक्तोऽयम्। तद्यथा—निकरः, निपतितः, निगृहीतम्, निदेशितम्, निवेशः, नित्यः, निपुणः, निबन्धः, निपीतम् (अन्तर्भूतम्), निकटम्, निदर्शनम्, निवृत्तः, निलयः, निकारः, निमन्त्रणम्, निदानम्, निषेध इत्यादि गवेषणीयम्।

· *अधिः*—अध्ययने, ऐश्वर्ये, वशित्वे, स्मरणे, अधिके, अधिकारे, उपरि, दाये, स्वत्वे च इत्यादिषु अर्थेषु वर्तते। यथा—अधीतः, अधिपतिः, अधीनः, मातुः अध्येति, अधिकम्, अधिकृतम्, नाकस्य अधि, अधिगतम्, इत्यादीनि उदाहरणीयानि। अव्ययीभावे सप्तम्यर्थस्य द्योतकः। यथा—अध्यात्मम्। दायत्वेन लब्धम् अधिगतमित्युच्यते। ऐश्वर्ये स्वत्वे च कर्मप्रवचनीयत्वेन तद्योगे सप्तमी, यथा—अधि रामे भूः।

*अपि*:—अशक्यकरणाय उद्यमरूपायां शक्त्युत्कर्षमाविष्कर्तुमतिशयोक्तिरूपायां च संभावनायामन्वसर्गे गर्हायां समुच्चये प्रश्ने सन्देहे भूषायामाशिषि मरणेऽवधारणे ईषदर्थे पुनरर्थे अनुच्चारितपदस्यार्थे च प्रयुज्यते। यथा—'अपि प्रक्षालनेयं पादं मन्त्रिणा', अत्रातिशयोक्तिः। 'अपि याहि', इच्छसि चेत् गच्छ इत्यर्थमन्वसर्गं बोधयति। "धिग् देव-

दत्तम्, अपि स्तुयाद् वृषलम्", अत्र अपिना निन्दा प्रकाश्यते, तमेवानुवदति देवदत्तान्तं वाक्यपूर्वखण्डम्। "अपि स्तुहि, अपि सिञ्च" अत्र समुच्चयः। सर्पिषोऽपि स्यात्, अत्र अनुच्चारितस्य बिन्दुपदस्य अर्थं द्योतयति। अत्र लिङर्थसंभावनायाः विषयीभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन् अपि शब्दः स्यात् क्रियया सम्बद्ध्यते। सर्पिषः इति षष्ठी तु अपि शब्दबलेन द्योत्यमानस्य बिन्दोः अवयवावयवीभावसम्बन्धेऽस्ति। एवञ्चात्र अपिना सर्पिषः सम्बन्धाभावात् तत्र न द्वितीया। एषु पञ्चसु अर्थेषु अपेः कर्मप्रवचनीयत्वात्। उपसर्गत्वाभावात् षत्वं न। "अपि कुशलीगुरुस्ते" इति प्रश्ने। योजनमपि भवेत् सार्धयोजनमपि, इति सन्देहे। अपि नह्यति हारम्, अत्र भूषायाम्। "भद्रमपि" इति आशिषि। "मरणमपि" इति मरणे। न हि पठति, अपितु स्वपिति, अत्र अवधारणे। अपि चोक्तम्, अत्र पुनरर्थता। "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्युक्तेः अस्य अकारलोपोऽपि क्वचिद् दृश्यते। यथा—अपिधानम्-पिधानम्, अपिनद्धः, पिनद्धः।

*अति* :—विक्रमेऽतिक्रमे बुद्ध्याग्राह्ये आधिक्ये अतिशये पूजायामुत्कर्षे चादौ वर्ततेऽयम्। क्रमेण यथा—अतिरथः, अतिराजी, अतिगहनम्, अतितप्तः, अतिवेगः, अतिस्तुतम्, अतिधनमित्यादि। पूजायां कर्मप्रवचनीयसंज्ञकः। अतिगहनमित्यत्र बुद्धेरविषयः अर्थः द्योत्यते।

*सु* :—प्रशंसायामनुमतौ भृशार्थे कष्टे शुभे, समृद्धौ, पूजायामतिशयादौ च वर्तते। क्रमशो यथा—सुरूपः, सुकृतः, सुतप्तम्, सुदुष्करः, सुगन्धिः, सुश्रीः, सुखम्, सुस्तुतम्, सुष्टुतः। पूजायां कर्मप्रवचनीयत्वात् षत्वाभावः, अन्यत्र षत्वम्। अतिशयश्च चिद्वृत्तिः, चिदचित्साधारणमाधिक्यम्।

*उद् ( उत् )* :—उपरि अधोभावे प्रश्ने वितर्केऽत्यर्थे संशये प्रसन्नतायां मूले उत्पत्तौ चादिषु वर्तते। यथा क्रमशः—उत्क्षेपणम्, उच्छृङ्खलः, उत् पठति ते भ्राता ?, उद्वलकः, उद्रेकः, उन्मना, उत्कण्ठतः, उत्सः, उद्भवः इत्यादीनि उदाहार्याणि।

*अभि* :—लक्षणे, किञ्चित् प्रकारं प्राप्तस्य द्योतने, वीप्सायाम्, सम्मुखे, ईक्षायाम्, समन्तादर्थे, पूजायाम्, सौम्ये, सौरूत्ये, वचने, आहारे, स्वाध्याये, घर्षणे, इत्यादौ वर्तते। लक्षणे यथा—"हरिमभि जयः" हेतुभूतहरिसूचितजयः इत्यर्थः। "भक्तः शिवमभि" इति इदमित्थोक्तिः। "ग्रामं ग्राममभिसेधति" इति वीप्सा। अर्थत्रयेस्मिन् कर्मप्रवचनीयत्वात् षत्वाद्यभावः। अभिमुखम्, अभिलाषः, अभितः, अभिवादनम्, अभिजातवाचि, अभिस्नपन, अभिधानम्, अभ्यवहारकः, अभ्यासः, अभिषवः इत्यादीनि क्रमेणोदाहरणानि।

*प्रति* :—लक्षणे, प्रकारविशेषोक्तौ, दाये, वीप्सायाम्, विनिमये, प्रातिनिध्ये, साम्ये, हिंसायाम्, स्वीकरणे, व्याधौ, साम्मुख्ये, निषेधे, व्याप्तौ, अल्पे, निश्चये, विरोधे, स्वभावादौ च वर्तते। क्रमशो यथा-वृक्षं प्रति विद्योतते विद्युत्, दानं प्रति प्रस्तुतः, पुस्तकं छात्रं प्रति,-क्षेत्रं-क्षेत्रं प्रतियाति, तिलेभ्यः प्रतियच्छति माषान्, अभिमन्युः अर्जुनतः प्रति, प्रतिदेवः, प्रतिघातः, प्रतिज्ञानम्, प्रतिश्यायः, प्रतिरूपमागतः, प्रतिषिद्धः, प्रतिकीर्णम्, शाकप्रति, प्रतिपक्षी, प्रतिमूर्तिः इत्यादीनी गवेषणीयानि।

*परि* :—समन्तादर्थे, व्याप्तौ, दोषकथने, भूषणे, आलिङ्गने, वर्जने, मर्यादायाम्, आच्छादने, सेवायाम्, सन्तोषे, परम्परायाम्, लक्षणे, प्रकारविशेषोक्तौ, दाये, वीप्सायाम्, द्यूतपराजये, शेषे शोकादौ च वर्तते। यथा- परिभ्रमणम्, परिणतः, परिवादः, परिष्कारकः, परिष्वङ्गः, परिणतः, परिचरणम्, परिकश्मीरात्, परिछिन्नम् वस्त्रम्, परिस्तरणम्, परिचर्या, परितोषः, परिपाटी, कुक्कुरं परिक्षिपति कङ्करीम्, श्रेष्ठः सतीर्थ्यं परि, धनं भिक्षुकं परि, छात्रं छात्रं परिस्तौति, अक्षपरि, परिशिष्टम्, परिदेवनम् इत्यादीनि क्रमेणोदाहरणानि। तत्र लक्षणादिचतुर्षु अर्थेषु कर्मप्रवचनीयसंज्ञकः। व्याकरणेऽप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानवच्छिन्ने "परिनिष्ठितः" शब्दः पारिभाषिकः। व्याधौ उपरतौ चापि अस्य प्रयोगः कोशादिसम्मतः। अस्य रकास्य विकल्पेन लकारो भवति यथा—परिघः, पर्यङ्कः, पल्यङ्कः।

उप :—सामीप्ये, समर्थे, व्याप्तौ, आचार्यकरणे, अत्यये, दोषे, दाने, क्रियायाम्, वीप्सायाम्, आरम्भे, अध्ययने, पूजने, सादृश्ये, अधिकार्थे, हीने, प्रतियत्ने, साधनादौ, च वर्तते। क्रमेण यथा—उपकूलम्, उपकारितः, उपकीर्णम्, उपदेशः, उपरतः, उपघातः, उपहारः, उपचारः, देवं देवमुपचरति, उपक्रमः, उपाध्यायः, पुत्रेणोपचरितः, उपधातुः, उपशतम्, उपजातिः, उपस्क्रियमाणः, उपकरणम् इत्यादीनि उदाहरणानि। शक्तौ निदर्शने चापि अयं वर्तते। हीने आधिक्ये चास्य कर्मप्रवचनीयता, तत्र तद्योगे द्वितीयासप्तमी च क्रमेण।

भाषावैज्ञानिकनयेन एषामर्थान्तराण्यपि अर्वाक् सम्भवन्ति, अन्तर्भावोऽपि संभवति। नाम-शब्दवत् एषामर्थस्यापि नैकाः प्रतिच्छायाः भवन्ति। यद्यपि कोषादिषु अनेकेऽर्थाः निर्दिष्टाः, परं भाषाविस्तारनियमस्यसिद्धतया; कोशनिर्दिष्टार्थेषु एव एषां प्रतिबन्धः प्रतिषिध्यते। अर्थान्तरे विद्यमानोऽपि प्रादिः कालान्तरेऽर्थान्तरे परिणमति। यथा—यास्केन "एवमुच्चावचानर्थान् प्राहुः त उपेक्षितव्याः" इति वाक्ये सूक्ष्मेऽर्थे प्रयुक्तोऽपि उपः हीनतायां प्रयुज्यते। तत्र हि तर्कवितर्कपूर्वकं सूक्ष्मतयेक्षणीयाः इति भावः।

कुत्रचिच्चैते निरर्थका एव दृश्यन्ते यथा—काचन नवयौवना उत्तरोत्तरसौन्दर्याभिवृद्धये। नेत्रयोः उपनेत्रमुपादत्ते तथैव पादपूर्णार्थं पदलालित्यार्थं वा एते प्रयुज्यन्ते। यथा–विनिवेदनम्, प्रपूर्णम्, समुद्यमः, सुशोभनम्, आनतः, विनिहन्ता, अध्यागच्छति इत्यादौ प्रयुक्ताः प्रादयः प्रायो निरर्थकाः एव सन्ति। यद्यपि विशेषेण निवेदनमित्यादिरूपेण कथञ्चित् सार्थकत्वमपि साधयितुं प्रभविष्णुः कोऽपि, तथापि प्रौढिवादमात्रमेव, तदर्थस्य झगित्यनाकलनात्। अत्र तथाकथितविशेषार्थोत्स्फूर्तौ विवेकिनः एव प्रमाणम्। निरथकप्रयोगस्तु प्रायः "प्र-सम-वि-आङ्-नि-सु-" इत्यादीनामेव भवति, यथा—पादपूर्त्यर्थम् "च वा है ह वै" इत्यादिनिपातानां प्रसिद्धः प्रयोगः।

यद्यपि क्रियातो युक्तानां नियुक्तानाञ्चैषां कोशादिषु अर्थाः निर्दिष्टाः

सन्ति येन एतेऽर्थानाम् वाचकाः प्रतीयन्ते तथापि वैयाकरणनयेन द्योतका एव सन्ति। यथा—दीपः प्रज्वलितः वेश्मस्थानर्थान् प्रकाशयति, न चार्थाः दीपस्थाः, तथैव एते नामाख्यातस्थानर्थान् द्योतयन्ति, न त्वेषु अर्थाः वाचकत्वेन स्थिताः सन्ति, तदुक्तं पूर्वाचार्यैः—

> उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
> प्रहाराहारसंहारविहारपरिहारवत् ॥ इति।

भट्टोजिदीक्षितेनाप्युक्तम्—"उपसर्गस्त्वर्थविशेषस्य द्योतकाः" इति। भर्तृहरिणाप्युक्तम्—

> द्योतका प्रादयो येन निपाताश्चादयस्तथा।
> उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ इति।

अयम्भावः—"उपास्येते" इत्यत्र उपासना किम् उपसर्गार्थः, विशिष्टस्यार्थः धातुमात्रस्य वा? नाद्यः, स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्य 'अस्' धातोः अभावात् कर्मणि लकारानापत्तेः। न हि उपसर्गविशिष्टस्य धातोः "उपासना" स्वपोऽर्थः, गौरवात्। तस्मात् धातुमात्रस्यैव सोऽर्थः, उपसर्गश्च तमर्थं द्योतयति इत्येव न्याय्यम्। अतएव नागेशेनाप्युक्तम्—"एषां द्योतकत्वं वाचकत्वञ्च यथा कार्यम् यथा प्रयोगं बोध्यम्"। इति। किञ्च—एतेषां परतन्त्रत्वात्, उपसर्गं विनापि धातोरनेकार्थत्वात् पदान्तरसाहाय्यं क्रियायोगं चान्तरा अस्तित्वाभावात्, वाच्यवाचकभावाख्यपक्षस्यगौरवग्रस्तत्वात्, निरर्थकत्वाच्च द्योत्यद्योतकत्वमेव इति सिद्धान्त एव ज्यायान् इति विदाङ्कुर्वन्तु तत्र धीमन्तः। अतः मीमांसकानाम् वाचकत्वपक्षः, नैयायिकानाम् निपातवाचकत्वोपसर्गद्योतकत्वपक्षौ अर्धजरतीयन्यायेनाविचारितरमणीयाः।

एतावता प्रबन्धेन एतेषामुपादेयत्वं स्वतः परिस्फुरति। संस्कृते हिन्द्याञ्च पदे-पदे "विश्वामित्र" इव नूत्नं सर्गं व्याकुर्वाणाः कल्पवृक्ष इव शाब्दीमाकाङ्क्षां पूरयन्तः कस्य जिज्ञासोः धिषणां नोद्घर्षयन्ति स्वस्वरूपमुद्घाटयितुम्। सङ्ख्यया पक्षविषाणमितत्वेऽपि गतिनिपातादिनानानामाङ्गीकृत्यनैककार्यद्वारा विविधमर्थं सृजन्ति। वाचकत्व-द्योतकत्व-

विवादग्रस्तत्वेऽपि सर्वमान्याः, परतन्त्रत्वेऽपि नवार्थप्रकाशने स्वतन्त्राः, अवाचकत्वेऽपि कोशादौ वाचकत्वेन निर्दिष्टाः अद्रव्यार्थकत्वेऽपि द्रव्यार्थकाः सन्ति प्रादयः। सन्धौ, सुबन्ते, तिङन्ते, कृदन्ते, समासे, स्वरादिषु सर्वत्रैव किञ्चित्स्ववैशिष्ट्यमादधति। किञ्च संस्कृतभाषायाः समृद्धौ निदानं प्रादयः।



# अभिधावृत्तिविचारः

डॉ० रविशंकरनागरः

## शब्दस्योपयोगिता महत्त्वञ्च

शब्दार्थलक्षणं काव्यस्य स्वरूपम्। अथ कोऽसौ शब्दः कश्चार्थ इति विवेचनीयम्। शब्देनैव मानवानां व्यवहाराः प्रवर्त्तन्ते। यद्यप्यक्षिनिकोचैः पाणिविहारैरन्यैरिङ्गितैश्चापि स्वाभिलाषः प्रकटीकर्तुं शक्यते, तथापि शब्द एव प्राधान्येन मानवानां प्रवृत्तौ निमित्तम्। शब्दानुच्चार्याकर्ण्य च मानवा लौकिकेषु कार्येषु प्रवृत्ता भवन्ति। अत एव प्राक्तनेषु ग्रन्थेषु विपश्चिद्भिर्वारं वारं वाचो महिमा प्रतिपादितः[1]। बृहदारण्यकोपनिषदि याज्ञवल्यजनकगोष्ठीषु वाचो महिमानमवलम्ब्यैवैकदा विमर्शः समजायत। तत्र याज्ञयल्क्यमहर्षिणा वागेव मनुष्यस्य ज्योतिः प्रोक्तम्[2]। सूर्यचन्द्रतारकाग्नीनां प्रकाशे तिरोहिते सति, वागेव प्रकाशिका भवति। धर्माधर्मयोर्ज्ञानाज्ञानयोर्विवेको वाचैव कर्तुं शक्यते। अत एवोक्तं छान्दग्योपनिषदि—

'यद्वै वाङ्नाभविष्यत् न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतम्[3]।

---

१. (क) न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते॥ वा. प. १,२४

(ख) इदमन्धस्तमं कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं दीप्यते॥ का. द. १,४

२. वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते, विपल्येतीति। तस्माद्वै सम्राडपि यत्र स्वपाणिर्न विनिर्ज्ञायते, अथ यत्र वागुच्चरति, उपैव तत्र न्येतीति।

३. छान्दग्योपनिषद्, ७, २१

अत एव भारतीयदर्शनशास्त्रेषु शब्दार्थयोः स्वरूपं तयोश्च सम्बन्धमाश्रित्य परमगहनो विचारः शास्त्रकृद्भिः कृतः। काव्येऽपि परमानन्दसहोदरस्य रसस्य चर्वणा शब्दार्थपूर्विकैव भवति। समुचितशब्दयोजनयैववाल्मीकिकालिदासादयः कविपुङ्गवाः सहृदयहृदयधामसु ललनालावण्यकल्पमतिरमणीयमर्थमवतारयन्तस्तानानन्दाकूपारे परिप्लावयन्ति। अतः शब्दस्य साम्राज्यं सर्वत्राक्षुण्णम्।

## वैयाकरणानां मते शब्दोत्पत्तिप्रकारः

कथं शब्दो जायते, किञ्च तत्स्वरूपमिति परमगहनं दर्शनम्। पाणिनि-शिक्षा-वाक्यपदीय-तंत्रवार्तिक-न्यायमञ्जर्यादिषु व्याकणमीमांसान्यायदर्शनग्रन्थेषु बहुशश्चर्चितः परमया प्रौढ्या च प्रतिपादितोऽयं विषयः। आधुनिके युगे पौरस्त्याः पाश्चात्याश्च भाषाविज्ञानपण्डिता विषयममुं सूक्ष्मेक्षिकया विमृशन्तो दृश्यन्ते। वैयाकरणानां स्फोट-दर्शनं कथं शब्द उत्पद्यते, किंस्वरूपोऽसौ, नित्योऽनित्यो वा कथञ्च शब्दादर्थप्रतीतिरिति परमजटिलं विषयं विवेचयितुं प्रवृत्तमास्ते।

## तत्र शब्दस्य चतस्रो दशाः

स्फोटवादिनो वैयाकरणाः शब्दस्य चतस्रो दशाः समामनन्ति। ताश्च परा-पश्यन्ती-मध्यमा-वैखर्यः[1]।

शब्दोच्चारणात् प्राक् मूलाधारचक्रस्थः स्पन्दशून्यः सूक्ष्मातिसूक्ष्मः पवनसंस्कारो निर्विकल्पोऽसौ स्वरूपज्योतिरन्तर्भासिनी परावाग-

---

१. प्राणापानान्तरे देवी वाग्वै नित्यं सा तिष्ठति।
स्थानेषु विवृते वायौ कृतवर्ण-परिग्रहा॥
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धनी।
केवलं बुद्ध्युपादान-क्रमरूपानुपातिनी।
प्राणवृत्तिमनुक्रम्य मध्यमा वाक् पवर्तते।
अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः परावागनपायिनी॥
—वैयाकरणसिद्धान्तलघुमंजूषा, पृ. ४१-४२

नपायिनी। अयं संस्कारो नादब्रह्मरूपेण, ज्ञायते,[१] यस्मिन् ज्ञाते सर्वं ज्ञातं भवति। मूलाधारचक्रस्थः पवन-संस्काररूपः शब्दोऽखण्डोऽविभाज्यो विभुश्च। एतदेव योगिनां समाधौ निर्विल्पकज्ञानविषय इत्युच्यते। मूलाधारचक्रे उद्बुद्धः पवनसंस्कारो निर्विकल्पो यदा नाभिं प्रत्येति, तदासौ पश्यन्तीदशामवतीर्णो मनोविषयो भवति, योगिनां समाधौ च सविकल्पकज्ञानविषयो भवति। उभयोर्दशयोः शब्दः वाग्ब्रह्मरूपो योगिभिरेव निर्विकल्पकसविकल्पकसमाध्योर्ज्ञायते, न त्वस्मदादिभिः साधारणैर्मानवैः परमियानत्र विशेषः। मूलाधारचक्रस्थः पवनसंस्कारो निर्विकल्पोऽत एव स्वरूपज्योति अन्तर्भासिनी-परा-वागित्युच्यते। नाभिमवतीर्णः पवनसंस्कारः सविकल्पो मनोगोचरीभूतोऽतएव पश्यन्ती वागित्युच्यते। नाभेरूर्ध्वं हृदयपर्यन्तमागच्छता वायुनाऽभिव्यक्ता वाग् मध्यमेत्युच्यते। इयं वाक श्रोताग्राह्या स्फोटरूपा तत्तदर्थबोधिका। मध्यमा वागपि सूक्ष्मा केवलं जपादौ बुद्धिनिर्ग्राह्या। हृदयादूर्ध्वमास्यपर्यन्तमागच्छन्नूर्ध्वमुत्क्रामन् वायुर्यदा मूर्धामाहन्ति, पश्चाच्च तालुदन्तौष्ठादिमुखस्थानेष्वभिव्यक्तो भवति, तदासौ वैखरीरूपः। वैखरीवाक् परैः श्रोत्रेणापि गृह्यते, परं न मध्यमा। मध्यमायां दशायां पवनो बुद्धिग्राह्य एव, नासौ श्रोत्रेण गृह्यते। परं वैखर्यां व्यक्तः शब्दः श्रोता विषयतामप्युपयाति। एवं शब्दोत्पत्तिं विमर्शयद्भिर्वैयाकरणैः शब्दस्य चतस्रः दशाः समाम्नाताः। तन्मते पराद्यिप्रथमदशां प्राप्तः शब्दो नित्यः परमन्त्यां वैखरीं दशामापन्नोऽनित्यः सखण्डः श्रोत्रादीन्द्रियग्राह्यश्च भवति।

---

१. सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततोनादस्तस्माद् बिन्दुसमुद्भवः॥
नादो बिन्दुश्च बीजञ्च स एव त्रिविधो मतः।
भिद्यमानात् पराद् बिन्दोरुभयात्मा रवोऽभवत्।
स रवः श्रुतिसम्पन्नः शब्दब्रह्माभवत् परम्॥
—कविकर्णपूरस्यालङ्कारकौस्तुभः २, १०

## (क) वैयाकरणानां मते शब्दनित्यत्वानित्यत्वविचारः

वैयाकरणानां मते वस्तुतः शब्दः नित्यः परमुपाधिवशाज्जपाकुसुमोपहितादर्शवदनित्यो भाति । य आस्यगतविविधकण्ठतालुमूर्धन्यादिस्थानोपहतपवनविस्फोटेन व्यक्तिमापन्नः कर्णशष्कुलीग्राह्योऽसौ ध्वनिरूपः शब्दोऽनित्यः। यथा—गौरित्युच्चरिते गकारौकारविसर्जनीयानां ध्वनीनां क्षणिकत्वाद् ध्वनिरूपो गौरिति शब्दोऽनित्यः। परं गोशब्दोच्चारणात् पूर्वमव्यक्तः सूक्ष्मः शब्दो नित्यः। इत्थं वैयाकरणदर्शने शब्दस्य परमार्थिके नित्यत्वे सत्यप्युपाधिवशादनित्यत्वं तस्य। वस्तुतस्तु यच्छब्दस्यानित्यत्वं तत्तस्य ध्वनिरूपोपाधिवशादेव। अव्यक्तः शब्दः परापश्यन्ती मध्यमादशामाटीकमानो नित्य एव। एवमुपाधिवशादेव वैयाकरणैः शब्दस्यानित्यत्वमास्थीयते, अन्यथा तेषां दर्शने पवनसंस्कारभूतस्य शब्दस्य मूलाधारचक्रे निर्विकल्पकज्ञानत्वेनावस्थानान्नादब्रह्मरूपत्वान्नित्यत्वमेव।

वस्तुतस्तु शब्दनित्यत्वानित्यत्वनिरूपकं वैयाकरणानां दर्शनमद्वैतवादिनां वेदान्तिनां दर्शनमुपजीव्य प्रवर्तते। वेदेषु प्रणवो ब्रह्मरूपः प्रोक्तः। शब्दरूपं ब्रह्म प्रणवापरपर्यायं तस्य चैक्यमर्थरूपेण ब्रह्मणा योगिजनज्ञेयेन। इत्थं शब्दब्रह्मवादिनां वैयाकरणानां स्फोटसिद्धान्तस्य मूलं प्रणवब्रह्मण्येवान्वेष्टव्यम्। यथा वेदान्तिभिर्ब्रह्मणोऽखण्डत्वमेकत्वमुपाधिवशाच्च तस्यानेकत्वं सखण्डत्वञ्च सिद्धान्त्यते, तथा स्फोटवादिनो वैयाकरणा अपि वेदान्तिनां दर्शनमिदमुपजीव्य नादब्रह्मसंज्ञस्य शब्दस्य नित्यत्वमुपाधिवशाच्च तस्यानित्यत्वं प्रतिपादयन्ति। यथा वेदान्तिनां निरूपाधि ब्रह्म शुद्धं सत्यं ज्ञानमनन्तमद्वैतं तथा वैयाकरणानामपि मूलाधारचक्रे उद्बुद्धः पवनसंस्काररूपः शब्दो निर्विकल्पोऽखण्डो विभुश्च। यथोपाधिवशात्तदेवाव्यक्तं ब्रह्म जीवात्मरूपेण परिच्छिन्नं सत् कृशोऽहंस्थूलोऽहं विपन्नोऽहं समृद्धोऽहमिति प्रतीतिमनुभवति मायोपहितत्वात्, तथैव नित्योऽक्षरो ब्रह्मरूपः शब्दो वैखरीदशामापन्नो ध्वनिरूपोपाधिवशादनित्यो क्षणभङ्गुरश्च भवति। असावेव परां दशां गतो नादब्रह्मरूपो नित्यः शब्दो वैखर्या व्यक्तो भूत्वा तद्वशाच्च स्थूलरूपमापद्यार्थरूपेण विवर्तते। यथोक्तं भर्तृहरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1]

गकारौकारादीनां ध्वनीनामुच्चरितप्रध्वस्तत्वात् यार्थप्रतीतिः सा स्फोटमहिम्नैव । उच्चरितप्रध्वस्ता ध्वनयः स्वसंस्कारमुत्तरोत्तरे वर्णे सङ्क्रामयन्तोऽर्थप्रतीतिं कारयन्ति । अतो गोशब्दात् प्रथमं गोपदस्फोट-ज्ञानं पश्चाच्च गोत्वरूपिणोऽर्थस्यावगतिः । इत्थं वैयाकरणानां नित्यः शब्दोऽर्थभावेन विवर्तमानः सन् दृश्यते । परं पारमार्थिकं शब्दस्य नित्यत्वं निरूपाधिब्रह्मवदिति गहनातिगहनं वाक्यपदीयादिपरमप्रौढेषु ग्रन्थेषु विवेचितं स्फोटवादिनां वैयाकरणानां शब्दस्वरूपविवेचनपरं दर्शनम् ।

## ( ख ) तत्र नैयायिकाः

नैयायिकानां मते शब्दो नश्वरो ध्वनिरूपः[2] । यदा वक्त्रा घटपटादयः शब्दा उदीर्यन्ते, तदा ते आकाशमार्गेण विचरन्तो वीचीतरङ्गन्यायेन कदम्बगोलकन्यायेन वा श्रोतुः कर्णशष्कुल्युपहतनभःप्रदेशे व्यक्ता भवन्ति[3] । अतः शब्द आकाशगुणस्तैरभिधीयते । अयमाशयः—यथा शान्ते सरसि प्रक्षिप्तेनाश्मखण्डेन वीचेर्जन्म भवति, सा च स्वयं

---

१. वाक्यपदीयम्, १, १ ।

२. (क) आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ।

भाष्यम्—आदिर्योनिः कराणमादीयतेऽस्मादिति । कारणवद-नित्यं दृष्टम् । संयोगविभागजश्च शब्दः कारणवदनित्य इति । उत्पत्ति-धर्मकत्वादनित्यः शब्द इति भूत्वा न भवति, विनाशधर्मक इति ।

—न्याय-दर्शनम्, २,२,१३.

(ख) प्रयत्नप्रेरितकौष्ठ्यसंयोगविभागानन्तरमुपलभ्यमानः शब्दस्तत्कार्य एवेति गम्यते, उच्चारणादूर्ध्वमनुपलब्धेः···ते नूनमवगच्छन्ति, कार्यः शब्दः । —न्यायमञ्जरी, पृ० १८९.

३. सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥
वीचीतरंगन्यायेन तदुत्पत्तिस्तु कीर्तिताः ।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥

—न्यायसिद्धान्तमुक्तावलिः, पृ० १६३.

विलीनायां वीचिं जनयति। एवं परम्परया वीचेर्वीचयो जायन्ते। तथैव वक्तृमुखादुदीर्णः शब्दो ध्वनिरूपः आकाश-तरङ्गेषु प्रवहन् तरङ्गात्तरङ्गान्तरे संक्रामन् श्रोतुः कर्णशष्कुलीं प्रविशति व्यक्तश्च भवति। आहोस्विच्छब्दोत्पत्तिः कदम्बगोलकन्यायवद् भवति। मुखादुद्गतः शब्दः कदम्बपरागवच्चतसृषु दिक्षु प्रसरतीति कदम्बपरागन्यायवच्छब्दोत्पत्तिः स्वीकरणीया। आधुनिके युगेऽपि भाषाविज्ञानविदो विपश्चितस्तार्किकानाम् मतं शब्दोत्पत्तिविषये स्वीकुर्वन्ति।

## ( ग ) तत्र मीमांसकाः

मीमांसकाः शब्दनित्यत्ववादिनः। यतस्ते वेदमपौरुषेयं नित्यञ्च समामनन्ति।

तेषां मते चोदनापरं वेदवाक्यं परमं प्रमाणम्। अत एव तैर्नित्यत्वं शब्दस्यास्थीयते[1] एवं शब्दस्वरूपविषये विसंवादीनि मतानि दर्शनशास्त्रेषूपनिबद्धानि सन्ति। वेदापौरुषेयत्ववादिनां मीमांसकानां मते शब्दनित्यत्वेऽभ्युपगते एव वेदस्यापौरुषेयत्वं तस्य च शब्दप्रमाणत्वेनाङ्गीकरणं सम्भवमत एव शब्दनित्यत्वाग्रहस्तेषां मते, तार्किकास्तर्कनिकषोपले सर्वं परीक्षन्ते। घटपटादयः पदार्था अनित्या उत्पन्नत्वात्, यत्र यत्रोत्पन्नत्वं, तत्र तत्रानित्यत्वं, यत्रानित्यत्वाभावस्तत्रोत्पन्नत्वाभावः। तथैव शब्दो नित्यः, उत्पन्नत्वात्। वैयाकरणैस्तु ध्वन्यात्मकस्थूलः शब्द इन्द्रियग्राह्यो नश्वरः, परं स्फोटाख्यः सूक्ष्मः शब्दो नित्यः सम्प्रतिपन्न इत्यचिरादेव स्पष्टं प्रतिपादितम्।

## शब्दार्थयोः सम्बन्धविमर्शः

( क ) तत्र मीमांसकाः वैयाकरणाश्च ( सम्बन्धे नित्यत्ववादिनः ).

---

१. अपौरुषेयः शब्दस्यार्थेन सम्बन्धः। तस्याग्निहोत्रादिलक्षणस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य। तथा च चोदनालक्षणः सम्यक् सम्प्रत्यय इति पौरुषेयं हि शब्दे यः प्रत्ययस्तस्य मिथ्याभाव आशङ्कयेत। परप्रत्ययो हि तदा स्यात्। —शाबरभाष्यम्, पृ० ४१-४२

२. सिद्धे शब्दार्थसम्बन्धे ॥ सिद्धे शब्देऽर्थे सम्बन्धे चेति ॥ नित्योह्यर्थवतामर्थैरभिसम्बन्धः। —वैयाकरणमहाभाष्यम्, पृ. ५५.

यथा शब्दस्वरूपविषये विरोधीनि मतान्याचार्याणाम्, तथैव शब्दार्थयोः सम्बन्धविषयेऽपि। मीमांसका वैयाकरणाश्च शब्दार्थयोर्नित्यं सम्बन्धमामनन्ति। तेषामयमाशयः। सनातनकालाच्छब्दा अर्थप्रत्यायनाय प्रयुज्यन्ते। अतस्तयोः सम्बन्धोऽपि सनातनकालादेव प्रवृत्तो वर्तते। नेदं निश्चेतुं शक्यं यत् कदा केन कथं शब्दानामर्थेषु सङ्केतो निश्चितः। परम्परयाऽनादिकालाच्छब्दा अर्थानवगमयितुं व्यवह्रियन्ते, अतः शब्दार्थयोः सम्बन्धेनाप्यनादिना भाव्यम्। यथा चक्षुषा रूपं स्वभावेनैव गृह्यते, तथैव शब्दा अपि स्वभावादेवार्थान् बोधयन्ति।

महाभाष्यकारेण भगवता पतञ्जलिनापि शब्दार्थयोः सम्बन्धः सिद्धः प्रोक्तः। नहि यथा घटेन कार्यं करिष्यन् पुरुषः कुम्भकारमुपगम्य कथयति कुरु घटमिति, तथा शब्दान् प्रयुयुक्षुर्वैयाकरणमुपगम्य वदति 'कुरु शब्दान् प्रयोक्ष्य' इति। अत एव शब्दार्थयोर्नित्यः सम्बन्धः। वस्तुतस्तु शब्दार्थयोः कः सम्बन्धाधायक इति निश्चेतुमशक्यत्वादेव शब्दार्थयोर्नित्यः सम्बन्धो मीमांसकैर्वैयाकरणैश्चाभ्युपगतः।

### (ख) तत्र नव्यनैयायिकाः (अनित्यत्ववादिनः)

नव्यनैयायिकाः शब्दनित्यत्ववादिनां मतमिदं न सहन्ते। तैः शब्दार्थसम्बन्धनित्यत्ववादः प्रबलाभिर्युक्तिभिः प्रत्याख्यातः। न्यायदर्शने गौतमाचार्येण शब्दस्य कार्यत्वादनित्यत्वं सिद्धान्तितम्। तथाहि—'शब्दोऽनित्यः कार्यत्वात् घटवत्'। न चानित्यस्य शब्दस्यार्थेन सह सम्बन्धो नित्यं इति वाच्यम्; तथा सत्यन्नाग्निखड्गादीनां शब्दानामुच्चारणसमये एव मुखस्य पूरणदाहपाटनादिप्रसङ्गात्[1]। परं नैतल्लोकानुभवानुकूलम्।

---

१. (क) पूरणदाहपाटनानुपलब्धेश्च सम्बन्धाभावः।

—न्यायदर्शनम्, २,१,५३.

(ख) जातिविशेषे चानियमात्।

भाष्यम्—सामयिकः शब्दार्थसम्प्रत्ययो न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात्, यथा तेजसः प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति।

—न्यायदर्शनम्, २,१,५६,

किञ्च शब्दो मुख उत्पद्यते, शब्दगम्योऽर्थश्च शब्दप्रभवात् मुखात् पृथगवलोक्यते। अतो भिन्नाश्रयाणां तेषां कथं नित्यत्वाभिसम्बन्धो यौक्तिकः। नित्ये शब्दार्थसम्बन्धेऽभ्युपगते घटपटादिपदार्थबोधकानां पर्यायवाचिनां शब्दानामानर्थक्यं प्रसज्येत। यदि घटशब्दस्य कम्बुग्रीवादिरूपिणस्तदर्थस्य च परस्परं नित्यः सम्बन्धः, तदा घटपदोच्चारणेनैव घटपदार्थावगतिरूपपद्येत, न त्वन्येषां तदर्थबोधकानां कलशादीनां पर्यायवाचिनां शब्दानामुच्चारणेन। शब्दार्थसम्बन्धे नित्ये सति, अन्यासु भाषासु प्रयुज्यमानैर्घटपदार्थबोधकैः शब्दैर्घटपदार्थप्रत्यायनमसम्भवि। परं नैतदनुभवसम्मतं दर्शनम्। एवं नैयायिकानां धिया वाचकवाच्ययोनित्यः सम्बन्धं अनुपपन्नः। अतस्तन्मते सामयिकः शब्दार्थसम्बन्धः।

### (ग) तत्र प्राचीन नैयायिकाः

प्राचीनानां नैयायिकानां मते शब्दार्थयोः सम्बन्ध ईश्वरेच्छाहेतुः[1]। अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकः सङ्केत आदावीश्वरेणैव निर्धारितः। परं पारिभाषिकशब्दानां सङ्केतनिर्णयो मनुष्येच्छया भवति।

अनेन प्रकारेण वैयाकरणानां मीमांसकानां प्राचीननवीननैयायिकानां मतेषु पर्यालोचितेषु सत्सु वयं वैयाकरणसिद्धान्तमेव दृढीचिकीर्षामः। वैयाकरणानां शब्दार्थसम्बन्धनित्यत्ववादस्तार्किकैर्यथार्थरूपेण नाबोधि। शाब्दिकानां वैयाकरणानामयमाशयः। यथाहि—शब्देऽर्थबोधको धर्मः स्वाभाविक एव। यावच्छब्दानां तत्तदर्थेषु सङ्केतो न निर्धारितस्तावत्तेषां निरर्थकत्वं व्यवहारे चानुपयोगित्वम्। परं यदा घटपटादयः शब्दास्तत्तदर्थेषु नियतसङ्केता भवन्ति, तदैव तेषां सार्थकत्वं व्यवहारे उपयोगित्वञ्च। नियतसङ्केतः शब्दः स्वभावादेव तांस्तान् सङ्केतितानर्थान् बोधयति। घटशब्दः कम्बुग्रीवादिरूपे घटार्थे नियतसङ्केतः। अतः स्वभावादेवायं शब्दो यत्र कुत्रचित् प्रयुक्तः सन् घटरूपमर्थं

---

१. शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः। —न्यायसिद्धान्तमुक्तावलिः, पृ० ९९.

बोधयत्येव। अमुनैवाशयेन शब्दार्थयोः सनातनः सम्बन्धो वैयाकरणैः प्रोक्तः। नियतसङ्केतवतः शब्दस्य नियतस्यार्थस्य प्रत्यायने स्वाभाविक्येव योग्यता। नहि साऽन्यथाकृता भवति। यथाग्नावुष्णत्वं सहजम्, तथैवार्थप्रत्यायनयोग्यताऽपि शब्दानां स्वाभाविक्येव। यथोक्तं कौण्डभट्टेन वैयाकरणभूषणसारे—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा॥[1]

## [ज] तत्र वैशेषिकाः

वैशेषिकैः शब्दार्थयोः सामयिकः सम्बन्धः समुपोद्बलितः। तथाहि—शब्दार्थयोः किं संयोगसम्बन्धेनावस्थानम्, उत समवायसम्बन्धेन। नाद्यः। शब्दो घटपटादिरूपो मुखोच्चारितो ध्वन्यात्मा आकाशस्य गुणः तद्बोध्यो घटत्वपटत्वरूपः अर्थो द्रव्यम्। नहि द्रव्यगुणयोः कदापि संयोग-सम्बन्धेनावस्थानं सम्भवम्। प्रत्युत तयोः समवायसम्बन्धेन स्थितिः। यथा 'नीलो घटः' इत्यत्र नीलत्वं गुणः तदाश्रयीभूतो घटो द्रव्यम्, द्रव्याश्रयिणो गुणा इति नियमात्। एवं शब्दे आकाशगुणे तत्प्रत्यायिते अर्थे च द्रव्ये सति न तयोः संयोगसम्बन्धः शक्योपपादः। किञ्च यथा संयोगसम्बन्धे पदार्थानां संयोगजक्रिया प्रतीतिपथमवतरति घटपटयोः संयोगे संयोगजक्रियावत्, न तथा शब्दतदर्थयोः संयोगे काचित् क्रिया दृग्गोचरतामुपयाति। अत आकाशगुणस्य शब्दस्य द्रव्यरूपेणार्थेन सह न संयोगसम्बन्ध। नापि च समवाय-सम्बन्धः। शब्दार्थयोस्तन्तुपटवत्तादात्म्येनावस्थानाभावात्। तादात्म्ये चाभ्युपगते घटशब्दोच्चरिते घटपदार्थस्य मुखे उपस्थितिरपरिहार्या स्यात्। एवं वैशेषिकानां मते शब्दार्थयोः सम्बन्धः सामयिको न नित्यः।

वस्तुतस्तु सामयिक एव शब्दार्थयोः सम्बन्धो यौक्तिकः। सन्त्यनेके घकारौकारादयो ध्वनयः। परं यावत्तेषां तत्तदर्थेषु सम्बन्धो न निर्धारित-

---

१. वैयाकरणभूषम्, पृ० १८८.

स्तावत्तेऽर्थप्रतीतिं नैव कारयन्ति। परं समयबलेनैव ते तांस्तानर्थान् गोचरीकर्तुं प्रभवन्ति । 'अस्माच्छब्दादयमर्थो बोद्धव्य' इति समय-निर्धारणमीश्वरकृतं मानवकृतमित्यन्यदेतत् । मीमांसा-व्याकरण-न्यायादिशास्त्रेषु विषयोऽयं सविस्तरं प्रपञ्चितः। अत्र तु दिङ्मात्रमेव निर्दिष्टमिति तत्सर्वं तत्रैवानुसन्धेयम् ।

## सङ्केतितोऽर्थः

सार्थकानां घटपटादीनां शब्दानां सङ्केतो व्यक्तौ जाताविति महती विप्रतिपत्तिर्दार्शनिकानाम् । 'द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः[1]' इत्याकृतिलक्षणम्, 'असाधारणविशेषा व्यक्तिः[2]' इति व्यक्तिलक्षणं मीमांसकैः प्रोक्तम्। तेषां मतेनाकृतिर्जातावेव पर्यवस्यति। अतस्तयो-र्जात्याकृत्योरैक्यं तेषां मते। तार्किकास्तु 'व्यक्तिर्गुणविशेषाश्रयो मूर्तिः[3]', 'आकृतिर्जातिलिङ्गाख्या'[4], 'समानप्रसवात्मिका जातिः[5]' इति व्यक्त्या-कृतिजातीनां लक्षणमाचक्षते ।

## (क) व्यक्तौ सङ्केतवादिनः

तत्र व्यक्तौ सङ्केतवादिनां मते व्यक्तिरेव शब्दानां प्रवृत्तिनिमित्तम्। तथाहि जातिरमूर्ता तस्यादृश्यत्वात्। 'गामानय', 'गां बधाने'-त्यादिषु वाक्येष्वानयनबन्धनादिकं कार्यकलापं व्यक्तिसंकेतपक्ष एवोपपद्यते, नतु जातिसंकेतपक्षे। अर्थक्रियाकारिता व्यक्तिमवलम्ब्यैव, नतु सामान्यं जातिरूपमर्थम्। नहि दोहनादीष्टसाधनं प्रवृत्तियोग्यत्वम्, श्रृंगाघाताद्य-निष्टसाधनं निवृत्तियोग्यत्वं जातावुपपन्नम् तत्तु गोव्यक्तावेवोपपद्यते।

---

१. पूर्वमीमांसादर्शनम्, १, ३, ९, ३०
२. तत्रैव, १, ३, ९, ३०
३. न्यायदर्शनम्, २, २, ६६
४. तत्रैव, २, २, ६७
५. तत्रैव, २, २, ६८

संकेतग्रहो व्यवहारमात्राधीनः, तदौचित्यञ्च प्रवृत्तिनिवृत्तियोग्यायां व्यक्तावेव। अतः शब्दस्य संकेतो व्यक्तावेवाङ्गीकर्त्तव्यः।

## [ख] व्यक्तौ संकेतविरोधिनः

अयं तावद्व्यक्तिसङ्केतवादी एवं प्रष्टव्यो यत् किं गोपदस्य सङ्केतः सर्वासु भूतासु वर्तमानासु भविष्यन्तीषु गोव्यक्तिषु? तत्र प्रथमे पक्षे आनन्त्यदोषप्रसङ्गः, अन्त्ये पक्षद्वये च व्यभिचारदोषप्रसङ्गः।

(क) तथाहि एकस्माद् गोपदादनन्तानां गोव्यक्तीनां प्रतीतिरसम्भवा असंख्या हि गोव्यक्तयः पुरुषायुषापि परिगणयितुमवशक्याः। नहि भूतानां भविष्यन्तीनां वर्तमानानां गोव्यक्तीनां ज्ञानमेकपदे गोपदाद् सम्भवम्। अतो व्यक्तौ सङ्केतपक्षे व्यक्तीनामानन्त्याच्छाब्दबोधोऽसम्भवः।

(ख) ननु गोशब्दस्यैकस्यामेव गोव्यक्तौ संकेते स्वीकृते सति नानन्त्यदोषप्रसङ्ग इति चेन्न, संकेतितस्यैव शब्दबोध इति नियमभङ्गापत्तेः। गोपदस्यैकस्यां गोव्यक्तावेव संकेते अभ्युपगते, यस्यां व्यक्तौ गोपदस्य संकेतस्तस्या एव शाब्दबोधो नतु तद्भिन्नायाः गोव्यक्तेः। गौरितिशब्दस्य यदि शुक्ले गवि संकेतो नियतस्तर्हि गोपदात्तस्या एव शाब्दबोधो, नतु तद्भिन्नायाः कृष्णाया गोर्बोधः। अतो गोशब्दः प्रयुक्तस्सर्वदा शुक्लां गामेवावबोधयेत्, तस्यामेव गोशब्दस्य सङ्केतात्, नतु तद्भिन्नां कृष्णां, कपिलां, रक्तां वा गाम्। गोशब्दस्य तत्र सङ्केतग्रहाभावात्। एवं गोशब्दस्यैकस्यामेव गोव्यक्तौ सङ्केते स्वीकृते, तस्माच्छब्दात्सङ्केतितेतरगवामप्रतीतिः। तेन गोशब्दात् सङ्केतितशुक्लेतरकृष्णकपिलादीनां गवां सङ्केतग्रहाभावाच्छाब्दबोधाभावापत्तिः। परं गोशब्दात् सर्वासां गवां प्रतीतिः सर्वजनानुभवसिद्धा। अतः सङ्केतितेतरार्थप्रतीतिसम्भवात् सङ्केतितस्यैव शाब्दबोध इति नियमभङ्गापत्तिरेकस्यामेव गोव्यक्तौ सङ्केतपक्षे। किञ्च संकेतनिरपेक्ष एव गोशब्दोऽसङ्केतितं कृष्णकपिलादिगोरूपिणमर्थं यथा बोधयति, तथैवाश्वसिंहव्याघ्रादीनामर्थानामपि प्रतीतिर्गोशब्दादेव भवेत्। महती चेयमव्यवस्था स्यात्। अनिष्टस्याप्यर्थस्य गोपदाच्छाब्दबोधो दुष्परिहरो भवेत्। एवं व्यभिचारभयान्नैकस्यां गोव्यक्तौ सङ्केतो युज्यते।

(ग) तृतीय पक्षे—कासुचिदेव गोव्यक्तिषु सङ्केते स्वीकृते सति कृत-सङ्केतानामेव व्यक्तीनां बोधो नेतरेषामकृतसङ्केतानां व्यक्तीनामित्यन्त्ये पक्षेऽपि तदवस्थ एव व्यभिचारदोषः।

किञ्च व्यक्तिसङ्केतपक्षे 'गौः शुक्लश्चलो डित्थः 'इति विभागकरण-मनुपपन्नं स्यात्। यतः शुक्लचलडित्थानां पदानां सङ्केतविषयो व्यक्तिरूपोऽर्थ एव, अतः शुक्लादीनां पदानां पर्यायत्वात् सहप्रयोगो न स्यात्। अयमाशयः— 'गौः' 'शुक्लश्चलो डित्थः' इति वाक्ये गोत्वरूपा जातिः शुक्लशब्दस्य शुक्लत्वरूपगुणश्चलशब्दस्य चलनरूपक्रिया-डित्थशब्दस्य डित्थ इति नामरूपोऽर्थः प्रतीतो भवति। तेन च गोत्व-जातिमान्, शुक्लत्वगुणवान्. चलनक्रियावान्, डित्थनामायं गौरित्यर्थः पर्यवसितो भवति। अयं चतुर्विधो विभागस्सर्वदाऽनुपपन्नो व्यक्तेरेकत्वाच्चतुर्विधविभागस्य च तत्र कर्तुमशक्यत्वात्। शुक्लचलादि-भिरपि पदैः सैव व्यक्तिर्बोध्या यस्यां गोपदस्य सङ्केतः। अतो गोपदाद्गोभिन्नाऽर्थस्याग्रहणाच्छुक्लादिपदानां घटकलशपदवत् पर्यायमात्रत्वमेव। नहि घटपदेन कम्बुग्रीवाद्यर्थे गृहीते सति, पुनस्तत्रैव कलशपदेन कश्चिल्लाभः। प्रत्युत कलशपदस्य घटपर्यायतया कम्बु-ग्रीवाद्यर्थे तयोः सहप्रयोगोऽवद्य एव। योऽर्थो घटपदप्रयोगेण गृह्यते, असावेव कलशपदप्रयोगेणातो घटकलशयोरेकतरस्यैवोपादानं क्रियते कम्बुग्रीवाद्यर्थं बोधयितुम्। एवं व्यक्तावेव सङ्केते स्वीकृते सति, व्यक्ति-भिन्नार्थे शब्दस्य सङ्केताभावात्, शुक्लचलादीनां घटकलशवत् पर्यायतया सहप्रयोगो न स्यात्। परं दृश्यन्ते शुक्लचलादीनि पदानि वाक्यार्थविदां विपश्चितां व्यवहारसमारूढानि। पर व्यक्तिसङ्केतपक्षे चतुर्विधो विभागः शब्दानां सर्वथानुपपन्नः।[1]

---

१. तथा यदि व्यक्तावेव सङ्केतः स्यात्तदा गौः शुक्लश्चलतीत्यादीनां विषय-विभागो न प्राप्नोति। तावद्विशेषणविशिष्टाया एव गोव्यक्तेः सङ्केतपात्रीकृत-त्वेनैकेनैव शब्देनाभिधीयमानत्वादन्यथा श्रृङ्गसास्नादिवैशिष्ट्येऽपि पृथक् पृथक् शब्दाभिधेयत्वं स्यात्। यदि च विषयविभागं विनाऽप्येकस्मिन्नेव विषये युग-पद् भूयसां शब्दानां प्रवृत्तिः स्यात्तदानीमिन्द्रः शक्रः पुरन्दर इत्यादयोऽपि शब्दाः समकालमेकस्मिन्नेव विषये प्रवर्तेरन्। तस्मान्न व्यक्तौ सङ्केतः।

—अलङ्कारमहोदधिः, पृ० १४.

एवं वैयाकरणमीमांसकतार्किकैर्व्यक्तौ सङ्केतपक्षः सर्वथाः निराकृतः।

## ( ग ) तत्र मीमांसकाः

मीमांसका जातौ शब्दानां सङ्केतमभ्युपगच्छन्ति। यद्यपि गां ददाति, गां प्रतिगृह्णाति, दश गावः, गौर्वधते, कृशा गौः, कपिला गौरिति सार्वजनीनो व्यवहारः, व्यक्तिरूपिणमर्थमवलम्ब्यैव प्रवर्तते, तथाप्यानन्त्यव्यभिचारदोषपरिजिहीर्षया जातौ सङ्केतो न्याय्यः। वेदवादिनां मीमांसकनां मते जाति सङ्केतपक्षे एव 'श्येनचितं चिन्वीत' इत्यादीनि विधिवाक्यानि सङ्गच्छन्ते। इष्टिकाभिः श्येनव्यक्तेश्चयनासम्भवादाकृति( जाति )परकमेव वेदवचनमुपादेयम्। यथोक्तं शाबरभाष्ये—

'आकृतिः शब्दार्थः। कुतः क्रियार्थत्वात्। 'श्येनचितं चिन्वीत' इति वचनमाकृतौ सम्भवति, यद्याकृत्यर्थः श्येनशब्दः। व्यक्तिवचने तु न चयनेन श्येनव्यक्तिरुत्पादयितुं शक्यते इत्यशक्यार्थवचनादनर्थकः। तस्मादाकृतिवचनः[1]।

## ( घ ) तत्र नैयायिकाः

नैयायिकास्तु गोत्वावच्छिन्नगोव्यक्तौ गोशब्दस्य सङ्केतग्रहं मन्यते। न्यायदर्शने 'व्यक्त्याकृतिजातयस्तु पदार्थः[2]' इति सूत्रे 'पदार्थः' इत्येकवचनान्तस्य पदस्यायमेवाशयो यद् त्रिष्वेकैव शक्तिः स्वीकरणीया। अन्यथा 'पदार्थाः' इति बहुवचनान्तेन प्रयोगेण भाव्यम्। एवं मीमांसकैस्तार्किकैश्च यद्यपि जातावेव सङ्केतोऽभ्युपेयते, तथापि तेषां मते अस्ति विशेषः।

## ( १ ) जातौ सङ्केतवादिनो मीमांसकाः

मीमांसकानां मते व्यक्तिर्विशेष्यम्, जातिस्तु विशेषणम्। विशिष्टवस्तुनो ज्ञानं विशेषणसाहाय्येनैव भवति। यथा शुक्लो गौरित्युच्चरिते शुक्लविशेषणं विना न शुक्लगुणविशिष्टस्य गोर्ज्ञानं सुकरम्। तद्वज्जाति-

१. पूर्वमीमांसादर्शनम्, शाबर-भाष्यम्, १, ३, ३३

२. न्यायदर्शनम्, २, २, ६५

ज्ञानमन्तरा व्यक्तिज्ञानं न सुकरम्। अतो विशिष्टाया व्यक्तेर्ज्ञानं विशेषणरूपां जातिमवलम्ब्यैव भवति। तथा सति विशेषणरूपायाः जातेर्ज्ञानानन्तरं विशेष्यव्यक्तेर्भानम्।

## ( २ ) जातिविशिष्टव्यक्तौ सङ्केतवादिनो प्राच्यनैयायिकाः

नैयायिका जातिवादिनां मीमांसकानां मतमित्थं दूषयन्ति। न जातिः पदस्यार्थो भवितुमर्हति। गौर्गच्छतीत्यादौ गोशब्दस्यार्थे जातौ सति, विभक्त्यर्थः, कारकं, लिङ्गं संख्या चेत्यनुपपन्ना भवन्ति। जातेरदृश्यत्वात् विभक्त्यादीनां तत्रान्वयासम्भवात्। अतो न जातिः पदस्यार्थः। नापि गोशब्दो जातिं विशेषणत्वेन व्यक्तिञ्च विशेष्यत्वेन वक्तुमर्हति, अतिभारप्रसङ्गात्। अथमाशयः। गोशब्दः प्रथमं विशेषणत्वेन जातिमभिदधाति, अनन्तरञ्च विशेष्यत्वेन व्यक्तिमितित्युभयत्र शब्दस्याभिधात्री शक्तिरङ्गी कर्तव्या स्यात्। जातिप्रतीत्यां व्यक्तेर्व्यक्तिप्रतीत्यां जातेर्वाक्षेपात्, जातिव्यक्त्युभयार्थबोधाय शब्देऽतिभारो नारोपणीयः। अन्यतरप्रतीत्या अन्यतरप्रतीतिसिद्धेः। शब्दो जातिरूपिणमर्थमेवाभिदधाति, तस्यां चावगतायां तत्सम्बन्धिनो व्यक्तेरवगमः आक्षेपसिद्धः। अतो जातिव्यक्त्युभयार्थविषये शब्दस्य व्यापारोऽतिभारभूत इति जातिसङ्केतवादिनां मीमांसकानां मतं न क्षोदक्षमम्।

एवं जयन्तभट्टादिभिस्तार्किकैर्मीमांसकमतं विदूष्य शब्दः न प्रथमं जातिमनन्तरञ्च व्यक्तिं बोधयति, प्रत्युत साक्षात् जातिविशिष्टव्यक्तिमेवाभिदधातीति शब्देऽतिरिक्तभारानारोपात् तद्वानेवार्थः पदस्य स्वीकृतः। यथोक्तं जयन्तभट्टेन—

अन्येषु तु प्रयोगेषु गां देहीत्येवमादिषु।
तद्वतोऽर्थक्रियायोगात्तस्यैवाहुः पदार्थताम्॥
पदं तद्वन्तमेवार्थमाञ्जस्येनाभिजल्पति।
न च व्यवहिता बुद्धिर्न च भारस्य गौरवम्॥[1]

---

१, ( क ) जयन्तभट्टकृता न्यायमञ्जरी, पृ० २९५

एवं मीमांसकमते प्रथमं जातिरनन्तरञ्च व्यक्तिर्बोधविषयतामुपयाति परं नैयायिकमते उभयत्राभिधात्रीशक्तिस्वीकारगौरवपरिहाराय तद्वत्यां व्यक्तावेव पदस्याञ्जस्येन सङ्केतः।

## ( ङ ) ज्ञानशक्तिवादिनः

ज्ञानशक्तिवादिनां मतं गदाधराचार्येण स्वकीये शक्तिवादाख्ये ग्रन्थे प्रतिपादितम्[1]। ज्ञानशक्तिवादिनां मते शब्दस्य सङ्केतो न जातौ न व्यक्तौ न वा जातिविशिष्टव्यक्तौ, परं ज्ञाने पदानां शक्तिः। अयमाशयः— घटशब्दे उच्चरिते आदौ घटपदस्य शक्तिः घटपदज्ञानपर्यवसायिनी, अनन्तरमभिधया व्यवहारसमारूढाया घटव्यक्तेर्बोधः। घटपदज्ञानपर्यवसायिनीयं घटपदशक्तिर्व्यवहारसमारूढां घटव्यक्ति बोधयितुं न प्रभवतीति कुब्जा। एवं पदस्य वाच्योऽर्थो ज्ञानम्, न घटव्यक्तिः। सर्वथा घटव्यक्तिरूपार्थबोधं प्रति घटपदशक्तिज्ञानं हेतुः। नहि घटव्यक्ते र्बोधो घटपदशक्तिज्ञानमन्तरा भवति। अतो घटपटादिपदानां शक्तिर्घटपटादिज्ञाने विभाव्या। अनन्तरं घटपदशक्तिज्ञाने सति व्यवहारसमारूढाया घटव्यक्तेरभिधया बोधः। यथोक्तं मौनी श्रीकृष्णभट्टेन वृत्तिदीपिकायाम्—

'तथा च गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोत्वविषयकगोपदशक्तिज्ञानं हेतुरित्याहुः[2]।'

---

( ख ) तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति।

—न्यायसिद्धान्तमुक्तावली, पृ० १०५

( ग ) जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता।
जातिमात्रे हि सङ्केताद् व्यक्तेर्भानं सुदुष्करम्॥

—शब्दशक्तिप्रकाशिका, पृ० १९।

१. शक्तिवादः, पृ० १७.

२. वृत्तिदीपिका, पृ० ७.

## ( च ) तत्र बौद्धाः

सौगतानां मते पदानां सङ्केतितोऽर्थोऽपोहरूपः। तन्मते न जातौ सङ्केतो न वा व्यक्तौ परमपोहः सङ्केतितोऽर्थः पदस्य। आपोहो हि नाम तदितरव्यावृत्तिः। यथा हि—घटशब्दस्यार्थे ज्ञातव्ये सति तच्छब्दो घटपरामर्शकः। तस्मात् घटादितरे सर्वेऽपि सांसारिणः पटादयः पदार्थाः, तेभ्यो व्यावृत्तिरित्यपोहः। एवं गोपदेन सर्वासां गोव्यक्तीनां बोधः। तस्मादितरेऽश्वगर्दभादयः, तेभ्यो व्यावृत्तिर्यत्र सोऽपोहो गोत्वरूपार्थेतरव्यावृत्तिः इति बौद्धानां धियाऽपोहः सङ्केतितोऽर्थः शब्दस्य। यथोक्तं भट्टवामनाचार्येण काव्यप्रकाशस्य बालबोधिन्यां टीकायाम्—

'गोशब्दश्रवणात् सर्वासां गोव्यक्तीनामुपस्थितौ अतस्मादश्वादितो व्यावृत्तिदर्शनादतद्व्यावृत्तिरूपोऽपोहो वाच्य इति बौद्धानां मतिः[1]।'

## ( छ ) तत्र वैयाकरणाः

वैयाकरणानां मते शब्दस्य सङ्केतो न जातौ, न वा जात्याकृतिविशिष्टव्यक्तौ, प्रत्युत व्यक्तेरुपाधौ। वैयाकरणानां मतमिदं महाभाष्यकारस्य पतञ्जलेः 'चतुष्टयी शब्दानां प्रवृत्ति'-रिति वचनमुपजीव्य प्रवर्त्तते। यद्यपि व्यवहारे व्यक्तेरुपयोगिता सर्वथा प्रत्यक्षम्, तथापि तस्या व्यक्तेरुपाधौ ( धर्मे ) जात्यादावेव सङ्केतः स्वीकार्यः। गोपदेन ज्ञातो गौर्न-

---

1. बालबोधिनीटीका, पृ० ३८:—



केवलं जातिरूपोऽपितु शुक्लादिगुणवान् , चलनादिक्रियावान्, डित्थादिनामवान् प्रतीतिपथमवतरति। अतो जातिगुणक्रियायदृच्छाशब्देषु व्यक्तेरूपदाधिषु पानां सङ्केतोऽभ्युपेयः। तथा सति द्रव्यगुणविषयविभागकरणमपि न विरुध्यते।

उपाधिर्द्विविधः। (१) वस्तुनि समवेतो धर्मो जातिगुणक्रियारूपः। (२) वक्त्रा यदृच्छया च व्यवहारसौकर्यार्थं डित्थकपित्थादिरूपेण गोवृषभाश्वादिषु वस्तुषु समारोपितः। गवि गोत्वशुक्लत्वचलनादयो जातिगुणक्रियारूपा उपाधयः स्वतः सिद्धाः, परन्तु डित्थकपित्थादयो व्यपदेशा लोकैर्व्यवहारसौकर्यार्थं सन्निवेश्यन्ते। इत्थमुपाधिर्द्विविधः। वस्तुधर्मरूपः वक्तृयदृच्छासन्निवेशितश्च। वस्तुधर्मोऽपि द्विविधः। सिद्धः साध्यश्च। प्रथमः सिद्धः ( जातिः ) पदार्थेऽश्ववृषभादौ प्राणाधायको जातिरूपः, येन गवादीनां गोत्वमुपपन्नम्, अश्वादितश्च तद्व्यावृत्तिः। द्वितीयः सिद्धः ( गुणः ) विशेषाधानहेतुर्धवलकृष्णपिङ्गलाख्यो वस्तुधर्मो येन जातिर्विशिष्यते। यथा गोपदस्य गोत्वे अर्थे गोत्वं तु प्राणप्रदः सिद्धो वस्तुधर्मः। परं तत्रैवोपलभ्यमानः कृष्णधवलत्वादिको गुणो गोत्वरूपायां जातौ विशेषतामादधाति। अत एवायं विशेषाधानहेतुरुच्यते। साध्यो वस्तुधर्मो क्रियारूपो यदृच्छात्मकश्च। साध्यत्वञ्चोत्पाद्यमानत्वम्। गोत्वरूपजातिमत्यां शुक्लादिसिद्धगुणवत्यां गवि चलनचर्वणदोहनादिक्रिया उत्पाद्याः, अतस्तासां साध्यत्वम्। एवमेव डित्थकपित्थादीनां व्यपदेशानां सन्निवेशश्चापि न पूर्वसिद्धः परं वक्त्रारोपितः। अतस्तस्यापि साध्यत्वमुपपन्नम्। इत्थं वैयाकरणानां मते गोत्वजातौ, शुक्लादिशब्दस्य च गुणे चलतीत्यादिपदस्य क्रियायां, डित्थादिपदानाञ्च नाम्नि सङ्केते सति, व्यक्तेरुपाधिषु सङ्केतो न्याय्यः। तेन च चतुष्टयी पदानां प्रवृत्तिरिति भाष्यग्रन्थस्य सङ्गतिर्युज्यत इति वैयाकरणाः।

आलङ्कारिकैर्विवादास्पदे विषये शाब्दिकानामेव मतमवलम्बितम्। अत एव वैयाकरणानां मतं व्याकुर्वता मम्मटभट्टेन जात्यादिपक्षे एव स्वकीयः प्रत्ययः प्रदर्शितः

### (ज) मीमांसकधिया शाब्दिकानुमतोपाधिपक्ष-प्रत्याक्षेप :

शुक्लपाकडित्थानां गुणक्रियायदृच्छाशब्दानामपि जातिरेव सङ्केति-

तोऽर्थ इति व्यवस्थापयद्भिर्जातिवादिभिर्मीमांसकैर्वैयाकरणाना मुपाधिपक्षः प्रत्याख्यायते । तेषामयमाशयः—हिमपयःशङ्खादिषु विद्यमानं शुक्लत्वं सामान्यं यद्वशाद् हिमं शुक्लं पयः शुक्लमिति व्यवहारः । भिन्नेष्वभिन्नाधानप्रत्ययोत्पत्तिः सामान्यमिति जातिलक्षणमभियुक्तैर्मीमांसकैः प्रोक्तम् । तल्लक्षणमत्र शुक्लादिषु गुणेषु सङ्गच्छते । परस्परं विभिन्नेष्वपि हिमपयसादिपदार्थेषु विद्यमानं शुक्लत्वं जातिरूपेण समानमभिन्नप्रत्ययहेतुकम् । नहि हिमगतं शौक्ल्यं पयोगताच्छौक्लाद् भिद्यते । तच्छुक्लत्वस्य सामान्यस्य सर्वेषु शुक्लेषु पदार्थेषु समानभावेन व्याप्तत्वात् । अतः शुक्लगुणस्य भिन्नेष्वभिन्नाधानप्रत्ययहेतुत्वाज्जातिरूपमव्याहतम् । अनया दिशा पाकादीनामपि जातित्वमविरुद्धम् । गुडतण्डुलादीनां पाकः पाकत्वेन सामान्यं, न व्यक्तिधर्मी प्रत्युत य एव गुडस्य पाकः स एव तण्डुलानाम् । तयोः पाके न कोऽपि विशेषः । पाकत्वस्य सर्वत्र पाके समानभावेन व्याप्तत्वात् । अतो व्यक्तेरूपाधीनामपि जातिरूपत्वाज्जातावेव संकेतो न्याय्यो नोपाधाविति मीमांसकाः ।

## (झ) वैयाकरणमतपरिपोषका आलङ्कारिकाः

सिद्धान्ते त्वालङ्कारिकाः शाब्दिकानामेव मतं पुष्णन्ति । गुणक्रियायदृच्छाशब्दा वस्तुतो न जातिरूपाः परमेकरूपाः । यत्तेषां भेदस्तदाश्रयभेदहेतुक एव । शुक्लो गुणस्त्वेकः । परमसौ हिमपयःशङ्खाद्याश्रयेषु यद्भिन्नत्वेन प्रतीयते, तदाश्रयभेदादेव । यथैकं मुखं खड्गमुकुरतैलाद्यालम्बनभेदाद्भिन्नं लक्ष्यते, परं पारमार्थिकं तु मुखस्यैकत्वमेव । तद्वदत्रापि द्रष्टव्यम् । अनया दिशा क्रियायदृच्छाशब्दानामपि जातित्वं प्रत्युक्तं भवति । तथाहि गुणवद् पाकोऽप्येक एव व्यक्तिधर्मी । परं स एव पाको गुडतण्डुलाद्याश्रयभेदाद्भिन्नो भासते, येन जातित्वभ्रमो मीमांसकस्य । परमार्थतस्तु पाकस्यैकत्वं खड्गमुकुरतैलादिषु प्रतिबिम्बितमुखवत् । अत उपाधिरेव शब्दानां संकेतितोऽर्थ इति वैयाकरणानां मतमेव साम्प्रतमित्यालङ्कारिकाणां सिद्धान्तः ।

इत्थं शब्दानां संकेतितोऽर्थो जातिरिति जरन्मीमांसकैः जात्यवच्छिन्नव्यक्तिरिति नैयायिकैः, जातिगुणक्रियादयो व्यक्तेरुपाधिरिति शाब्दिकैः,

अपोहोऽतद्व्यावृत्तिरूप इति सौगतैः, पदज्ञानमिति च कुब्जशक्तिवादिभिः सम्प्रतिपन्न इति सर्वं स्पष्टं प्रतिपादितम् ।

## शक्तिग्रहविचारः

अथ शक्तिग्रह सम्बन्धीविचार उपस्थाप्यते। अस्मिन् विषये अष्टौ शक्तिग्रहस्य प्रयोजकानि प्रोक्तानि । तद्यथा—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।[1]

१. वाक्ये प्रयुक्तानां पदानां प्रकृतिप्रत्ययादिज्ञानं व्याकरणनिबन्धनम्, अतो व्याकरणं शक्तिग्राहकम् ।

२. उपमानेन शक्तिग्रहो यथा गोसदृशो गवयः । अत्रोपमानवशाद् गवाकारकं गवयं दृष्ट्वा गवयधीर्भवति ।

३. कोशेन यथा बिडौजेति पदस्यार्थे 'इन्द्र' इति कोशं पर्यालोच्य ज्ञानं भवति ।

४. आप्तवाक्येन यथा कोकिलः पिकपदवाच्य इत्याप्तवचनात् पिकपदस्य कोकिल इत्यर्थो बालेनावगम्यते ।

५. व्यवहारेण यथा प्रयोजकवृद्धेन गामानयेत्युक्तम् । तच्छ्रुत्वा प्रयोज्यवृद्धेन गौरानीतः । तदवधार्य पार्श्वस्थो बालो गवानयनादिकार्यं गामानयेति शब्दप्रयोज्यमिति निश्चिनोति। इत्थं गोपदस्य गोत्वरूपेऽर्थे शक्तिरिति प्रयोजकप्रयोज्यवृद्धव्यवहाराद् बालोऽवधारयति ।

६. वाक्यशेषाद्यथा 'यवमयश्चरुर्भवति' । अत्र द्व्यर्थकस्य यवपदस्य दीर्घशूके शक्तिग्रहः । अथान्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति इति वाक्यशेषाद् द्व्यर्थकस्य यवशब्दस्य दीर्घशूके शक्तिर्निश्चीयते न कङ्गौ । यवपदं दीर्घशूकविशिष्टेऽर्थे आर्याः प्रयुञ्जन्ति, कङ्गौ तु म्लेच्छाः। परंवाक्यशेषवशाद्दीर्घशूके शक्तिः ।

---

१. न्यायासिद्धान्तमुक्तावली, पृ० १००

७. *विवृतेर्यथा*—घटोऽस्तीत्यस्य कलशोऽस्तीत्यस्माद्विवरणात् घटपदस्य-कलशार्थे शक्तिग्रहः। अत्र घटपदार्थस्तत्पर्यायवाचिना कलशशब्देन विवृतः। अतो विवृतिवशाद् घटपदार्थस्य कलश-शब्दमहिम्ना ज्ञानम्।

८. *सिद्धपदसान्निध्याद्यथा*—'मधूनि मधुकरः पिबति'। अत्र मधुपदस्य नानार्थकस्य शक्तिः पुष्परसे न मदिरायां मधुकर इति पदसान्निध्यात्। एवं प्राधान्येनाष्टधा शक्तिग्रहो भवति।

## अभिधा-स्वरूपम्

व्याकरणकोपादिशक्तिग्राहकैः पदस्य शक्तिः संकेतितार्थे जात्यादि-रूपे। असौ शक्तिरभिधेति नाम्ना प्रामाणिकैर्विवेचिता। तल्लक्षणं मम्मटभट्टेन कृतम्—

स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते[1]।

अभिधा शब्दस्य प्रथमा शक्तिर्मुख्यार्थविषयिणी। सङ्केतितोऽर्थो मुख्योऽर्थः। मुखमिव मुख्यः। शब्दाज्जात्यादिरूपोऽर्थ एव प्रथमं गृह्यते, अतस्तस्य मुखमिव मुख्यत्वम्। यथा हस्तपादादिभ्य इन्द्रियेभ्यः पूर्वं मुखं व्यक्तं भवति, तथा लक्ष्यव्यंग्यार्थेभ्यः पूर्वं शब्दस्य योऽर्थो गृह्यते, तस्य मुख्यत्वम्। येन शब्देन मुख्योऽर्थोऽभिधीयते, असौ वाचकः शब्दः। यथा घटपटादिः। वाचकाच्छब्दात् सङ्केतितं वाच्यमर्थं बोधयन्ती शब्दस्य शक्तिरभिधा। शब्दाद्योऽर्थोऽवबुध्यते तद्बोधिकया शक्त्यापि कयाचिद् भाव्यम्। नहि शक्तिनिरपेक्षश्शब्दोऽर्थं बोधयितुं प्रभवति। असौ शक्तिरभिधेति नाम्ना व्यपदिष्टा विपश्चिद्भिः। अतो वाचकशब्दा-द्वाच्यमर्थं बोधयन्ती शब्दस्य शक्तिरभिधेति तल्लक्षणं पर्यवसन्नम्भवति[2]।

वयं त्वित्थं प्रतीमो यच्छब्दार्थयोः यः पारस्परिकः सम्बन्धः स एवा-भिधेति नाम्ना व्यपदिश्यते। तत्सम्बन्धवशादेव शब्दोऽर्थं बोधयति।

---

१. काव्यप्रकाशः, २, ८.

२. तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा—साहित्यदर्पणः, २,४.

वयं त्वित्थं प्रतीमो यच्छब्दार्थयोः यः पारस्परिकः सम्बन्धः स एवाभिधेति नम्ना व्यपदिश्यते। तत्सम्बन्धवशादेव शब्दोऽर्थं बोधयति। अयमेव सम्बन्धः शब्दस्य शक्तिः। सा एवाभिधेति नाम्ना संज्ञप्यते। सङ्केतितार्थप्रत्यायिकेयं शक्तीरूढियोगयोगरूढिश्चेति त्रिधा प्रोक्ता।

अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिरितिरूढिलक्षणम्[1]। मणिनूपुरादिशब्दाः रूढाः। न हि शब्दानामेषां कश्चिद्यौगिको व्युत्पत्तिलभ्योऽर्थः प्रतीतिपथमवतरति। प्रत्युत अवयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण शक्तेभ्यः पदेभ्यो नूपुरादिभ्योऽर्थज्ञानम्। अतो नूपुरादिशब्दा रूढाः।

अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः[2]। यथा पाचकादिपदम्। अत्र पचतीति पाचक इत्यवयवार्थो बुध्यते, अतः पदमिदं यौगिकम्।

अवयवसमुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः[3]। यथा पङ्कजादिपदम्। अत्रावयवसमुदायशक्त्योरुभयोर्दर्शनाद्योगरूढित्वं पङ्कजपदस्य। पङ्काज्जायत इति पङ्कज एष योगलभ्योऽर्थः। पङ्कस्य पङ्काज्जन्मतः। परं पङ्कजं सर्वं वस्तु नहि पङ्कजपदवाच्यम्। अतः समुदायशक्त्या पङ्कजपदस्य कमलरूपिण्यर्थे रूढिः। अवयवसमुदायसंवलितशक्तिलभ्यः पद्मरूपोऽर्थः पङ्कजपदस्य योगरूढोऽर्थः।

केचिद् यौगिकरूढं चतुर्थीं विधामपि समामनन्ति[4]। तद्यथा—उद्भिदादिपदम्। अत्र उद्भिद्पदस्य योगलभ्योऽर्थ उद्भेदनकर्तृ तरु-

---

१. वृत्तिवार्तिकम्. पृ० १.

२. तत्रैव, पृ० २.

३. तत्रैव, पृ० २.

४. यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्। यथोद्भिदादिपदम्। तत्र हि उद्भेदनकर्त्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति। —सिद्धान्तमुक्तावलिः पृ० १०६.

गुल्मादिः। यागविशेष इत्ययौगिकः अर्थोऽपि पदस्यास्य प्रतिभासते, अत उद्भिद् इति पदस्य यौगिकत्वं रूढत्वञ्चेत्युभयमप्युपपन्नम्।

इत्थं प्राधान्येनाभिधायास्त्रिविधत्वमेव[1]। रूढयोगयोगरूढभेदात्। परमश्वगन्धादीनां पदानां सद्भावाद् यौगिकरूढश्चतुर्थः प्रकारोऽप्यभिधायाः सम्प्रतिपद्यते शब्दशक्तिविद्भिः।



---

१. सेयमभिधा त्रिधा। केवलसमुदायशक्तिः, केवलावयवशक्तिः, समुदायावयवशक्तिसङ्करश्चेति। —रसगंगाधरः, पृ० १२७.

# योगदर्शने परिणामवादः

कु० विमला कर्नाटकः

जागतिके उपादानकारणे भारतीयदार्शनिकानां नैकमत्यमुपलभ्यते। तेन सृष्टिः स्वोपादानकारणेन सह कथं कारं सम्बन्धमुपयातीत्यत्रापि दार्शनिकानां मतभेदो दरीदृश्यते। अतएव भारतीयेषु दर्शनेषु विविधाः सृष्टिवादाः समुपलभ्यन्ते। तथाहि —

क्षित्याद्युपादानानां संघातः सृष्टिरिति मन्यमाना, स्ताथागताः संघातवादिन इत्युच्यन्ते। अक्षपादकाणाददार्शनिकानां मते जगदुपादान-कारणं परमाणुर्भवति। अनेकेषां परमाणूनां समूह एव कार्यमारभते। अत इमावारम्भवादिनाविति प्रसिद्धिः। ब्रह्मणः अतात्त्विकपरिणामरूपं जगदिदमित्युद्घोषयन् अद्वैतवेदान्ती विवर्तवादीति कीर्त्यते। अथ च प्रपञ्चोऽयं अविद्यावशात् तत्कालं सृज्यमानोऽस्तीति कीर्तयन् वेदान्तैक-देशी दृष्टिसृष्टिवादीति निगद्यते। प्रत्यभिज्ञादर्शनाचार्यस्याभिनवगुप्तस्य सम्प्रदाये सृष्टिविचारोऽयं प्रतिबिम्बवादाभिधया प्रचलितोऽस्ति। तस्य मते जगतः कारणं ब्रह्म वर्तते, किन्तु न तत् परिणामात्मकं विवर्तात्मकं वा वर्तते। नापि ब्रह्मणः सकाशादारम्भोऽस्य जगतः संजातः, किन्तु ब्रह्मण्यन्तर्भूतं जगत् प्रतिबिम्बात्मना अक्षीलक्ष्यतामुपैति। तथैव जगदिदं प्रकृतेर्यथार्थपरिणामरूपं अभिदधानः सांख्ययोगाचार्यः परिणामवादीति जेगीयते। सांख्ययोगदर्शनयोः परिणामवाद एव प्रमुखतरो विषयः।

अस्मिन् परिणामवादे—महत्तत्त्वं प्रकृतेः साक्षात् परिणामः, अहं-कारश्च महतः साक्षात् परिणामः, एकादशेन्द्रियाणि पञ्चतन्मात्राश्चेति अहंकारस्य साक्षात् परिणामः, अथ च पञ्चमहाभूतानि च पञ्च-तन्मात्राणां साक्षात् परिणाम इति सांख्ययोगजगति प्रसिद्धम्। इमान्येव परिगणितानि तत्त्वानि सांख्ययोगदर्शने विद्यन्ते। इमानि तत्त्वानि तावत् चतुर्विंशतिसंख्याकानि भवन्ति[1]। किन्तु सांख्ययोगसम्मतः परि-

---

१. प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि॥ (सांख्यकारिका, सं. २२)

णामवादः न तावत् चतुर्विंशतितत्त्वेष्वेव सीमितः अपितु परिणामशीलानां तत्त्वानां कार्यरूपेण परिणतानि पञ्चभूतान्यपि तत्परिणामरूपाण्येव सन्ति। तानि पंचमहाभूतानि घटपटाद्यनन्तरूपैः परिणतानि भवन्ति। सांख्ययोगयोः अभिहिता चतुर्विंशतितत्त्वेषु या कार्यकारणपरिणामपरम्परा, सा पंचमहाभूतेभ्यो भूयमानायाः विकासपरम्पराया भिन्नैवावगन्तव्या। पञ्चमहाभूतानि न हि तत्त्वान्तराणामुपादानकारणानि[2],किन्तु प्रकृत्यादीनि तत्त्वानि, तत्त्वान्तराणामुपादानकारणानि पूर्वं निर्दिष्टान्येव। अतएव पार्थिवं मृत्पिण्डस्य क्षीरस्य वा क्रमशो घटाकारेण दध्याकारेण वा परिणतेः पश्चादेव तत्तदुपादानकारणानां मृत्पिण्डादीनां घटादिकार्येष्वनुस्यूतानां अनुमितिर्भवति। तत्तत् कारणानां न हि कश्चन स्वतन्त्र आकारो दृष्टिमुपैति। अर्थात् मृत्पिण्डः घटान्, पयश्च दध्नः सकाशात् पार्थक्येन प्रतीतिं नोपयाति। किन्तु अहंकारोत्पादकं कारण महदादि स्वीये कार्येऽनुस्यूतमपि न हि स्वस्वरूपात् प्रच्यवति। अर्थात् पार्थक्येन कार्यकारणयोः प्रतीतिर्भवति। तस्मात् महदादीनामहंकाराद्यात्मनः परिणामो मृत्पिण्डादीनां घटाद्यात्मनः परिणामतो भिन्न इति स्तुस्पष्टं सिध्यति।

तत्त्वान्तरोपादानपरिणामापेक्षया अन्योऽप्येकविधः परिणामः महदादिपदार्थानां भवति। यः वृत्तिरिति कथ्यते। यथा[3] बुद्धेः अध्यवसायात्मकः परिणामः, अहंकारस्य अभिमानात्मकः परिणामः, मनस उभयात्मकः परिणामः, इन्द्रियाणां आलोचनात्मकः परिणामः सर्वोऽप्ययं परिणामो वृत्तिशब्देनाभिधीयते। एतस्माद् द्विविधात् परिणामात् अतिरिक्तः, अन्योऽप्येकः परिणामोऽस्ति यः पदार्थाभिव्यक्ते ज्ञानाभि-

---

२. यद्यपि च पृथिव्यादीनां गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयः, तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरम्। —( सांख्यतत्त्वकौमुदी )

३. अध्यवसायो बुद्धिः—सां. का. सं २३, अभिमानोऽहङ्कारः···सां. का. सं. २४, उभयात्मकमत्र मनः···सां का. सं. २७, रूपादिषु पञ्चानामालोचमात्रमिष्यते वृत्तिः—सां. का. सं. २८।

व्यक्तेश्च हेतुर्न भवति, यश्च महदादिषु समस्तेषु पदार्थेष्वनुपलभमानः सन् मूलकारणभूतायां प्रकृतौ महाप्रलयसमय एव उपलब्धो भवति। स चैष परिणामः सरूपपरिणामशब्देनोच्यते। सरूपपरिणामकाले प्राकृताः सत्त्वादयो गुणाः स्वैः स्वैः रूपैः परिणमन्ते। अर्थात् सत्त्वं सत्त्वरूपेण, रजो रजोरूपेण, तमस् तमोरूपेण परिणतं भवति। मूलप्रकृतेः सरूपपरिणामः तावद् भवति यावत् तया सह पुरुषसंयोगो न भवति। पुरुषसंयोगक्षणादेव सरूपपरिणामशीलेषु गुणेषु संक्षोभापरपर्यायो विरूपपरिणामो भवति। तदानीं तेषु प्रत्येकं स्वस्वेतरौ गुणौ विमर्दयितुं प्रयतमानं भवति। येन विमर्दविमर्दकभावापन्ना त्रिगुणा प्रकृतिः सृष्ट्यात्मकं परिणाममारभते।

निर्दिष्टोऽयं परिणामप्रकारः सांख्ययोगनिर्वचनपरेषु समस्तेष्वपि ग्रन्थेषु तत्तदाचार्यैः प्रतिपादितोऽस्ति। किन्तु भगवता पतंजलिना समाधेर्विभिन्नावस्थासु वर्तमानानां विविधानां चेतसः परिणामानां स्वरूपप्रतिपादनाय प्रकृतेः भूतेन्द्रियादिरूपेण त्रयः परिणामा अपि प्रतिपादिताः। ये धर्मलक्षणावस्थापरिणामशब्दैरुच्यन्ते[४]। परिणामो नाम, अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः।[५]

## धर्मपरिणामः

तत्र धर्मपरिणामो नाम धर्मवशात् धर्मिणि उत्पद्यमानं रूपान्तरं, धर्मिणि धर्मपरिणाम इत्युच्यते[६]। सांख्ययोगदर्शने यद्यपि धर्मधर्मिशब्दौ कार्यकारणवाचकौ भवतः। तथाप्यत्र कार्यशब्देन कारणस्य तत्त्वान्तरं रूपं न गृह्यते। एवं कारणशब्देनापि 'तत्त्वान्तरं न गृह्यते। अन्यथा धर्मपरिणामस्तत्त्वान्तरपरिणामश्च उभावपि कारणस्य तुल्यकार्यावस्थाया

४. एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थपरिणामाः व्याख्याताः—यो. सू. सं. ३।१३

५. अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः—
( व्यासभाष्यम्, पृ. ५६२ )

६. अवस्थितस्य धर्मिणः पूर्वधर्मतिरोभावे धर्मान्तरप्रादुर्भावस्यैव धर्मपरिणामत्वम्—( योगवार्तिकम्, पृ० २९४ )

वाचकौ स्याताम्। किन्तु न ह्येतत् शास्त्रसम्मतम्। एतावता शक्यते वक्तुमिदं—यत् कारणात् भूयमाना तत्त्वान्तरभिन्ना कार्योत्पत्तिरेव धर्मिणो धर्मपरिणामः। यथा पृथिव्यादिभूतानां गोघटवृक्षादिरूपेण धर्मपरिणामो भवति।[७] इन्द्रियादिधर्मिणां तथा नीलपीतादिविशिष्ट-घटादिपदार्थानामालोचनात्मको धर्मपरिणामो भवति[८]।

अस्मिन् धर्मपरिणामप्रसङ्गे[९] धर्मधर्मिभावसंबंधो निश्चितो नास्ति। अपितु स्वकारणदृष्ट्या यो धर्मोऽस्ति स एव स्वकार्यदृष्ट्या धर्मी अपि भवति। यथा मृत्तिकातःघटाकारपरिणामयोर्मध्ये भूयमानेषु अवान्तर-परिणामेषु धर्मधर्मिसम्बन्धः परिवर्तितः सन् इत्थं दृष्टिगतो भवति। तथाहि—सर्वप्रथमं मृत्तिकायाः चूर्णाकारपरिणामः तदनन्तरं चूर्णमृदः पिण्डाकारपरिणामः, तदनन्तरं पिण्डमृदः कपालाकारपरिणामः, तदनन्तरं कपालमृदः घटाकारपरिणामो भवति।

धर्मपरिणामो धर्मिणो भावान्यथात्वे हेतुरस्ति, न खलु द्रव्यान्य-थात्वे हेतुः। सुवर्णादिपदार्थानां स्वस्तिककुण्डलादिरूपेण यो विविधो धर्मपरिणामो भवति तेन धर्मिणः सुवर्णस्य स्वरूपतो न नाशो भवति। अर्थात् सुवर्णमसुवर्णं न भवति।[१०] यदि धर्मपरिणामः धर्मिणो द्रव्या-न्यथात्वे हेतुर्भवेच्चेत्, सांख्ययोगसम्मतानां पदार्थानां परिणाम-शीलतायाः सिद्धान्तो बौद्धानां क्षणिकवादसिद्धान्तेन तुल्य एव भवेत्। स

---

७. तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामो—
(त. वै., पृ. २९७)

८. एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामः—
(त. वै., पृ. २९७)

९. तत्र तेषु परिणामेषु मध्ये धर्मिणि सत एव धर्मस्यातीताद्यवस्थासु धर्मिणो भावान्यथात्वं = धर्मान्यथात्वमेव भवति न द्रव्यान्यथात्वम्—
(योगवार्त्तिकम्, पृ० २९८)

१०. सुवर्णादेर्यथा भाजनस्य रुचकस्वस्तिकव्यपदेशो भवति, तन्मात्रमन्यथा भवति, न तु द्रव्यं सुवर्णमसुवर्णतामुपैति अत्यन्तमेदाभावात्—
(त. वै., पृ. २९८)

च शास्त्रकाराणां कदापि नाभीष्टः स्यात्। अथ च 'स एव घटः' इत्याकारिका प्रत्याभिज्ञाऽपि न भवितुं शक्नुयात्।[11] अतः सांख्ययोगदर्शने धर्मपरिणामः भावान्यथात्वशब्देन कथ्यते। न हि कदापि धर्मिणः द्रव्यान्यथात्वशब्देन। किञ्च तत् भावान्यथात्वं नाम धर्मिणः सुवर्णादेर्धर्मस्य भाजनादेरभिभवं कुर्वतः कटकाधिधर्मेणाविर्भावनमेव[12]। तथा प्रत्यभिज्ञया कटककुण्डलरुचकादिसर्वेषु विकारापरपर्यायधर्मेष्वनुगम्यमानस्य सुवर्णसामान्यस्य सिद्धिर्भवति। तच्च सुवर्णसामान्यं अवयविरूपमस्ति।[13] एतावता सिद्धमिदं भवति यत् धर्मपरिणामद्वारा धर्मिण एव आकृत्यन्तरं भवति।

सर्वेष्वपि स्वधर्मेषु अन्वितोऽयं धर्मी न हि पुरुषवत् कूटस्थनित्य इति वक्तुं शक्यते। यः स्वरूपेण धर्मतश्च नित्यो भवति स एव ऐकान्तिको नित्यो भवति। सैव ऐकान्तिकी नित्यता कूटस्थता विद्यते,[14] या चितिशक्तिं विहाय धर्मात्मना नित्यत्वशून्येषु मृत्तिकादिधर्मिषु नोपलभ्यते। यथा मृत्तिकादिधर्मिणा घटादयो धर्माः जलाहरणाद्यर्थक्रियायां सर्वदैव समर्था न भवन्ति, तेन मृत्तिकादीनां धर्मिणां धर्मद्वारा अनित्यत्वं सिध्यति। अतः चितिशक्तिवत् ते धर्मिणः कथं नाम कूटस्थनित्या वक्तुं शक्यन्ते।

मृत्तिकादीनां धर्मिणां धर्मतः विनाशकथनेन तेषु गगनारविन्दशशशृङ्गादीनामेव ऐकान्तिकी अनित्यता न सम्भवति। धर्मिणो धर्मस्य स्वरूपो नाशाभावात्। अपितु ते धर्मिणः अतीताद्यवस्थास्वव्यक्तरूपेण

---

११. स्वरूपान्यथात्वे हि प्रतिक्षणं परिणामेन क्षणिकताऽऽपत्त्या प्रत्यभिज्ञाऽऽद्यनुपपत्तिः—( यो. वा., पृ. २९८ )

१२. सुवर्णस्य भावान्यथात्वं भाजनादिरूपधर्मापाये कटकादिधर्माभिव्यक्तिः— ( योगवार्तिकम्, पृ० २९८ )

१३. प्रत्यभिज्ञाबलेन च सुवर्णसामान्यस्य सर्वविकारानुगतस्य सिद्धिः तत्सामान्यं चावयविरूपो धर्मीति—( योगवार्तिकम्, पृ० २९८ )

१४. एकान्तेन सर्वथा स्वरूपतो धर्मतश्च नित्यत्वमेव कौटस्थ्यमस्माभिरप्युपेयते तच्च चितिशक्तिरेव न तु धर्मरूपेणानित्यस्य धर्मिण इत्यर्थः— ( यो० वा०, पृ० २९९ )

तिष्ठन्ति।[१५] किञ्च सर्वथा तुच्छपदार्थस्य कदाचिदपि कस्यापि प्रत्यक्षं न भवति।[१६] नापि च तस्मिन्नर्थक्रियाकारित्वशक्तिः दृश्यते। किन्तु पुरोवर्तिनः पदार्थाः समये समये अर्थक्रियाकरणसमर्था दृश्यन्ते। अत एकस्यैव धर्मिणः नानाविधधर्मपरिणामवशात् स धर्मो शशशृङ्गादीनामिव एकान्तेन नानित्या भवितुमर्हति। एवं धर्मिणः धर्मपरिणामस्य व्याख्यानसाङ्गोपाङ्गं व्यासभाष्यतत्त्ववैशारदीयोगवार्तिकयोगसिद्धान्तचन्द्रिकासु तथा नागेशकृतबृहद्योगसूत्रवृत्तावप्युपलभ्यते। इत्थं च धर्मपरिणामः सविस्तरमुपपादितः।

## लक्षणपरिणामः

'लक्ष्यते भिद्यतेऽनेन इति लक्षणम्' इति व्युत्पत्त्या लक्षणपरिणामशब्देन कालविशिष्टस्य यस्य कस्यापि वस्तुनः अन्यकालस्थितैर्वस्तुभिर्भेदो लक्ष्यते। धर्मपरिणामवत् लक्षणपरिणामोऽपि धर्मिणो न भूत्वा धर्मस्यैव भवति। अतः पुरोदृश्यमाने घटपटादिधर्मे अनागतादिलक्षणपरित्यागपुरस्सरं वर्तमानादिलक्षणस्य प्राप्तिरेव लक्षणपरिणामशब्देनाभिधीयते[१७]। अत्र लक्षणशब्देन कालो बोद्धव्यः।

अस्य लक्षणपरिणामस्यापि कालभेदेन त्रयः प्रकारा भवन्ति।[१८] तथाहि-प्रथम अनागतलक्षणपरिणामः, द्वितीयो वर्तमानलक्षणपरिणामः, तृतीयो अतीतलक्षणपरिणाम इति। मृत्तिकादिधर्मिणां घटादिधर्मेषु उपर्युक्तेनाऽनागतादिक्रमेण लक्षणपरिणामो भवन् विज्ञायते। यथाहि-मृत्तिकादिधर्मिणी घटादिधर्मा अव्यक्ततया तिष्ठन्ति। यदा मृत्तिकाया घटाकारेण परिणामः ( धर्मपरिणामः ) भवति, तदा धर्मो घटः स्वीयान् अनागतावस्थां परित्यज्य वर्तमानावस्थामाप्नोति। इत्थं धर्मेण घटेन

---

१५. नित्यत्वप्रतिषेधादतीतमपि सूक्ष्मरूपेणास्ति नात्यन्तमुच्छिद्यते—
( नागेशकृत-वृ० यो० सू० वृ०, पृ० ३२४ )

१६. यत् तुच्छं न तत् कदाचिदप्युपलब्ध्यर्थक्रिये करोति,…(त० वै०, पृ० ३००)

१७. लक्षणपरिणामो हि अवस्थितस्य धर्मस्यानागतादिलक्षणत्यागे वर्तमानादिलक्षणलाभः—( योगवार्तिकम्, पृ० २९४ )

१८. धर्माणां चातीतानागतवर्तमानरूपता लक्षणपरिणामः–(त० वै०, पृ० २२७)

अनागतलक्षणस्य त्यागं कुर्वता प्राप्यमाणः वर्तमानलक्षणकाल एव घटधर्मस्य लक्षणपरिणाम इत्युच्यते। वर्तमानावस्थापन्न एव एव घट-धर्मः किञ्चिद् कालानन्तरमतीतावस्थां प्राप्नोति। इत्थं घटस्य वर्त-मानावस्थात अतीतावस्थां प्रापणमपि लक्षणपरिणाम इत्युच्यते। नात्र एतत् विस्मरणीयं यत् धर्मिणो धर्मपरिणामप्राप्तिसमनन्तरमेव धर्मस्य लक्षणपरिणामो भवति।

धर्मपरिणामस्वाधारभूतः धर्मी तथा लक्षणपरिणामस्य आधारभूतो धर्म इति उपर्युक्तकथनानुसारेण धर्मिणः परिणामः धर्मान्यथात्वेन यथा अनुभूयते तथा धर्मस्य परिणामः लक्षणपरिणामस्यान्यथात्वेन कल्प्यते। धर्मपरिणामतः कार्यमभिव्यज्यते किन्तु लक्षणपरिणामतश्च अभिव्यक्त-कार्यस्य कालः परिवर्तितो भवति।

लक्षणपरिणामस्य आधारो धर्मी न भवति अपितु धर्म एव भवति, यतः घटादिधर्म एव अनागतवर्तमानातीतान् त्रीन् लक्षणान् क्रमशः प्राप्तः सन् भिन्नलक्षणेभ्यः पदार्थेभ्यः भिन्नरूपेण बोधितो भवति न तु मृत्तिकादिधर्मी बोधितो भवति। यतः प्रलयभिन्नेषु सर्वेष्वपि कालेषु स धर्मी समानरूपेण तिष्ठति। घटादीनामिवाभिव्यक्तानभिव्यक्त-रूपेण वा न तिष्ठति। किञ्च धर्मिणः लक्षणपरिणामेऽभ्युपगम्यमाने निर-पेक्षाया धर्मिभूतायाः प्रकृतेरनागतः अतीतलक्षणपरिणामश्च भवितुं न शक्नोति, यतः घटप्रभृतिमहत्पर्यन्तानां पदार्थानां स्वकारणेषु लयात्मक अतीतलक्षणपरिणामो भवितुं शक्यः। किन्तु परिणामिन्या नित्यायाः मूलप्रकृतेः न क्वापि लयो भवति। यदा प्रकृतेः क्वापि लयो न भवति तदा तस्या अनागतावस्थाऽपि नैव भवितुमर्हति। अतः निरपेक्षायां धर्मिभूतायां मूलप्रकृतौ लक्षणपरिणामलक्षणस्याघटितत्वात् प्राधान्येन धर्मिणो लक्षणपरिणामो निषिद्धः।

कोऽपि धर्मः स्वीये कस्याचिदेकस्य लक्षणस्य प्रादुर्भावकाले इतरा-भ्यामनभिव्यक्तलक्षणाभ्यां सम्बद्धो भवतीति योगाचार्याणां समुद्घोषः[१९]

---

१९. अत्र एकैकलक्षणाभिव्यक्तिकालेऽपि धर्मो लक्षणान्तराभ्यां सूक्ष्माभ्यां वियुक्तो न भवतीति समुदायार्थः— ( योगवार्तिकम्, पृ० ३०१ )

सत्कार्यवादानुसारेण असत उत्पत्त्यभावात् सतो विनाशाभावाच्च। त्रिविधलक्षणपरिणामानामन्योन्यसम्बन्धः सोदाहरणं विवेचितो योगसूत्रीयव्याख्याग्रन्थेषु।

धर्मस्य लक्षणपरिणाम इव योगाचार्यैं अनागतादिलक्षणानामपि लक्षणपरिणामः साधितोऽस्ति। अस्मिन् प्रसङ्गे लक्षणस्य लक्षणपरिणामाभ्युपगमे प्रतीयमानोऽप्यनवस्थादोषो बीजाङ्कुरन्यायेन न दोषावहः, अपरिहार्यत्वात् इत्याचार्यविज्ञानभिक्षुसूरिणो मतम्[२०]। इत्थं लक्षणपरिणामस्य स्वरूपं योगशास्त्रग्रन्थेषु विवेचितमस्ति।

## अवस्थापरिणामः

लक्षणपरिणामवत् अवस्थापरिणामोऽपि धर्मस्यैव भवति। धर्मिणो न कदापि परिणामो भवति। एकस्मात् कालादन्यस्मिन् काले येन लक्षणपरिणामेन धर्मस्य ( कार्यस्य ) प्रस्थानं भवति, तत्र तस्य सहायकः अवस्थापरिणाम एव भवति। यद्यवस्थापरिणामो न भवेच्चेत् किमपि बाह्यनिमित्तं विनैव धर्मस्य या स्वाभाविकी भग्नावस्था भवति, तस्या उपपत्ति र्न भवेत्। घटादिधर्माणां नूतनावस्थातः पुराणावस्थायां परिणतिरेव अवस्थापरिणाम इत्युच्यते। वर्तमानलक्षणापन्नानां धर्माणामेव अवस्थापरिणामो न भवति, अपितु अनागतानामतीतलक्षणानां चापि भवति। सत्त्वादिनामिव कालस्य गुणरूपत्वात् अतीतानागतलक्षणानां शीघ्रभविष्यात्मिका विलम्बभविष्यात्मिका चावस्था अनुमीयन्ते[२१]। अतः तदीयलक्षणपरिणामः; अनिवार्यो भवति। मृद्धर्मिणः पिण्डकपालघटादिरूपेण भूयमानः धर्मपरिणामः प्रत्यक्षयोग्योऽस्ति। किन्तु धर्मे प्रतिक्षणं भूममानः अवस्थापरिणामः कदापि प्रत्यक्षयोग्यो न

---

२०. बीजाङ्कुरवत्प्रामाणिकत्वेनास्या अनवस्थाया अदोषत्वात्, अन्यथा धर्मस्य धर्मस्तस्यापि धर्म इत्याद्यनवस्था अपि दोषत्वापत्त्या धर्मधर्मिभावादिरपि न सिध्येदिति— ( योगवार्तिम्, पृ० ३०३ )

२१. शीघ्रभविष्यत्ताविलम्बभविष्यत्ताऽऽदिरूपो विशेषस्तयोरपि लक्षणयोरनुमीयते सत्त्वादिवदेव गुणत्वेन प्रतिक्षणपरिणामित्वसिद्धेः— ( यो० वा०, पृ० २९६ )

भवति, अपितु अनुमेय एव स भवति[२२]। धर्मपरिणामः, लक्षणपरिणामश्च न हि प्रतिक्षणं भवतः, किन्तु अवस्थापरिणामः प्रतिक्षणं भवति[२३]।

पातंजलयोगदर्शने उपर्युक्तानां त्रिविधपरिणामानामिव तत् क्रमोऽपि विचारितोऽस्ति। धर्मलक्षणावस्थाभेदेन क्रमोऽपि त्रिविधो भवति। लक्षणपरिणामक्रमस्य अनागतलक्षणपरिणामक्रमो वर्तमानलक्षण-परिणामक्रमश्च द्वाववान्तरभेदौ भवतः। अतीतलक्षणपरिणामे क्रमो न भवति। मृद्धर्मिणः पिण्डधर्मस्य नाशानन्तरं घटधर्मस्योत्पत्ति यावत् मध्यवत्तिनि काले यः पौर्वापर्यरूपक्रमः स एव धर्मपरिणाम-शब्देनाभिधीयते[२४]। घटकार्यस्य अनागतकालतः वर्तमानकाले या अवस्थितिर्भवति सैव उभयोर्लक्षणयोः मध्यवर्ती लक्षणपरिणाम-क्रमोऽस्ति[२५]। नूतनघटे बहोः कालादनन्तरं या जीर्णता दृष्टिगोचरो भवति, सैव घटस्य अवस्थापरिणामक्रम इत्यभिधीयते[२६]। न हि खलु अकस्मादेव एकस्मिन् क्षणे घटस्य जीर्णता भवति अपितु घटनिर्माणस्य अग्रिमक्षणादेव घटस्य पुराणात्मा अवस्थापरिणामक्रम आरब्धो भवति। इत्थं त्रिविधपरिणामक्रमः संक्षेपेण विचारितः।

---

२२. धर्मपरिणाम इवावस्थापरिणामे प्रतिक्षणक्रमो न प्रत्यक्षीक्रियत इति तमनुमानेन साधयति— (यो० वा०, पृ० ३१५)

२३. विशिष्टोऽतिशयितः धर्मलक्षणपरिणामयोः प्रतिक्षणमनुत्पादादवस्था-परिणामस्य च प्रतिक्षणमुत्पादात्। (यो. वा., पृ. ३१६)

२४. तथा च मृदेकैव चूर्णं भूत्वा पश्चात् पिण्डो भवतीत्येकः क्रमः, पश्चाच्च घट इत्यादिक्रमैः— (यो० वा०, पृ० ३१५)

२५. एवं घटस्यानागतभावाद्वर्तमानभावप्राप्तिः पिण्डस्य वर्तमानभावादतीत-भावप्राप्तिरिति लक्षणक्रमः— (नागेशकृत बृ० यो० सू० वृ०, पृ० ३३०)

२६. सा च पुराणताक्षणपरम्पराऽनुपातिना प्रतिक्षणं भिन्नेव स्वरूपसत्ताक्रम-समूहेनैवाभिव्यज्यमाना भवन्ती चरमावस्थायां स्फुटप्रत्यक्षगोचरतामेति, अतः पुराणताऽभिव्यक्तिहेतुतया प्रतिक्षणमवस्थापरिणामोऽनुमीयते— (यो० वा०, पृ० ३१६)

अस्मिन्नेवावसरे परिणामानां मुख्याधिकरणभूतस्य धर्मिणः स्वरूपं वर्णयन्तः योगाचार्याः शान्तोदिता व्यपदेश्यधर्मैरन्वितो भवति ।[२७] अत्र धर्मशब्दः शक्तिपरः । अयं शक्तिरूपो धर्मः शक्तिमति धर्मिणि तादात्म्यसम्बन्धेन वर्वर्ति, यः धर्मितः पृथक्कर्तुं न शक्यः । द्रव्यरूपे मृद्धर्मिणि अव्यक्तरूपेण वर्तमानानां चूर्णपिण्डघटादीनां या निर्माणयोग्यता सैव शक्तिः, स एव धर्मश्च[२८] । योगाचार्यैरव्यपदेश्यधर्मं लक्षीकृत्य विशेषतया विचारकृतोऽस्ति । तेषामयमाशयः—भविष्यति व्याक्रियमाणाः धर्माः अव्यपदेश्याः इत्यभिधीयन्ते । एभिरव्यपदेश्यधर्मैः पदार्थानां सर्वशक्तिमत्ता सिध्यति । योगदर्शनग्रन्थेषु पदार्थानां सर्वशक्तिमत्तायाः बहूनि उदाहरणान्युपलभ्यन्ते । तथाहि—एकस्मादेव ब्रह्मणः शरीरात् देवदानवनरपश्वादीनामुत्पत्तिः, मुनेरगस्तस्य जठराग्निद्वारा समुद्रशोषणं, ब्रह्मविष्णुरुद्रदुर्गादीनां देवतानां शरीरेषु विश्वदर्शनमित्यादि तदैवोपपद्यते यदा पदार्थानां सर्वशक्तिमत्ताऽभ्युपगम्यते, शिलाखण्डादङ्कुरानुत्पादन पुरुषशरीरात् प्राणिनामनुत्पाद इत्यादयो दृष्टान्ताः न हि पदार्थानां सर्वशक्तिमत्ताया विघटका अवगन्तव्याः । यत यद्यपि सर्वे पदार्थाः सर्वात्मकाः तथापि तेभ्य प्रत्येकस्य कार्यस्याभिव्यक्त्यर्थं समुचितानि भिन्नभिन्नानि देशकालसंबंधधर्माधर्मादिनिमित्तकारणानि सहकारिरूपेण अपेक्ष्यन्ते[२९] । अतः समुचितेषु देशादिकारणेषु असत्सु सर्वशक्त्यात्मकोऽपि पदार्थः कथं नाम विविधरूपाणि प्रदर्शयितुं शक्नुयात् । न हि काश्मीरक्षेत्रेऽभिव्यज्यमानं कुंकुमं पांचालादिदेशे कदापि समुत्पद्यते । अतः पदार्थानां सर्वशक्तिमत्ताया अभ्युपगमे न किञ्चिदपि बाधकम् ।

प्रकृत्यादिपदार्थानामिव चित्ततत्त्वस्य सर्वास्ववस्थासु धर्मादयः त्रिप्रकाराः परिणामाः उपलभ्यत एव, किन्तु महर्षिणा पतंजलिना

---

२७. शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी— ( यो० सू० ३।१४ )

२८. धर्मिणः = द्रव्यस्य मृदादेः शक्तिरेव = चूर्णपिण्डघटाद्युत्पत्तिशक्तिरेव धर्मः तेषां तत्राव्यक्तत्वेन भाव इति यावत्— ( त० वै० पृ० ३०८ )

२९. देशकालाकारनिमित्तासंबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति— ( व्यासभाष्य, पृ० ३१२ )

समाधेः उत्तरोत्तरावस्थां प्राप्तस्य समाधिकालिकचित्तस्य त्रयः परिणामा निरूपिता येषां नामानि—निरोधपरिणामः, एकाग्रतापरिणाम तथा समाधिपरिणामश्चेति। महर्षिणा पतंजलिना निरोधादिक्रमेण चित्तस्य परिणामानि निरुपिता सन्ति, किन्तु अत्र वयं योगसाधनायाः क्रममनुसृत्य उपरिनिर्दिष्टान् परिणामान् वर्णयिस्यामः।

## समाधिपरिणामः

श्रीमद्व्यासवाचस्पतिरामानन्दनारायणतीर्थादिभिः योगाचार्यैः सम्प्रज्ञातसमाधे आरम्भदशायां चित्तस्य समाधिपरिणामः स्वीकृतः। ते एवं प्रतिपादयन्ति—यदा खलु साधक क्षिप्तादिभूमीरतिक्रम्य प्रयत्नेन उत्थापितं स्वचित्तं एकाग्रभूमौ प्रवेशयति तदां तस्य सार्वविषयाभिमुख्यं क्रमशः शिथिली भवति, ध्येयैकविषयाभिमुख्यमेव च क्रमेण च प्रबलीभवति[30]। अतः व्युत्थानवृत्तेरभिभववशात् एकविषयाकारवृत्तेः प्रादुर्भावेन सह धर्मिणः चित्तस्य अन्वय एव समाधिपरिणाम इत्युच्यते, इत्थंभूतः चित्तस्य परिणामः सम्प्रज्ञातसमाधिप्राप्ति समनन्तरमेव आरभते। अतः सम्प्रज्ञातसमाधिप्रारम्भकालिके चित्ते एकाग्रताधर्मस्यैव सर्वथा सर्वदा च लयोदयौ न सम्भवतः, अपितु व्युत्थानैकाग्रस्वरूपयोः वृत्तयोः लयोदयचक्रं परिभ्रमति।

## एकाग्रतापरिणामः

यदा चित्तं शनैः शनैः समाहितावस्थां पूर्णरूपेण प्राप्नोति तदा चित्तस्य व्युत्थानवृत्तीनां विशेषरूपेण उपशमो भवति। तदानीं चित्ते केवलं ध्येयाकारवृत्तय एव उत्पद्यन्ते विलीयन्ते च। अतः चित्तधर्मिणि अस्यामवस्थायां एकैव ध्येयाकारवृत्तिः समानरूपेण आविर्भवति तिरोभवति च। इयमवस्थैव परिनिष्ठितसम्प्रज्ञातसमाधिकालिकचित्तस्य

---

३०. सर्वार्थता = युगपदिव सर्वेन्द्रियेषु विषयग्रहणाय संचरणशीलता एकाग्रता = एकविषयता, अनयोर्धर्मयो लयोदयरूपः परिणामः समाधिपरिणामः—
(भास्वती, पृ० सं० २९२)

एकाग्रतापरिणाम[३१] इत्युच्यते। चित्तस्य एष धारावाहिकः ध्येयाकारपरिणामो योगिनः समाधेर्व्युत्थानात्पूर्वं यावत् प्रचलति।

यद्यपि समाधिपरिणामकाले एकाग्रतापरिणामकाले च धर्मिणः, चित्तस्य धर्मरूपाणां वृत्तीनामेव उदयलयात्मकः परिणामः तुल्य एव भवति तथापि तयोर्द्वयोः अयं विशेषः यत् समाधिपरिणामकाले व्युत्थानैकाग्रतारूपयो उभयविधयोर्वृत्त्योः कालभेदेन क्रमशः आविर्भावतिरोभावौ भवतः। किन्तु एकाग्रतापरिणामकाले केवलं एकाग्रतावृत्तेरेव आविर्भावः तिरोभावश्च भवति।

## निरोधपरिणामः

साधनाक्रमेण सम्प्रज्ञातसमाधिसिद्धेः पश्चात् साधकः प्रयत्नेन असम्प्रज्ञातसमाधिं विजयते। असम्प्रज्ञातसमाधिकाले सम्प्रज्ञातकालिक ध्येयाकारवृत्तिरूपः परिणामः पूर्णतया समाप्तो भवति तथापि धर्मिणि चित्ते वृत्तिजन्यः संस्काररूपो धर्मो विराजते। अन्यस्मिन् असम्प्रज्ञातसमाधौ अभ्यासवशात् सर्ववृत्तिनिरोधात्मकसंस्कारोऽपि आविर्भवति। निरोधसंस्कारदृष्ट्या एकाग्रतासंस्कारः व्युत्थानात्मक एव अभ्युपगम्यते। तमेव लक्षीकृत्य सूत्रकारः प्रतिपादयति यत् क्रमेण भूयमानानां अभिभवनिरोधात्मकसंस्काराणां यः क्रमशः प्रादुर्भावो भवति स एव निरोधक्षणान्वयिनः चित्तस्य निरोधपरिणाम[३२] इति कथ्यते। उपर्युक्ताभ्यां द्वाभ्यां परिणामाभ्यां सह अस्य निरोधपरिणामस्य कियताऽपि अंशेन नैव तुल्यता। यतः अत्र कोऽपि कथमपि वृत्त्यात्मको परिणामो न भवति, अपितु द्विविधजातीयानां संस्काराणामेव वृद्धिः ह्रासश्च भवतः। एवं रीत्या एतत् प्रतीयते यत् साधनाद्वारा केन प्रकारेण योगस्य अवस्थां क्रमशः साधकः प्राप्नोति, सदैव चित्तस्य परिणामक्रियाऽपि क्रमेण सूक्ष्मा, सूक्ष्मतरा, सूक्ष्मतमा च भवति।

---

३१. ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः—
(यो० सू० ३।१२)

३२. व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः—(यो० सू० ३।९)

समाधिकालिकचित्तस्य त्रिविधः परिणामः कथं भवतीति प्रतिपादितम् । तत्र चैत्तिकानां धर्माणां क्रमशः अभिभवप्रादुर्भावाभ्यां चित्तधर्मिणि पूर्वकथितधर्मादीनां त्रिविधपरिणामानां समावेशोऽप्यवगन्तव्यः ।

परिणामवादस्य इयत् सविस्तरं व्याख्यानं पातंजलयोगदर्शनव्याख्याग्रन्थेष्वेव समुपलभ्यते नान्यत्र तत्समानतन्त्रसांख्यदर्शनग्रन्थेषु किमधिकं पल्लवितेनेति शम् ।



# कातन्त्रव्याकरणे चर्करीत-(यङ्लुक्) प्रयोगविचारः

डॉ० जानकीप्रसादद्विवेदः

चेक्रीयित-चर्करीतशब्दौ शब्दशास्त्रीयसञ्ज्ञार्थे पूर्वाचार्यैः प्रयुक्ताविति [1]निरुक्तादिना ज्ञायते, ययोर्व्यवहारः पाणिनीये 'यङ्यङ्लुक्' इति शब्दाभ्यां कृतः। एतच्च [2]न्यासकारादीनामपि सम्मतम्। तत्र चर्करीतान्तशब्दानां लोके प्रयोगः साधुर्न वेति विवदन्ते शाब्दिकाचार्याः। एतदुभयमपि मतं कातन्त्रे समाद्रियते। शर्ववर्माचार्येण चर्करीतकार्यविधायकं किमपि सूत्रं न प्रणीतमिति तदाशयं स्फुटीकुर्वन्नाह टीकाकारः—

'प्रयोगानुसारेण कियन्त एव भाषायां दृष्टा न सर्वे। तथा च बोभवीतीति भट्टिकाव्ये निबद्धम्। अन्ये तु सर्वे एव छान्दसा इति प्रतिपद्यन्ते तदिह प्रमाणम्' (४।४।४५) इति। कृत्प्रकरणे कात्यायनेन 'पञ्चमोपधाया धुटि चागुणे' (४।१।५५) इत्यत्र यदुपधाग्रहणेनेदं विज्ञाप्यते— अन्यत्र प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणं भवतीति, तेन कथञ्चिद् वक्तुं शक्यते—तत्सम्प्रदायेऽपि एतत्प्रयोगः समाद्रियते इति। इदमवगन्तव्यम्—दीर्घस्य स्वरधर्मत्वात् 'प्रशान्' इत्यादावन्त्यस्य व्यञ्जनस्य तत्कार्यं कथमपि भवितुं नार्हति. किञ्चाव्यवहितपूर्वोपधायां वर्तमानस्यैवेत्युक्तसूत्रे व्यर्थीभूयोपधाग्रहणमुक्तं वचनं विज्ञापयति, अत एव 'तन्तान्तः, शंशान्त' इत्यादौ चर्करीतधातोरुपधाया दीर्घः सम्पद्यते, अन्यथाऽभ्यासस्य प्रसज्येत। उक्तमपि चैतट्टीकाकारेण—

---

१. आपनीफणदिति फणतेश्चर्करीतवृत्तम् ( निरु० २।७ ),
चोष्कूयतेश्चर्करीतवृत्तम् ( निरु० ६।१६ ) इति।
यङ: पूर्वाचार्यसञ्ज्ञा चेक्रीयितमिति (म० भा० प्र० ४।१।७८) इति।

२. चर्करीते च यङ्लुगन्तस्य पूर्वाचार्याणां सञ्ज्ञा ( न्या० ७।३।९४ ),
प्राचा तु चर्करीतमिति यङ्लुगन्तं परस्मैपदमित्युक्तम् ( त० बो०, चर्करीतं चेति सूत्रम्, अदाद्यन्ते ) इति।

'अत्रोपधाग्रहणं किमर्थम् ? पञ्चमान्तस्य धातोर्दीर्घो भवन्नेकवर्णव्यवधान एव भविष्यति, सत्यम्, पञ्चमान्तस्येति स्थानित्वमपि सम्भाव्येत। केचिच्चेक्रीयितलुगन्तं भाषायामपि मत्वा 'शंशान्तः, तंतान्तः, दंदान्तः' इति क्तादावुदाहरन्ति' ( कात० वृ० टी० ४।१।५५ ) इति।

कातन्त्रपरिशिष्टकारेण महामहोपाध्यायश्रीश्रीपतिदत्तेनाभ्यास्य प्रकृतिभावविधानाय सूत्रमुक्तम्—'चर्करीताभ्यासस्य' (स० प्र०, सू० ३३) इति। एतेन 'अरिअर्ति' इत्यादौ यकाराद्यादेशा न प्रवर्तन्ते। तत्र च महाभाष्यकारादिनवाऽऽचार्याणां मतान्युपस्थापयन् स व्याचष्टे—

भाषायामपि चर्करीतप्रयोगाः साधवो भवन्तीति[1]। कातन्त्रव्याकरणस्य लोकप्रयोगसाधनफलकत्वादेतन्मतमङ्गीक्रियते, अन्यथा ताद्विवादप्रसङ्गो नाऽऽपद्येत। उच्यते चापि कातन्त्रपरिभाषावृत्तिकृता श्रीदुर्गसिंहेन—

'अभिधानाद् भाषायामपि दृश्यते इत्यारम्भः, तथा च भट्टिकाव्ये बोभवीति[2] न संमोहः' ( परि० १२ ) इत्यादि। कातन्त्रे श्रीपतिदत्तेन समादृतत्वाद् भाषायां चर्करीतप्रयोगाणां श्रीकविकण्ठहारेण तद् व्याख्यानं विंशतिकारिकाभी रसवदादिव्याकरणसम्मतं कृतम्। तेन ग्रन्थादौ नमस्कारात्मकं मङ्गलमाचरता श्लोकत्रितयेन ग्रन्थारम्भस्य प्रयोजनं स्वीयः परिचयश्चोपस्थापितः। तथा हि उच्यते—

---

१. भाषायामपि केचिच्चर्करीतमिच्छन्ति, उक्तं हि भाष्ये—भाषायामपि यङो लुगस्तीति। निरुक्तवृत्तौ चोक्तम्-भाषायामपि यङो लुगस्तीति। लुगाधिकारे "यङो बहुलम्" इति चान्द्रे पठ्यते। काशिकायामपि ( २।४।७४ ) छन्दोऽनुवृत्तिरिह नेष्टा इत्युक्तम्। जाघटीतीति जाम्बवतीविजयकाव्ये। जाज्वलतीति नीतिसङ्ग्रहे। शंशमांचक्रुरिति भट्टिकाव्ये च पठ्यते। भागवृत्तिकारस्तु बोभवीत्येव न छान्दसमिति मन्यते ( कात० परि० वृ०, सू० ३३ ) इति।

२. कृष्णेन सह मे प्रीतिर्बोभवीति यदब्रवीः,
न जाघटीति, युक्तौ तत् सिंहद्विरदयोरिव।
बोभवीति न संमोहः कृच्छ्रेष्वपि भवादृशाम्,
किं पश्यसि सर्वोऽयं जनस्त्वामवलम्बते॥ ( भट्टि० १८।४१ )।

प्रणनम्य महादेवं चर्करीतरहस्यकम् ।
श्रीकविकण्ठहारोऽहं वावद्मि वदतां वरः ॥ १ ॥
परिभाषाटीकायां माधवदासकविचन्द्रभिषजा यत् ।
गुरुगुरुणा चोत्तरपरिशिष्टे यदभिहितमविरुद्धम् ॥ २ ॥
रसवत्-पद्मशब्दानुशासनयुगले चाभिहितं वीक्ष्य ।
तत्सर्वं सङ्क्षेपात् पदानि वावद्मि चर्करीतानाम् ॥ ३ ॥
नो जाज्ञाति कलापतन्त्रविदुरो यद् वावदीति स्फुटम्
भाषायामिह चर्करीतमखिलं नैवं दरीदृश्यते ।
भाषायामपि मंमनीति विदितो वक्तव्यवादी तत-
स्तत्सर्वं विवरीवरीमि रसवत्तन्त्रादिभिः सम्मतम् ॥ ४ ॥ इति ।

अयं भावः—महामहोपाध्यायश्रीत्रिलोचनकविचन्द्रेण कृतस्य कातन्त्रोत्तरपरिशिष्टस्याऽऽख्यातप्रकरणे 'तस्य लुक्, चर्करीतं च, बहुलम्' इत्यादीनि यानि सूत्राणि प्रणीतानि तत्रोपयोगीनि शार्ववर्मिकाणि च यानि सूत्राणि तानि व्याख्यातुकामस्त्रिलोचनकविचन्द्रात्मजः कविकण्ठहारः स्वीयोपाध्यायपुत्रस्य कविसार्वभौमस्य प्रार्थनया चर्करीतरहस्यं प्रारभते । परिभाषाटीकाकारो माधवदासकविचन्द्रः कः ? इति व्याख्याने तेन नोक्तम् । गुरुगुरु-शब्देन पूजनीयः स्वीयो जनकस्त्रिलोचनकविचन्द्रः स्मृतः । 'रसवत्-पद्म' इति व्याकरणद्वयमुक्तम् । तत्र पद्मव्याकरणं पद्मनाभदत्तेन प्रणीतम्, रसवतीवृत्तिः सङ्क्षिप्तसारव्याकरणस्य क्रमदीश्वरेण कृता । उक्तेषु ग्रन्थेषु चकरीतव्याख्यानमालोच्यात्रोद्देशतस्तत्पदानां साधनमुच्यते । कातन्त्रे पक्षद्वये भाषायामप्रयोगमङ्गीकुर्वतां मतं कातन्त्रवृत्तिकारः, प्रयोगं चाङ्गीकुर्वतां मतं परिशिष्टकारः श्रीश्रीपतिदत्तः समर्थयति । शर्ववर्मणाऽनुक्तत्वाद् वृत्तिकारस्तत्प्रयोगाणां छन्दस्येव साधुत्वं मनुते । ये हि केचित् 'चेक्रीयितान्तात्' ( ३।२।४३ ) इत्यत्रान्तग्रहणेन चर्करीतं व्यावर्त्यते, तेन शर्ववर्ममतेऽपि चर्करीतं भाषायामस्तीति मन्यन्ते, तन्न समीचीनम्—अदादौ परस्मैपदिषु 'चर्करीतं चेत्येके' इति पाठादेव तत्र परस्मैपदमवतरतीति न तदर्थमन्तग्रहणं किं च सुखार्थमेव क्रियते ( द्र०—कात० वृ० टी०, पञ्जी ३।२।४३ ) इति ।

अत्र वक्तव्यवादिनां श्रीपतिदत्तादीनामभिमतम्-"लुग्लोपे न प्रत्ययकृतम्" ( ३।८।२६ ) इतिन्यायस्तु यत्र प्रत्यये परतः पूर्वस्य कार्यं भवति

तत्रैव प्रवर्तते, यथा 'दुग्धे' इत्यादौ विकरणस्य लुकि पूर्वस्य गुणकार्यं न जायते। अदुरित्यादौ पूर्वस्य कार्याभावाद् अनुसादेशः प्रवर्तते एव। एवं बोभवीतीत्यादौ चेक्रीयितस्य लुकि ततः परस्य प्राप्तमात्मनेपदकार्यं मा भूदित्यन्तग्रहणं क्रियते इति। सुपद्मव्याकरणे 'यङो लुग् बहुलम्।' प्रकृतिवत् परस्मैपदम्' इति, रसवद्व्याकरणे च 'यण्लुग् वा ङिषु, लिचतुर्षु ईङ् च वा' इति चर्करीतप्रकरणे सूत्रितम्। एवमुक्तवचनै-र्भाषायां चर्करीतप्रयोगस्य प्रसिद्धौ सत्यामिदं व्याख्यानमारभ्यते इति। अत्र विंशतिकारिकासु वर्णितो विषयः सङ्क्षेपत उपस्थाप्यते—

चेक्रीयितलुग्धातुश्चर्करीतसञ्ज्ञक आचार्यैः परिभाषितः, सञ्ज्ञा-पूर्वकविधेः सुखावहत्वात्। सञ्ज्ञानिर्देशादेव चर्करीतशब्दे कृधातोः क्तप्रत्यये गुण इटो दीर्घश्च प्रवर्तते, असञ्ज्ञायां तु 'चक्रित' इति स्यात्। "चणपरोक्षाचेक्रीयितसनन्तेषु" (३।३।७) इत्यत्रान्तग्रहणेन बहुव्रीहिणा चेक्रीयितान्त-सनन्तधातूनां द्विर्वचनं स्यादित्यर्थः सम्पद्येत, विषय-सप्तम्याश्च तत्राङ्गीकारात् चर्करीतस्य धातोर्द्वित्वं प्रवर्तते। चेक्रीयित-धातोरभ्यासे विधीयमानं कार्यं चर्करीताभ्यासेऽपि जायते, इयांश्च विशेषः—यत्र चेक्रीयिताभ्यासे 'री' आगमस्तत्र चर्करीताभ्यासे 'रि-र' इत्येतावागमौ जायेते। तदर्थं कातन्त्रोत्तरपरिशिष्टे कविचन्द्रत्रिलोचनेन सूत्रितम्-"रिरौ च रीविषये" इति। 'पापचीति' इत्यादौ विकल्पेनेडागमः स्यात्। गणोक्तकार्यं प्रति प्रकृतिवद्भावस्य प्रतिषेधात् 'प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणम्" (दु० परि० वृ०, परि० १२) इति न्यायेन दिवादिप्रभृतिभ्यश्चर्करीतेभ्यो धातुभ्यो यनादयो विकरणा न जायन्ते किं चौत्सर्गिकोऽनेव विकरणः प्रवर्तते। "अभ्यस्तस्य चोप-धाया नामिनः स्वरे गुणिनि सार्वधातुके" (३।५।८) इति निषेधवच-नेन 'बोबुधीति, चोकुशीति' इत्यादौ धातोरुपधाया गुणो न जायते। चर्करीतकार्याणां बाहुल्येन प्रवर्तनात् 'बेभिदिता, बेभिदाञ्चकार' इत्या-दावसार्वधातुके गुणिनि स्वरादौ नाम्युपधाया गुणो न जायते। 'चरफलो-रुच्च परस्यास्य' (३।३।३३) इत्यनेन चरफलधात्वोश्चेक्रीयितेऽ-भ्यासस्थाकारान्तेऽनुस्वारागमः, परभागस्थधात्वकारस्योकारादेशश्च निर्दिश्यते, तदेव कार्यं चर्करीतेऽपि सम्पद्यते। यथा विषयसप्तमीमा-

कलग्य चर्करीतस्य द्विर्वचनमुपपद्यते तथैव "स्वपि-स्यमि-व्येञां चेक्रीयिते" (३।४।७) इत्यत्र चेक्रीयिते इति विषयसप्तम्या निर्देशेन चर्करीतेऽपि स्वपादीनां सम्प्रसारणं जायते, तेन सोषुप्ति, सोषुपीतीत्यादयः प्रयोगाः सिध्यन्ति। केषांचिन्मते "ग्रहि-ज्या०" (३।४।२) इत्यादिसूत्रस्थधातूनामपि सम्प्रसारणं क्रियते, तेन 'जरीगृहीति, जर्गर्ढि, जरिगृहीति' इत्यादिरूपाणि जायन्ते। ग्रन्थकारमते तु 'जाग्राढि, जाग्रहीति' इत्यादीन्येव रूपाणि विज्ञेयानि। 'द्वित्वबहुत्वयोश्च परस्मै' (३।५।१६) इत्यनेन द्विवचनबहुवचनबोधकतसादिप्रत्ययानामगुणत्वाद् 'ग्रहि ज्या०' (३।४।२) इत्यनेन गुणे परतः सम्प्रसारणस्य च विधानात् तसादिप्रत्ययेषु परतो गुणो जायते, तेन जागृढः जागृह्‌ति 'इत्यादिरूपाणि जायन्ते। व्रूधातोः कृताभ्यासविधेरभ्यासवर्जितस्यैव वचादेशो विज्ञेयो न तु चर्करीतमात्रस्येति, तेन वोवचिता, वोवचिष्यतीत्यादि। प्रकृतिवद्भावे एकस्वरोक्तकार्यस्य प्रतिषेधात् पापचितेत्यादावनेकस्वरत्वादिट् प्रवर्तते एव, अन्यथा एकस्वरत्वात् 'पचिवचिसिचिरिचिमुचेश्चात्' (३।७।१८) इत्यनेनेट् प्रतिषिध्येत। उच्यते चापि—

आचार्या यङ्लुकीच्छन्ति सेट्कत्वमनिटामपि। इति।

'चायः किश्चेक्रीयिते' (३।४।१०) इत्यत्र 'चेक्रीयिते' इति विषयसप्तमीनिर्देशात् चर्करीतेऽपि 'चेकेति, पेपेति' इत्यादौ चायप्यायोः किपीत्यादेशौ जायेते। अबोभूदित्यादौ प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापिग्रहणात् सिचलोपादीनि कार्याणि प्रवर्तन्ते। 'भू' इतिव्यक्तेरनाश्रयणाद् 'भुवो वोऽन्तः परोक्षाऽद्यतन्योः' (३।४।६२) इत्यनेन वकारागमे सति अबोभूवुरिति, व्यक्तेराश्रयणाद् वकारागमाभावे उवादेशे सति अबोभुवुरिति रूपं निष्पद्यते। कातन्त्रे बहुलग्रहणेनोभयमपि स्वीक्रियते। व्यक्तेराश्रयणाद् 'बोभव' इत्यत्र परोक्षायां 'भुवो वोऽन्तः परोक्षाद्यतन्योः' (३।४।६२) इत्यनेन वकारागमाभावः। तिपा निर्दिष्टस्य कार्यस्य चर्करीतेऽप्रवतनात् 'सूतेः पञ्चम्याम्' (३।५।१४) प्रतिषेधवचनेन 'सोषवाणि' इत्यत्र न गुणप्रतिषेधः। 'चर्करीतं चेत्येके' इत्यस्यादादौ परस्मैपदिषु पाठाच्चर्करीतधातोः परस्मैपदमेव न्याय्यमिति केचिन्मन्यन्ते, परं परिभाषावृत्तिकारेण दुर्गेण प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि

ग्रहणमिति न्याय्यमाश्रित्य जंगमिष्यतीत्यत्र यदिडागमो विधीयते तेनेदमवगम्यते–चर्करीताद् भावकर्मणोरात्मनेपदमपि भवतीति। यथा भावे 'बोभूयते, तास्थीयते' इत्यादि, कर्मणि च 'जंगम्यते, दरीदृश्यते' इत्यादि हेतुत्रयमुपस्थापयन्तः केचिदत्र परस्मैपदस्यैव विधानं समर्थयन्ति। तत्राऽऽद्यः 'चेक्रीयितान्तात्' (३।१।४३) इत्यनेन साक्षात् चेक्रीयितान्ताद् धातोरात्मनेपदं विधीयते न तु चेक्रीयितलुगन्तात्। द्वितीयः— चेक्रीयितकार्यस्य शेषभूतं चर्करीतविधानम्। तृतीयश्च–'चर्करीतं च इत्यस्यादादौ परस्मैपदिषु पाठ इति।

चर्करीतादिनि (णिचि) प्रत्यये यण्वद्भावाद् गुणाभावः सम्प्रसारणं च दृश्यते, चेचाययतीत्यादौ च वृद्धिरपि। क्रमदीश्वरमते हनधातोरिनि (णिचि) प्रत्यये हतयति, घातयति, घतयतीति त्रीणि रूपाणि सम्भवन्ति। कातन्त्रैकदेशिनः केचिद् व्यञ्जनादिचुरादिधातोरिन्प्रत्ययं विधाय चैक्रीयितसञ्ज्ञकं यप्रत्ययं कुर्वन्ति। केचित्तु इनन्ताद् यप्रत्ययं लोपयन्ति। अत्र ते हेतुमुपस्थापयन्तो वदन्ति 'क्षुभिवाहिस्वनिध्वनिफणिकषिघुषां क्तेनेड्मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्दनेषु' (४।६।६३) इत्यत्रानिनन्तघुषधातोर्निर्देशाद् विज्ञायते–विकल्पेनन्ताश्चुरादयो भवन्तीति। तेनैवोदाहरणेन व्यञ्जनादेरनेकस्वराच्चुरादेर्यङ्प्रत्ययो विधीयते लोप्यते चापि अन्ये आचार्यास्तु प्रयोगानुसारेणैव कतिपयानेव विकल्पेनन्तानङ्गीकुर्वन्ति न तु सर्वान्। एवं चेक्रीयितं तल्लोपश्च प्रयोगानुसारेणैव भवतीति समामनन्ति।

## चर्करीतरहस्यस्य कारिकाः

चर्करीताभिधो धातुश्चेक्रीयितलुकीष्यते।
सप्तम्या वैषयिक्या च तस्य द्विर्वचनं भवेत्॥ १॥

चेक्रीयिते च योऽभ्यासस्तत्र यद् यद् विधीयते।
तत्सर्वं चर्करीतस्याभ्यासे रीविषये रिरौ॥ २॥

ईडुद्वृद्धिनिमित्ते च चर्करीताद् विभाषया।
चर्करीतादनो लोपो विकरणाभिधस्य तु॥ ३॥

स्वरे चास्य गुणो न स्यादुपधायाश्च नामिनः ।
चोक्रूशीति प्रयोगोऽयं गुणिनि सार्वधातुके ॥ ४ ॥
असार्वधातुके तद्वच्चकाराद् ( बहुलात् ) यङ्लुकीष्यते ।
बेभिदिता प्रयोगोऽयं स्याद् बेभिदाञ्चकार च ॥ ५ ॥
चेक्रीयिते च यत्कार्यमुक्तं चरफलोस्तथा ।
तत्सर्वं चर्करीतस्य वदन्त्यपि मनीषिणः ॥ ६ ॥
तद्वत् स्वपि-स्यमि-व्येञां चंचूर्ति चंचुरिति च ।
पंफुल्लि पंफुलीत्येव सोषुप्ति सोषुपीति च ॥ ७ ॥
सेसेन्ति सेसिमीत्येव वेवेति वेवयीति च ।
ग्रह्यादीनां च सौत्राणां सम्प्रसारणमिष्यते ॥ ८ ॥
जरीगृहीति जर्गर्ढि जरीगृहीति कैश्चन ।
नास्माभिस्तेन तेषां तु जाग्राढि जाग्रहीति च ॥ ९ ॥
जागृढो जागृहत्यत्रागुणत्वात् सम्प्रसारणम् ।
कृताभ्यासविवेरात्प्रकृतेश्च ब्रुवो वचिः ॥ १० ॥
समुदायाश्रितानेकस्वरत्वादनिटामपीट् ।
चायप्यायोस्तथा धात्वोर्यथासङ्ख्यं कि-पी स्मृतौ ॥ ११ ॥
प्रकृतिग्रहणेनैव चर्करीतग्रहो भवेत् ।
अद्यतन्यां भुवो वस्तु परैश्चान्यैरुविष्यते ॥ १२ ॥
बोभवेति परोक्षायां भुवो वो न व्यवस्थया ।
तिब्गणैकस्वररुक्ते अनुबन्धे च नेष्यते ॥ १३ ॥
नात्मनेपदमिच्छन्ति केचित्तु भावकर्मणोः ।
आत्मनेपदमिच्छन्ति परेऽत्र भावकर्मणोः ॥ १४ ॥
चेक्रीयितलुगन्ताच्च नात्मनेपदमन्ततः ।
शेषत्वाच्चर्करीताच्च परस्मैपदमेव च ॥ १५ ॥
चर्करीतादिनो, यण्वद् वृद्धिर्वा तत्र केचन ।
हनेरिनि हतो घातो घतश्चेति प्रयोगतः ॥ १६ ॥
अन्ये तु व्यञ्जनादेरनेकस्वरचुरादितः ।
इनन्ताद् यङमिच्छन्ति तल्लोपमपि मेनिरे ॥ १७ ॥

क्षुभिवाहिस्वनीत्यत्रानिड् . घुषिरविशब्दने ।
विशब्दन इनोऽभावाद् विकल्पेनश्चुरादितः ॥ १८ ॥
एतस्माद् व्यञ्जनादेरनेकस्वराद् यङिष्यते ।
तल्लोपमपि वाञ्छन्ति परे चान्ये प्रयोगतः ॥ १९ ॥
रामचन्द्रनृपद्वारि कलापाध्यापने रतः ।
कण्ठहारकविः सोऽहं विवृणोमि रहस्यकम् ॥ २० ॥



# शाकुन्तलीयं पद्यमेकम्

डॉ० राधावल्लभः त्रिपाठी

यद् यत् साधु न चित्रे स्यात् क्रियते तत् तदन्यथा।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम्॥

एषा हि शकुन्तलायाः स्वकृतं चित्रं पश्यतो विरहकातरस्य तत्रभवतो दुष्यन्तस्योक्तिः। पद्यञ्चेदं शाकुन्तले षष्ठाङ्कस्य चतुर्दशं, मैथिलपाठानुगतसंस्करणे[1] तु षोडशं विद्यते। डा० एस० के० बेलवल्करसम्पादिते काश्मीरपाठानुसारिसंस्करणे[2] त्विदं नोपलभ्यते। मैथिल-संस्करणे रेखयेतिपदस्थाने रेखायामिति पाठोऽङ्गीकृतः। स्वोपज्ञ-कुमारराजीय-टीकायां काट्यवेम-पण्डितस्तु तत्रैव लेखयेति पाठं पुरस्कुर्वन् लेखया लेखनेनेति व्याचष्टे।[3]

षोडशशतकभवः रसचन्द्रिकाटीकाकारः शंकरः पद्यमिदं व्याचक्षाणो बभाण– 'अन्यथा क्रियते यद्यपीत्यर्थः।'[4] चित्रे यत्किमपि साधु नास्ति, अन्यथा क्रियमाणेऽपि तस्मिन् शकुन्तलालावण्यस्य स्तोक एवांशश्चित्रगतरेखास्वनुगत इत्यर्थोऽभिप्रेतः शंकरस्य प्रतीयते। अभिज्ञान-शाकुन्तलटिप्पणीकारेण नरहरिणा तु पद्यस्यास्यान्वयोऽन्यथैव कृतः। तथा चासावाह–[5] 'तत्तादन्यथा न क्रियते, तथैव व्यवस्थाप्यत इत्यर्थः। लावण्यं सौन्दर्यम् अन्वितं सम्बद्धम्।' पूर्वार्धगतनकारस्यान्वयो नरहरिणा साध्विति पदेन अकृत्वा अन्यथेति पदेन सह कृतः। तथापि

---

१. मिथिला-विद्यापीठ-दरभङ्गातः प्रकाश्यतां गतम्, १९४७.

२. प्र का०—साहित्य-अकादमी, नई दिल्ली, १९६५.

३. द्रष्टव्यम्—बालमनोरमा-मुद्रणालयेन प्रकाशितं शाकुन्तलस्य संस्करणम् (१९४५)।

४. शाकुन्तलस्य दरभंगा-संस्करणे, पृ० २२७.

५. तत्रैव, पृ० ३५४.

अर्थस्तु पूर्वोक्तः तन्मतेऽविपरिवर्तितस्तिष्ठति। काट्यवेमस्तु पद्यगतान् सर्वानपि सन्दर्भान् विशिष्य स्फुटं हृदयङ्गमयन्नाह–[1]

'चित्रे आलेख्ये यद् यदङ्गसौष्ठवं तत्तदन्यथा अन्यप्रकारेण क्रियते। आवापोद्वापाभ्यां साम्यं क्रियते, इत्यर्थः। तथापि चित्रे आवापोद्वापाभ्यामङ्गसौष्ठवस्य अन्यथाकर्तुं शक्यत्वेऽपि तस्याः शकुन्तलाया लावण्यं कान्तिविशेषः लेखया लेखनेन किञ्चिदन्वितमीषत् संगतम्।'

एतेन पद्यस्थः सर्वोऽप्यर्थः नितरां विशदीभवति। नूनं शंकर-नरहरि-काट्यवेम-कृत-व्याख्यासु नैव जायेत कस्यापि विदग्धस्य विप्रतिपत्तिः। तथापि कालिदासटीकायामुद्भटो राघवभट्टस्त्वत्र विवदते। पद्ये कमपि नूतनमेव अभूतपूर्वमेव भावमुद्भावयता अभाणि राघवभट्टेन[2]–

चित्रे यद्यत्साधु न स्यात्, तदन्यथा क्रियते यद्यपि, तथापि तस्या लावण्यं किञ्चिदनिर्वचनीयया च रेखया चित्रार्थं तूलिकाविहितया अन्यथा क्रियते अथ च शोभाविशेषेणान्वितम्। सम्मार्ज्य सम्मार्ज्य भूयो लिख्यमानमपि शोभां नातिक्रामतीति भावः। अथ च शोभया रेखयान्वितमिति विरोधाभासः।'

अत्र शंकर-प्रभृतिभिरङ्गीकृतोऽर्थस्तु सर्वथा विपर्यस्त एव जायते। आलेख्यं स्वल्पेनैव लावण्येन सम्बद्धमित्येके, आलेख्यं शोभाविशेषेणान्वितमिति राघवभट्टः। उभयत्र पारस्परिकविरोधस्तु स्फुटः। पूर्वस्मिन् मते विरोधाभासालंकारस्य कापि सम्भावना नैवावतरति कालिदासीय-श्लोके, राघवभट्टमतेन तु चित्रं 'सम्मार्ज्य सम्मार्ज्य भूयो लिख्यमानमपि शोभां नातिक्रामति...शोभया रेखयान्वितमिति विरोधाभासो' ऽप्यत्र स्फुट एव[3]।

---

१. द्रष्टव्यम्—बालमनोरमा-संस्करणम्, पृष्ठम् १५७.

२. निर्णयसागर-संस्करणे, पृष्ठम् २०९.

३. पूर्वार्धव्याख्यायां 'रेखया चित्रार्थं तूलिकाविहितया' इति कथयित्वाऽत्र 'शोभया रेखया' इत्याटीकमानो राघवभट्टः संगीतरत्नाकरं प्रमाणीकुरुते—

शिरोनेत्रकरादीनामङ्गानां मेलने सति।
कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता॥ इति।

—शाकुन्तलस्य निर्णयसागरसंस्करणे (१९३३), पृ० २०९.

राघवभट्टस्यैव व्याख्यां सर्वथा स्वीकुर्वाणः सहृदयसमीक्षकः पण्डित-हजारीप्रसादद्विवेदः तामेव व्याख्यामग्रे सारयन् अन्यदपि सूक्ष्मं निगूढं च कमप्यर्थं तत्रोद्घाटयति। तन्मते चित्रगतशकुन्तलाया लावण्यं वास्तविकशकुन्तलालावण्यमतिशयानस्तिष्ठतीति दुष्यन्तमुखात् कथयन् कालिदासः कला-सर्जन-प्रक्रियामधिकृत्य सूक्ष्मं संकेतं कमपि दित्सति। स च यथा—कलाकारः कविर्वा कलायां काव्ये च वस्तुजगति दृश्यमान-भावानामन्यथाकरणं ( Distortion ) कृत्वा तांश्चारुतरांश्चित्रयति परिष्कुर्वाण इति[1]।

इत्थं च प्रस्तूयमानेऽस्मिन् विवादे राघवभट्ट-द्विवेदपादयोर्व्याख्याद्वयं नितरां भ्रामकमसङ्गतं चेत्यस्मन्मतम्। तच्च प्रकृतप्रसङ्गं परिशील्य इत्थं साध्यते—

( १ ) 'यद् यत् साधु न चित्रे स्यात् क्रियते तत् तदन्यथा' इति पंक्तेः सद्यः समनन्तरं सन्निवेशितं तथापीतिपदं स्वकृतिविषय आलेख्य-कर्तुरसन्तोषं संकेतयति। अत एवास्य 'तथापे'-रन्वयबोधाय टीकाकारेण शंकरेण प्रथमपङ्क्तिव्याख्यायां यद्यपीति संयोजितम्। काट्यवेमोऽपि तथापीति पदस्य तात्पर्यं सम्यग् विवेचयति—'तथापि चित्रे आवापो-द्वापाभ्यामङ्गसौष्ठवस्य अन्यथाकर्तुं शक्यत्वेऽपी'ति।

( २ ) आचार्यद्विवेदः 'किञ्चिदन्वितमि'ति कथनस्य तात्पर्यं 'विशिष्टं समधिकं वा परिष्कृतं चारुतामुपागतमिति गृह्णाति। अनूपसर्ग-पूर्वो गत्यर्थकेणो निष्पन्नः क्तप्रत्ययान्तोऽन्वितशब्दः युक्त-सम्बन्धितानु-गताद्यर्थानेव बोधयति[2], न पूर्वपक्षगृहीतमर्थान्तरम्। किञ्चितः प्रयोगो-ऽप्यत्र ईषदर्थे एव युज्यते। रेखया किञ्चिदन्वितमिति मूलं 'शोभा-विशेषेणान्वितमि'-तीत्थं व्याचक्षाणो राघवभट्टोऽविचिन्त्यः। चित्रगतायाः शकुन्तलाया लावण्यं शोभाविशेषेण संयुक्तमित्येव यदि कविरभिप्रैति, तर्हि किञ्चितः प्रयोगे का सार्थकता ? तथात्वे तु 'रेखया किञ्चिदन्वितमि'-

---

१. कालिदास की लालित्य-योजना—हजारी प्रसाद द्विवेदी, पृ० ७९.

२. अन्वितम्—अनुगते, युक्ते, सहसम्बद्धे शाब्दबोधे विशेष्यताप्राप्ते च 'प्रकृत्यर्थान्वितार्थबोधकत्वं प्रत्ययानामिति न्यायः।

—वाचस्पत्यम् , प्रथमो भागः, पृ० २२०

त्यस्य स्थाने 'रेखया कयाप्यन्वित' मितिकथनमेव सुश्लिष्टं स्यात्, प्रायुञ्जीत च कविना। अत एव 'किञ्चिदन्वितम् ईषत् सङ्गत' मिति व्याचक्षाणः काल्यवेम साधीयानिति निश्चप्रचम्।

( ३ ) पद्यस्योत्तरार्धे 'तस्या' इति पदस्य 'चित्रगतायाः शकुन्तलाया' इत्यर्थे स्वीक्रियमाण एव राघवभट्टद्विवेदयोर्व्याख्यानं संगतिमुपैति। न चैतादृशोऽर्थः स्वीकर्तुमत्र शक्यः, दुष्यन्तोक्तपूर्वापरसंवादानामवलोकनेन वास्तविकी शकुन्तलैव तन्मानसे तिष्ठति, तामेवासौ अभिप्रैति न पुनश्चित्रगतामिति सुस्पष्टं ज्ञायमानत्वात्।

( ४ ) साधु = वस्तुजगति यथा दृश्यते तद्वदिति आचार्य-द्विवेदः। ननु पृच्छामः, साधुपदस्य सुसम्बद्धं संकेतितार्थं विहाय एतादृशविपरिवर्तितार्थपरिकल्पनायां किन्नु खलु साध्यते ? ईदृशोऽर्थः पाश्चात्यानामन्यथाकरणसिद्धान्तं (Distortion Theory) कालिदासोपरि आरोपयितुं नितान्तमनावश्यकतयैव समाक्षिप्यत इति विदांकुर्वन्तु विपश्चिद्पश्चिमाः।

( ५ ) न केवलं सुसम्बद्धार्थपरित्यागोऽपितु पूर्वापरविरोधोऽप्रासंगिकत्वमपि च दरीदृश्येते राघवभट्ट–द्विवेदयोर्व्याख्यानयोः। सानुमती शकुन्तलायाश्चित्रं यथार्थमिव मत्वैव तत्प्रशंसामातनोति, न पुनर्यथार्थशकुंतलातो सुन्दरतरमिति कृत्वा[1]। विदूषकोऽपि चित्रमतितरां श्लाघते[2], तथापि चित्रगतलावण्यं कालिदासीयकमनीयकल्पनाकलितंशकुन्तलायाः सर्वथा हृद्यानवद्यसौन्दर्यादतिरिच्यत इत्येतादृशोऽभिप्रायः सानुमती-विदूषकयोः संवादेभ्यो गृहीतुं न कथमपि शक्यते।

( ६ ) आलेख्यनिर्माता दुष्यन्तः स्वयमेव स्वरचनामपूर्णां मन्यमानस्तिष्ठति—'चतुरिके, अर्धलिखितमेतद् विनोदस्थानम्[3]।' चित्रे

१. अम्मो एसा राएसिणो णिउणता। जाणे सही अग्गदो मे वट्टदित्ति।

—शाकुन्तलस्य देवधर-सूरि-सम्पादित-संस्करणे (१९४६), पृ० १८६.

२. साहु वअस्स, महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो। क्खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु।—तत्रैव, पृ० १८६.

३. तत्रैव, पृ० १८८.

अभावाः सन्ति, बहु निर्मातुं तत्र अवशिष्यत इति सुस्पष्टमेवासौ कथयति। शकुन्तलायाः सर्वथानवद्यां प्रतिच्छवि प्रकाशयितुं न खलु आलेख्यं शक्नोतीत्येवाभिप्रायस्तत्कथनस्य। अत एव 'भोः किमपर-मत्रावशिष्ट'-मिति पृच्छति विदूषके, दुश्यन्तो ब्रूते[1]।

सखे श्रूयताम्—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी।
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः॥
शाखालम्बितवल्कलस्य च तिरोर्निर्मातुमिच्छाम्यधः।
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्॥

(शाकु० ६।१७)

आश्रमस्यैतादृशमतिरमणीयं परिसरमनालिख्य चित्रकारः स्वहृदयो-द्वेजिनीं व्यथां, पश्चात्तापपीडामपराधबोधं च चित्रेण बोधयितुं कथं नु शक्नुयात्? न केवलमेतत्, प्रेयस्याः शकुन्तलाया अतिप्रियमलंकरण-द्वयमपि चित्रेऽचित्रितमेव—[2]

अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं विस्मृतमस्माभिः।

कृतं न कर्णार्पितबन्धनं सखे'
शिरीषमागण्डविलम्बिकेसरम्।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे॥

(शाकु० ६।१८)

(७) स्वकृतचित्रनिरीक्षणावसरे दुष्यन्तो निरपराधशकुन्तलायाः प्रत्याख्यानजनितग्लान्या ग्लपितमनाः खल्वस्ति। जीवनस्य बहुमूल्यतमः शेवधिर्मया त्यक्तः सर्वस्वमेव हारितं मयेति पश्चात्तपन्नसौ स्वहानिं सहस्रगुणितामिव कृत्वा पश्यति। तथाहि—

साक्षात् प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहुमन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम्॥

(शाकु० ६।१६)

---

१. तत्रैव। २. तत्रैव, पृ० १९०

चित्रगतशकुन्तलादर्शनेन मनोविनोदनं तन्मतौ मृगतृष्णानुधावनमेव। शकुन्तला हि तद्दृष्ट्यां निकामजला स्रोतोवहा सदृशी वरीवर्ति-चित्रं पुनर्मृगतृष्णिकावत्। अत एवालेख्यगता शकुन्तला वास्तविकशकुन्तलाया नितान्तक्षुद्रविकल्पभूतेति स्वारस्यं तत्कथनस्य। पश्चात्तापादपराधबोधाच्च शकुन्तलां प्रति तस्य प्रेमा बहुमानश्चातिभूमिं गतौ इति कथं नु खल्वसौ स्वनिर्मितचित्रं शकुन्तलातो सुन्दरतरमिति ब्रूयात् ?

(८) प्रथमदर्शनादेव दुष्यन्तः शकुन्तलाया सौन्दर्यं सृष्टौ अभूतपूर्वमद्वितीयं कल्पनातीतमिव च मन्यमानो दृश्यते।[1] स एव दुष्यन्तः स्वनिर्मितचित्रं शकुन्तलायास्तुलनायां 'शोभाविशेषेणान्वितं रमणीयतरं वा ब्रूयात् इति तु न कथमपि घटते।

(९) दुष्यन्तः स्वलिखितमालेख्यं न केवलमपूर्णम्, स्विन्नांगुलिविनिवेशेन रेखाप्रान्तेषु मलिनम्, कपोलपतिताश्रुपातक्लिन्नमित्यपि कथयति।[2]

---

१. मानुषीसु कथं वा स्यादस्य रूपस्य सम्भवः। शाकु० १।२६

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे,

धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः॥ शाकु० २।९

२. अस्त्यत्र मे भावचिह्नम्—

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।

अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात्॥ शाकु० ६।१५

डॉ० रेवाप्रसादद्विवेदास्तु 'अथ अङ्गुलीषु स्विन्नता, तदर्थं प्रान्तेषु मलिनता, वर्तिकोच्छ्वासः तेन च संलक्ष्यः कपोलपतितोऽश्रुबिन्दुः इत्येते विशेषाः चित्रकर्मणी'ति कथयन्तश्चित्रगतायामेव शकुन्तलायां स्विन्नतादिविशेषांश्चित्रितान् मन्वाना दृश्यन्ते (द्र० सागरिका १३।४ अंके 'कालिदाससाहित्ये चित्रकले'ति लेखः, पृ० ३६५)। तच्च सर्वथा असंगतमेव, चित्रनिर्माणकाले वियोगजनितवैधुर्यवशात् दुष्यन्ते एव स्विन्नताऽश्रुपाताद्यनुभावानामुत्पत्तेः सर्वथा औचित्यात्, चित्राङ्कितशकुन्तलायां तादृशानुभावानानामसम्भाव्यत्वाच्च। कथमिति चेत्, चित्रे सखीभ्यां परिहासप्रमोदनिर्भरशकुन्तलायाश्चित्रणात्, भ्रमरबाधायाः कारणात् अश्रुपातादिकस्यानुत्पत्तेश्च। अत एव चित्राङ्कनकाले दुष्यन्तस्यैव स्वेदजलम् अश्रुबिन्दवश्च निपतितानि चित्रोपरि, तेन च मलिनं तत् समजनीति कालिदासदिशा दर्शितमस्माभिरिति दिक्।

( १० ) अथ मालविकाग्निमित्रस्थं सन्दर्भं कमपि तुलनार्थमुपस्थापयामः। मालविकायाः प्रत्यक्षीकरणात् प्राग् चित्रगतां तामवलोकयन्नग्निमित्रश्चित्रगतलावण्यमभूतपूर्वमेव पश्यति, किन्तु साक्षात्कृतायां मालविकायामसावाह—

चित्रगतायामस्यां कान्तिविसंवादशंकि मे हृदयम्।
सम्प्रति शिथिलसमाधि मन्ये येनेयमालिखिता॥
—मालविकाग्निमित्रे, २।२

चित्रे मालविकाया आङ्गिकसौष्ठवं न साकल्येन प्रतिबिम्बितमिति चित्रकारं दूषयन्नग्निमित्रो ब्रूते—न सम्यग् समाधिमाविश्य चित्रीकृता तेन मालविकेति। प्रकृतसन्दर्भे प्रसंगस्यास्य संस्मरणं नितरामुपयोगितां भजते। तच्चेत्थम्। मालविकालेखक इव दुष्यन्तोऽपि शकुन्तलाङ्कने शिथिलसमाधिरभवत्, वस्तुतस्तु मनोन्माथिमन्मथव्यथया उद्वेजितः वैयक्तिकराग-वैक्लव्यानुतापादिभिर्नितरां खिन्नः असौ चित्रकर्मणि तल्लीनतामधिगन्तुमसमर्थ एव बभूव। अतो यथा मालविकाया लावण्यं न यथायथं मालविकाचित्रे सन्निविष्टम्, तथैव शकुन्तलालावण्यं शकुन्तलाचित्रे।

आचार्यहजारीप्रसादद्विवेदवर्योऽपि दुष्यन्तः कलासर्जनायां समाधि नाधिगच्छति, इत्यसौ नास्ति निपुणश्चित्रकार इति स्वयमेव ऊरीकरोति[1]। तथात्वे सत्यपि दुष्यन्तं कालिदासं च मिथ्या प्रमाणीकृत्य शकुन्तलायाः प्रतिकृतिः चारुतरा, समधिकपरिष्कृता वास्तविकशकुन्तलायास्तुलनायामिति तस्य कथनं तु सर्वथा विरुद्धमेव।

इत्थमेव कलासर्जनविषये पद्यमिदमाश्रित्य तेनोद्घाटितो विचारः कालिदासस्यात्रानभिप्रेत एव। यत्सत्यं कालिदासः काव्यकलासर्जनाविषये गूढमन्तव्यानि परोक्षतया यत्र यत्र काव्यव्यूहेऽभिव्यनक्ति, तादृशमन्तव्यानां तत्कृतपद्ये कस्मिंश्चिदन्वेषणं सर्वथा औचित्यमावहतीति नास्मत्कापि विप्रतिपत्तिरत्र। किन्तु पद्यस्य प्रकृतप्रसंगोपयोगिनी या व्याख्या कालिदासदृशा तैस्तैः साधकप्रमाणैरुपयोज्य

१. कालिदास की लालित्य-योजना, पृ० ९७.

उपर्यस्माभिरुन्मीलिता, राघवभट्टं विहायेतरेषामनूचानटीकाकर्तॄणां च याभिमता, तस्यामेवैतादृशमन्तव्यस्यान्वेषणं सर्वथा न्याय्यो न पुनः स्वकपोलकल्पितायां कवेरभिप्रायमसमीक्ष्य दूरादाकृष्टायां यस्यां कस्यामपि व्याख्यायाम् ।

अथ प्रसंगेऽस्मिन् —आवापोद्वापाभ्यां सम्मार्ज्य सम्मार्ज्य भूयो लिख्यमानेऽपि चित्रे स्वल्प एव शकुन्तलालावण्यांश रेखया अन्वित इत्यस्ति दुष्यन्तस्याभिप्रायः । तेन च निपुणो कलाकारः स्वमनोगतमभिप्रायं काव्य-कला-द्वारेण यथायथं प्रकटयितुं क्वचिदसमर्थो भवतीति कालिदासेनात्र प्रादर्शि । शकुन्तलाया या छविः दुष्यन्तमानसे रराज, तामेव सः स्वहृदयगततीव्रानुशयेन साकं चित्रेऽङ्कयितुं यत्नपरो बभूव । किन्तु मनोगतस्य 'किञ्चित्' एव कलायाम् 'अन्वितम्', कलाया उपकरणानि समग्रतया तदभिव्यक्तुमसाकल्यं भेजिरे । अत एवासन्तुष्टो दुष्यन्तो ब्रवीति—'तथापि तस्या लावण्यं रेखया किञ्चिदन्वितमि'ति, अतएव चित्रगतामपूर्णतामसौ पुनः पुनः वक्ति, मनोवाञ्छितविन्यासं तत्र कर्तुमशक्नुवन् । अन्यच्चेदमप्यत्र सविशेषमवधेयम्—चित्रगता अभावा यद्यपि तुदन्ति दुष्यन्तदृशम्, दूरीकर्तुमपि तानसौ अभिलषति, तथापि दूरीकृता एव तेऽभावास्तेन, पूर्णतामेव नीतं यथेप्सितमालेख्यमिति तु कवीश्वरेण कालिदासेन न जातु कुत्रचिदपि अभाणि । चित्रकारस्याभिव्यक्तेरपर्याप्ततामेव पल्लवयन् प्रसंगमिमं महाकविः समापयति । अभिव्यक्तेरेतादृशी दुर्निवारबाधा कला सर्जनाकाले कस्यापि कलाकारस्य समक्षमवश्यं समायाति, तदानीं मनसि परिस्फुरन्ती अनुभूतिः न सम्यक् कलोपकरणैर्धार्यते, पुनः पुनः परिष्क्रियमाणा अपि रेखाः शकुन्तलालावण्यं न समग्रतया वोढुं शक्नुवन्ति । अभिव्यक्तेरेतादृशः संकटः कलाकारेण समाधिदशामेव सम्यगाविश्य निवार्यते । कलासर्जनसमये कलाकारो दुष्यन्तः न तादृशीं दशां तल्लीनतां वा प्राप, अतो हृदि अनुभावितशकुन्तलालावण्यं नासौ पूर्णतया चित्रयितुं शशाकेति कालिदासो दर्शयत्यत्र[1] ।



१. एष लेखः उज्जयिन्यामखिलभारतीयकालिदासोत्सवस्य शोध-परिषदि (१९७५) हिंदीभाषायां प्रस्तुतः ।

# महाभारतीयानि तीर्थानि

श्री इन्द्रमोहनसिंहः

यद्यपि तीर्थं नाम प्रायशो महाभारते पूतस्थानसंज्ञायां प्रयुक्तं तथापि गुरवो नद्योऽवतरणानि देवता इत्यादयोऽपि तीर्थमिति प्रसिद्धम्।

महाभारतानुसारं त्रिविधानि तीर्थानि स्थावरजङ्गममानसाख्यानि सन्ति। स्थावराख्ये तीर्थे नदीसरोवरसमुद्रपर्वतादितीर्थानि गणितानि। जङ्गमतीर्थे गोब्राह्मणाः प्राधान्यं भजन्ते। सदाचारिजितेन्द्रिया अपि जङ्गमतीर्थाख्या सन्ति। धृतिसत्यानर्थित्वमृदुताऽहिंसाक्षमाज्ञानदमादीनि मानसतीर्थानि।

## नदीतीर्थानि

महाभारते त्रिविंशत्यधिकद्विशतं नदीतीर्थानि वर्णितानि। तेष्वपि त्रिंशत्तीर्थानां विशदवर्णनं कतिपयेषां मनागुल्लेखोऽन्येषां नामसंकीर्तनमेवावाप्यते।

नदीनां तीर्थमिति गणनार्थं बहूनि करणानि प्रमाणीकृतानि। प्राणिनां जीवनाय जलमावश्यकम्। शुद्धिकारकं जलं परमपवित्रं मन्यते। देवपूजनसन्ध्योपासनदानशापादीनां समये जलमपेक्षितम्। नदीतटेषु यज्ञकर्मपुण्यावहम्। देवमहर्षीणां निवासस्थली पुण्यभूमिश्चात्र सम्मता। दिव्यपुरुषमहर्षीणां जनन्यो नद्यः। गङ्गा भीष्मकार्तिकेययोर्जननी वर्तते। यमुना वसिष्ठस्य च मता। अत एव नद्यः तीर्थरूपेण पूजिताः।

## गङ्गा

नदीषु गङ्गा शीर्षस्थानीया। ते ते जनपददेशपर्वताश्रमा अपि पुण्या यत्र गङ्गा प्रवहति। एकदा नारायणस्य कुक्षौ मार्कण्डेयः सम्पूर्णसृष्टिं ददर्श। दृष्टसृष्टिवस्तुषु गङ्गा सर्वप्रथमासीत्। उग्रतपसा भगीरथेन गङ्गाऽवतारिता, यया जनान् परलोकाद् भयं न भवेत्। मातृपितृपुत्र-

पत्नीधनादिभ्यो वियोगात् तावद् दुःखं न भवति यावद् गङ्गावियोगात् । क्षुधापीडितो बालको यथा मातृक्रोडे प्रसीदति तथैव कल्याणेप्सुर्गङ्गां भजते । दुष्यन्तसुतो भरतो गङ्गातटे चतुर्दशाध्वरान् सम्पादयामास । अर्जुनो यात्रासमये गङ्गाद्वारं सिषेवे । धृतराष्ट्रो जीवनस्यान्तिमचरणे गान्धारीविदुरकुन्तीभिः सह गङ्गाया सविध उवास । स्वर्गारोहणकाले युधिष्ठिरो गङ्गाजलेन स्नात्वा मानुषदेहं तत्याज दिव्यशरीरञ्च दधार ।

गङ्गासेवनाद् यद् फलं लभ्यते न तत् पुत्रधनकर्मभिरपि प्राप्यम् । गङ्गाजलपानं सहस्रचन्द्रायणव्रतेन तुल्यम् । अत्र मासपर्यन्तं वासः सहस्रयुगपर्यन्तं तपसा समः । गङ्गातटमृत्तिकाया शिरसि धारणमज्ञानस्य विनाशायालम् ।

## सरस्वती

ऋग्वेदात् प्रभृति पुण्या नदी सरस्वती प्रसिद्धैव । अस्याः तटे सम्पादितानां यज्ञानां वर्णनं पुरातनकालादेव प्राप्यते । अत्र देवर्षिराजर्षिमहर्षिगणैः सारस्वतयज्ञो विहितः । तत्र भरतो त्रिंशतिं यज्ञान् विदधौ । कृतयज्ञकर्तॄणां नैमिषारण्यर्षीणां सम्मानधिया सरस्वती प्रावहत् । अस्मिन् तीर्थे देवविजयमिच्छन् बृहस्पतिरियाजासुराणां विनाशाय च । सरस्वतीतटेस्थिते इन्द्रतीर्थे इन्द्रेण शतयज्ञाः सम्पादिताः, यमुनातीर्थे वरुणेन राजसूययज्ञः कृतः, आदित्यतीर्थे भगवता भास्करेण च यज्ञाः सम्पादिताः ।

सरस्वती-लोपमुद्दिश्यानेका कथाः प्रचलिताः तीर्थयात्रापर्वशल्यपर्वयोर्दिशा विनशनतीर्थे शूद्रणोविषादादिभ्यो द्वेषवशात् सरस्वती लुप्ता । अनुशासनपर्वानुसारं ब्राह्मणश्रेष्ठोचथ्यस्य वचनेन सरस्वती विलुप्ता ।

## यमुना

महर्षिगणैःसेविता पुण्यप्रदा पापनाशिनी च यमुना तरङ्गिणी । अस्याः तटे प्रजापतिः सहस्रवर्षपयन्तमिष्टीकृतं यज्ञं चकार । शन्तनु सप्तमुख महामेघयज्ञं कृतवान्, दुष्यपुत्रः भरतः त्रिंशदश्वमेघयज्ञान् व्यदधात् ।

यमुनायाः समीपे जला-उपजले नद्यौ विद्येते, यत्र् राज्ञः शिवेन यज्ञः सम्पादितः, परीक्षायै इन्द्रः श्येनवेशं कृत्वाऽग्निः कपोतरूपधरश्चागतः ।

काशिराजकन्याऽम्बा भीष्मस्य विनाशाय यमुना तटे द्वादशवर्षपर्यन्तं तपश्चक्रे। अत्र व्रताचरणाद् गोलोकप्राप्तिः सम्भवति।

## सरयूः

ऋग्वेदे सरयूः मन्त्रैः अनेकैः स्तुता। अस्या उत्पत्तिविषये रम्या कथा महाभारते निगदिता। तद्यथा—गङ्गायाः सविधे ब्रह्मदत्तवरः जलाशय आसीत्, यस्मिन् स्नानाद् हतदैत्याः पुनः पुनः श्वसन्ति स्म। देवैः प्रार्थितो महर्षिवसिष्ठः कैलाशं प्रवहन्तीं गङ्गां दिव्यसरोवरमानयत्, यस्या वेगात् सरोवरः सरयूर्नदीरूपेण परिणतः। रामायणेऽप्युक्तम्—"सरः-प्रवृत्ता सरयूरिति।"

एवमेव दृषद्वतीशतद्रुविपाशानर्मदाकावेरीबाहुदाऽऽदिनदीनां तैज-वैशिष्ट्यानि विश्रुतानि।

## उदपानम्

सरस्वती तट उपलभ्यमानः कूपः एषः। अत्र सरस्वत्या गोपनप्रवाहो मतः। येनार्द्रभूमिः स्निग्धौषधयश्च प्राप्यन्ते। गौतमाश्रमनारायण-स्थानयोः समीपेऽप्युदपानकूपस्य स्थितिर्मन्यते। नारायणस्थानस्थोद-पाने चतुःसमुद्राः सदा सन्निहिताः सन्ति। रुद्राणीमतङ्गवापीजनककूप-ज्येष्ठस्थानकूपादीनि दश कूपतीर्थानि वर्णितानि।

## सरोवरतीर्थानि

हिरण्यसरसि तीर्थे दक्षशापाद् मुक्तचन्द्रमाऽवभासितवान्। तस्मा-देव कालाद् एतत् तीर्थमवभासाख्यमति प्रसिद्धम्। एकपादस्थित-भगवान् कृष्णो वर्षसहस्रं तपस्तप्तवान्। युधिष्ठरः तीर्थयात्रासमये अर्जुनेन सह स्नात्वा निराहारो द्वादशदिनानि चतुर्दिवाग्निं संदह्य तपसि ननन्द। अत्र व्रताचरणेन गोलोकप्राप्तिरमावस्यायां समाहितवासेन सिद्धिर्हस्त-ङ्गच्छति। एवमेव पुष्करब्रह्मसरोरामह्रदादीनि सप्तचत्वारिंशत् सरोवर-तीर्थानि वर्णितानि।

## समुद्रतीर्थानि

समुद्रः परमशुभपावनमहातीर्थरूपेण प्रतिष्ठितः। जलाशयेषु समुद्रः प्रथमं बभूव। गोकर्णगायत्रीस्थानद्वारकाऽऽदितीर्थानां स्थितिः समुद्रमध्ये गीयते। द्युतक्रीडायां पराजितपाण्डवैर्वनवासकाले प्रायः समस्तसमुद्रतटवर्तितीर्थानि दृष्टानि। वृष्ण्यन्धकवंशविनाशे बलरामो योगबलेन सर्पशरीरं जग्राह समुद्रञ्च प्रविवेश। एवमेव क्षीरोदलौहित्यसमुद्रदक्षिणसिन्धुबालुकार्णवलवणसमुद्रादीनां एकादशसमुद्रतीर्थानां महत्ता गीयते।

## सङ्गमतीर्थानि

नदीनां परस्परं सङ्गमः श्रेष्ठः, समुद्रनदीनां च सङ्गमः सर्वश्रेष्ठः प्रकीर्तितः। गङ्गायमुनासङ्गमे स्नानेन देवलोकप्राप्तिः, शरीरत्यागेन चामरपदावाप्तिर्भवति। प्रथमं पितामहोऽत्रेयाज, अतः सङ्गम एव प्रयागरूपेण प्रसिद्धिं प्राप्तः। अस्य जले महर्षिच्यवनः द्वादशवर्षपर्यन्तं व्रतमाचरन्नुवास गङ्गासागरसङ्गमे तीर्थयात्राकाले पाण्डवाः स्नानं चक्रुः। महाभारते पञ्चदश सङ्गमतीर्थानि स्तुतानि।

## आश्रमतीर्थानि देवतीर्थानि च

लौकिकसंसर्गाद् दूरं रहसि निबिडवने आश्रमा निर्मिताः। पावनप्रवृत्तिप्रचारेण आश्रमाः तीर्थरूपेण ख्याताः। वसिष्ठाश्रमोऽनेकस्थलेषु वर्णितः। मेरुपर्वतस्थाश्रमे वसिष्ठः तपसि संलग्नः। सरस्वती तटे स्थाणुवटस्यान्तिके विश्वामित्राश्रमस्य पूर्वभागे वसिष्ठाश्रमोऽभूत्। निश्चीरासङ्गमे, ऋषिकुल्याया समीपे च वसिष्ठाश्रमो विश्रुतः। हिमवत्सुतार्बुदे स्थिते वसिष्ठाश्रमे एकरात्रिवासेन गोसहस्रदानफलमधिगम्यते। बदरीपाचने स्थितं वसिष्ठाश्रमं गत्वा बदरीं संभक्ष्य त्रिरात्रोपवासेन द्वादशवर्षपर्यन्तं बदरीभक्षणस्योपवासस्य च फलं प्राप्यते।

### अगस्त्याश्रमः

अनेकत्राश्रम एष व्याप्तः। पुष्करस्योत्तरतीरे भास्करपर्वते वितमानद्याः समीपे मुनिवरागस्त्यस्य पैतृक आश्रम आसीत्। यत्र द्वादश-

वर्षीयेन तेन द्वादशवर्षिकं घोरतपश्चरितम्। गङ्गाद्वारे स्थितेऽगस्त्याश्रमे लोपामुद्रया सह तेनोग्रतपो विहितम्। सरस्वतीतटप्रयागवैडूर्यपर्वत-पाण्डप्रदेशादीषु अगस्त्याश्रमोऽवस्थित आसीत्। एवमेव विश्वामित्र-च्यवनव्यासगोतमादीनामाश्रमाः संशिताः।

## देवतीर्थानि

स्थाणुः तपसा सरस्वतीपूजनं विधायास्याः तटे स्थाणुतीर्थं स्थापयामास। देवैरत्र स्कन्दः सेनापतिपदे अभिषिक्तः। अत्र वसिष्ठा-श्रमा आसीत्, अस्य पश्चिमभागे विश्वामित्राश्रमः सरस्वतीतटे शुशुभे। सोमतीर्थे सोमदेवेन राजसूययज्ञः सम्पादितः। यज्ञान्ते देवानां दैत्य-राक्षसैः सह युद्धं प्रावर्तत। सेनापतिस्कन्दः तारकासुरं जघान। एवमे-वाग्निकौबेरादिव्यादिदेवतीर्थानि स्तुतानि।

## वनवृक्षपर्वततीर्थानि

पुण्यवनप्रदेशेषु महर्षीणामाश्रमा आसन् तैः तपोयज्ञादिभिः परम-गतिः प्राप्ता। कुरुक्षेत्रारण्ये ३६० तीर्थस्थानानि मतानि। अनेकवर्षपर्यन्तं कुरुणाऽत्र भूमिः कर्षिता, अतः कुरुक्षेत्रमेतत्। सरस्वत्या दक्षिणे दृष-द्वत्या उत्तरे च कुरुक्षेत्रवासः त्रिविष्टपवाससमो मतः। द्यूतपराजिताः पाण्डवा वनवासाय प्रथममत्रागताः। इन्द्रेण स्वमुक्तम्—कुरुक्षेत्रस्य मरुद्वधूतो रेणुरपि परमगतिं पापेभ्यः प्रयच्छति। पृथिव्यां नैमिषारण्यं पुण्यतममभिहितम्। कृतयुगे नैमिषारण्यवासितपस्विभि द्वादशवर्ष-पर्यन्तं यज्ञा विहिताः। नैमिषेऽभयप्रदानेच्छया प्रजायै मृत्युदेवी तपसि मे। अत्र ब्रह्मा देवगणैः सह नित्यं निवसति। पृथिव्यां यावन्ति तीर्थानि तानि सर्वाणि नैमिषे अन्तर्भूतानि। वानप्रस्थानां कृतेऽत्र वासस्य तपसश्च विधानमस्ति एवमेव काम्यकद्वैतसौगन्धिकादिवनानां वर्णनं प्राप्यते।

## वृक्षतीर्थानि

नीलपर्वतस्य दक्षिणेन नैषधस्य चोत्तरेण सनातनो सर्वकामप्रदः सिद्धचारणसेवितोऽस्ति जम्बूवृक्षः। वृक्षात् पतितफलेभ्यो भूस्पर्शाद्-

विभक्तेभ्यो रजतसदृशो रसः च्यवते। स एष रसो जम्बूनदीरूपेण परिणतः यस्या जलपानाज्जराभयं विनश्यति। सञ्जयो धृतराष्ट्रं जम्बूखण्डादिवर्णनप्रसङ्गे कालाम्रमहावृक्षं निर्दिदेश। अत्र निवसन्तो जनाः कालाम्रस्य रसपायिनो नित्यं युवानो बभूवुः। एवमेव मुञ्ज-भद्र-अक्षय-बदरी-शाक-स्थाणु शङ्खादिवटानां वर्णनं प्राप्यते।

## पर्वततीर्थानि

नदीनामनन्तरं संख्यया माहात्म्येन च पर्वतानां स्थानं यत्र देवमहर्षीणां वास आसीत्। दिव्यौषधिरत्नसमन्वितस्य हिमवतः पर्वतस्य पृष्ठे मेरुगन्धमादनकैलाशादिशिखराः सुशोभिताः। अत्र विष्णुशिवयोर्नित्यनिवासो मतः। शिव आकाशात् पतन्तीं गङ्गां शिरसि धृत्वा मनुष्यलोकाय ददौ। पर्वतराजस्य पूर्वभागे व्यासाश्रमोलसितो यत्र व्यासेन वेदाध्यापनं कारितम्। उत्तरभागे शिवतपसो मूर्तरूप इवादित्यबन्धनारण्य आश्रमो मण्डितः। पुत्रप्राप्तये विष्णुनाऽत्र तपो विहितं, अत्रैव कार्त्तिकेयो देवविजयाय त्रिलोकान् तिरस्कृत्य शक्तिं मुमुचे। भगीरथः सहस्रसंवत्सरपर्यन्तं तपसा गङ्गामवततार। अर्जुनः पाशुपतास्त्रप्राप्तये काम्यकवनादागत्य हिमवन्तं गन्धमादनञ्चातिक्रम्येन्द्रकीलं तपश्चर्यार्थं जगाम। गन्धमादनपर्वतोऽत्यन्तो दुर्गमः तपसा गम्यश्च। गन्धमादनस्य समीपमिन्द्रतोयानदी प्रवहतिस्म यत्रानेकयोजनविस्तृतकदलीवने हनूमानुवास। गन्धमादनस्य कैलाशशिखरे कुबेरस्य क्रीडास्थलसौगन्धिकवनभवनानि चासन्। रावणेन पराजितः कुबेरो गन्धर्वयक्षराक्षसकिम्पुरुषैः सह गन्धमादने वसतिञ्चक्रे। गन्धमादनो भगवत्शेषनरनारायणादीनां तपोभिः प्रसिद्धिं गतः। एवमेव मेरुमन्दरकैलाशनिषधनीलश्वेतमहेन्द्रादिपर्वततीर्थानां वर्णनमवाप्यते।

अन्यानि तीर्थानि द्वीप-वर्ष-काल-यज्ञ-धर्म-पवित्रता-नक्षत्र-स्वर्ग-मार्ग-गो-नाग-यक्ष-अप्सरस्-गन्धर्व-राजर्षि-स्त्री-राक्षसादिरूपेण विज्ञेयानि।

## द्वीपतीर्थानि

श्वेतद्वीपे निवसन्तो मनुष्याः श्वेतवर्णा चन्द्रसदृशकान्तिवन्तो वज्रकायाः पापरहिता ज्ञायन्ते। ते सनातनब्रह्मणि रता नारायणस्यै-

कान्विकभक्ताश्च मताः। महर्षिव्यासः श्वेतद्वीपे क्षीरसागरस्य तटे परमतपश्चकार। येन नारायणस्य कृपामवाप्य त्रिकालज्ञतां प्राप्तः।

भगवता नारायणेनानुज्ञातो नारदोऽत्रागत्य श्वेतपुरुषान् ददर्श। नारदस्तुत्या प्रसन्नो हरिः तत्र प्रादुर्बभूव। भगवान् शीघ्रमेव नारदं तस्मात् स्थानाद् गन्तुमादिदेश येन भक्ता विघ्नकातरा न भवेयुः। एवमेव शाक-जम्बू-शश-क्रौञ्च-पुष्कर-शाल्मली-कुश-प्लक्ष-भद्राद्यसंख्यानि द्विपतीर्थानि संकीर्तितानि।

## वर्षतीर्थानि

द्विव्यप्रदेशा उत्तरकुरवो नीलपर्वतस्य दक्षिणभागे मेरोरुत्तरपार्श्वे चास्ति। अत्र वृक्षाऽमृतधर्मोपन्ना षड्रसानां स्रावका विद्यन्ते। एषा सिद्धनिवासभूमिः, देवलोकात् च्युता जना अत्र जनि लभन्ते। अप्सरसीभिः तुल्याः स्त्रियोऽत्र निवसन्ति। एवमेव भद्राश्व-केतुमाल-हरि-इलावृत्त-रमणकादीनां वर्षतीर्थानां वर्णनं प्राप्यते।

कालवाचकतीर्थेषु अहःसुदिनैकरात्रदेशकालतीर्थानि गणितानि। प्रथमत्रीणि पुण्यलोकप्रदानि, अन्तिमं रूपतेजःप्रदम्।

दशाश्वमेधिकं दीर्घसत्रञ्च यज्ञवाचकं तीर्थम्। दीर्घसत्रेण राजसूयस्याश्वमेधयज्ञफलस्य प्राप्तिश्च भवति। कृतशौच-कायशोधन-कुलम्पुन-पावनतीर्थानि शुद्धिपवित्रता विधायकानि। कृतशौचेन पुण्डरीकफलस्य, कायशोधेन शुभलोकस्य, कुलम्पुनेन कुलपावनेन पावनतीर्थेन चाग्निष्टोमफलस्य प्राप्तिर्भवति। उर्वशीकृतिकायोग-कृतिकामघाकृत्तिकाऽङ्गारक-कृतिकाश्रमा नक्षत्रतीर्थेष्वान्तरभुक्ताः, उर्वशीकृतिकायोगः पुण्डरीकफलप्रदः कृतिकामघा यज्ञफलप्रदा कृतिकाऽङ्गारककृतिकाश्रमौ स्वर्गप्रदौ। स्वर्गतीर्थस्वर्गद्वारानरकत्रिविष्टपतीर्थानि स्वर्गवाचकतीर्थानि। स्वर्गतीर्थेन यज्ञफलं, स्वर्गद्वारेणानरकेण च पुण्यलोकः, त्रिविष्टपेन च परमगतिः प्राप्यते।

## स्त्रीतीर्थानि

कन्या-कुमारिका-रेणुका-सुन्दरिका-कन्यासंवेद्य-कन्याश्रम-शाल्किनी-

पिङ्गाश्रमादीनि स्त्रीतीर्थानि। कन्यातीर्थं त्रिलोकेषु प्राप्तास्तित्वं वर्तते। अर्जुननिर्मितं नारीतीर्थमप्सरसामुद्धाराय मुनीनपि पुनाति। वनवासकाले तीर्थं चरन्तः पाण्डवा अत्रागताः। कन्याश्रमसेवनेन ब्रह्मलोकप्राप्तिः, कन्यासंवेद्येन मनुलोकप्राप्तिः, कुमारिकातीर्थसेवनेन शक्रलोकप्राप्तिश्च सम्भवति।

सरस्वतीतटे आश्रमदेवादितीर्थानां वर्णनं प्रागेव कृतम्। अवशिष्टानि तीर्थानि विनशन-यायात-प्लक्षावतरण-कारपाचन-चमसोद्भेद-चमसादीनि। विनशनतीर्थे सरस्वती लुप्ततां गता। एतत् सर्वपापनाशकं, वाजपेयफलप्रदं सोमलोकप्रदञ्च मतम्। यायाततीर्थे यायाति समृद्धयज्ञेनोर्ध्वलोकं प्राप्तवान्। प्लक्षावतरणे देवर्षयो राजर्षयो महर्षयो यज्ञान् सम्पादितवन्तः। वरुणदेवोऽत्र राजसूययज्ञं चकार।

कतिपयान्यानि मुख्यतीर्थानि गङ्गाद्वार–प्रयाग–गया–वाराणसी–समन्तपञ्चकाश्वशिरःपिण्डारकाग्निशिरोमिश्रकाख्यानि।

गङ्गाद्वारतीर्थं स्वर्गसदृशम्। अत्र दक्ष इयाज। प्रयागे सर्वभूतपितामह इयाज। अत्र देवर्षयः सिद्धगणाश्च निवसन्ति। राजर्षिगयस्य नाम्नो गया प्रसिद्धा। अत्राक्षयवट–ब्रह्मसरः फाल्गुनी नदी–धर्मारण्य-गयपर्वतादीनि प्रमुखानि तीर्थानि। अत्र श्राद्धदानं महाफलप्रदं, ब्रह्महत्याया मुक्तिः अश्वमेधफलस्य गोलोकस्य च प्राप्ति र्भवति। देवोदासेनेन्द्राज्ञया वाराणसी निर्मिता। अत्र विश्वेश्वरशिवो निवसति। अतः परमपावनं तीर्थमेतत्। समन्तपञ्चकं रामह्रदानां मध्ये प्रतिष्ठितम्। पितृतर्पणं विधाय परशुरामोऽत्र यज्ञे पृथिवीं ददौ। अत्र मरणात् स्वर्गप्राप्तिरिति निश्चप्रचम्। अश्वशिरः तीर्थं दैत्यवधार्थं विष्णुश्चिरमज्ञातरूपेणोवास। मिश्रकतीर्थे व्यासेन द्विजान् प्रत्यनुकम्पया सर्वाणि तीर्थानि संपृक्तानि, अत एवात्र स्नानेन सर्वतीर्थस्नानफलमवाप्यते। वत्सभूमिः सिद्धचारणसेविता वर्तते। अत्र नन्दनाश्रमोलूकाश्रमच्यवनाश्रमब्रह्मतीर्थानि स्थितानि, काशिराजकन्याऽम्बा स्वदेहार्द्धेनाम्बा नदीरूपेण परिणता।

## तीर्थानां वर्गीकरणम्

तीर्थानां वर्गीकरणं तीर्थफलैरुत्पत्तिकारणैः स्थितिभिश्च कर्तुं शक्यते ।

तीर्थैर्मोक्षः पुण्यलोका अन्यदिव्यफलानि ऐहिकलाभाश्च प्राप्यन्ते

उत्पत्तिकारणानुसारं तीर्थानां चतुर्दश विभागाः कृताः । तद्यथा-महर्षिनिर्मितानि धार्मिकतापसीस्त्रीभिर्निर्मितानि, देवनिर्मितानि, राजर्षिनिर्मितानि, अप्सरसोनिर्मितानि, नदीनामुद्गमस्थानानि, सङ्गमस्थानानि, लोपस्थानानि, चर्मराशेरुत्पन्नानि जम्बूफलरसादुत्पन्नानि, वनस्पतिभ्य उत्पन्नानि पाकत्वादुद्भूतानि, अश्वोत्पत्तिहेतुना प्राप्तानि, विस्तारहेतुना प्राप्तानि च ।

स्थित्यनुसारं त्रीणि विभागानि तीर्थानां कृतानि । तद्यथा—वर्तमानभारतीयप्रदेशानुसारं भारतसीम्नो बहिर्भागे स्थित्यनुसारमनिर्णीता स्थित्यनुसारञ्च । वर्तमानभारतसीम्नि गङ्गासरस्वतीयमुनासरयूवासिष्ठाश्रमकण्वाश्रमच्यवनाश्रमगन्धमादनपर्वतचित्रकूटपर्वतेन्द्रपर्वतवराहपर्वतादीनि तीर्थानि विद्यन्ते ।

भारतसीम्नो बहिर्भागेषु लङ्का-बाङ्गलादेश-तिब्बत-पाकिस्ताना-फकानिस्तानादीषु त्रिकूटपर्वत-कालपर्वत-गोपुच्छपर्वत-लौहित्यानदी-गण्डकीनदी-महानन्दानद्यादीनि तीर्थानि सम्मतानि ।

### अनिर्णीतानि तीर्थानि

*नदीतीर्थानिः*—जम्बूफलहावधूसराधारा-कपिलाशतावरी-स्थूलबालुकादीनि ।

*कूपतीर्थानिः*—जनककूप-संवतवापी-ज्येष्ठस्थानकूप-मतङ्गवापीकन्याकूपादीनि ।

*सरोवरतीर्थानिः*—शालिहोत्रसरउत्पलावृत-अपांह्रद-सप्तर्षिकुण्डस्थाणुसरः-पद्मसरोऽगस्त्यसरःसुन्दरिकाह्रदादीनि ।

*समुद्रतीर्थानिः*—सिन्धूतमोऽजनकलवणसमुद्रघृततोयसरोदधर्मसागरादीनि ।

*आश्रमतीर्थानि*-:भृगु-धौम्य-पलाशक-दिलीप-गार्ग्यपितृ-द्रोणसारस्वतादीनि ।

एवमेव देववनवृक्षपर्वतादीनि तीर्थान्यनिर्णीतानि ।

तत्तत्प्रयोजनमुद्दिश्य तीर्थसेवने महाभारतीया नायका रताः। सूतनारदच्यवनशुकजरत्कारुमैत्रेयमाण्डव्यलोमशादयो लोककल्याणार्थं, भगवान्शेषो विरक्तभावेन महर्ष्यष्टकसावित्रीमत्युदेवयः स्वलक्ष्यपूर्तये पाण्डुः शापेन खिन्नो विरक्तभावेन, राजर्षिगाधिः स्वेच्छया, बलरामः क्रोधनिवृत्तये च तीर्थयात्रां चक्रुः ।

धनसम्पन्ना एव यज्ञान् विधातुं शक्नुवन्ति, परं तीर्थयात्रा सर्वसुलभा यज्ञादप्यधिकपुण्यप्रदा च। तीर्थोद्देश्यान्याप्यसंख्यानि। तद्यथा-शौचदानश्राद्धाभीष्टफलप्राप्तिसाधुदर्शनस्वाध्यायाशान्तिशमनपुण्यार्जनानि प्रतीयन्ते। तीर्थयात्राविधानेन बाह्याभ्यन्तःशुद्धः तीर्थं प्राप्योपवासस्नानदेवदर्शनानि कुर्यात्। बाह्यशुद्धिरन्तःशुद्धये साहाय्यं करोति। अन्तःशुद्धिरेव प्राधान्यं भजते पुण्यप्रदा च। मनसोऽदुष्टतैव मानसिकी शुद्धिः। तीर्थानां दर्शनश्रवणमानसध्यानसङ्कीर्तनस्तुत्यादिभिरन्तःकरणशुद्धिः पुण्यफलप्राप्तिश्च भवति। अतः दुर्गमतीर्थानां मानसध्यानेन पुण्यार्जनं क्रियते। सत्यार्जवाहिंसानारायणकथासदाचारादिभिरन्तःकरणशुद्धिः भवति, अतः एतेषां महत्वं तीर्थादप्यधिकम्। सत्याहिंसातपदयाशीलज्ञानाभयधर्मवन्तो यतिविद्वद्विद्याविनीतादीनि तीर्थानि मतानि। तीर्थयात्रया राष्ट्रियैकता प्रान्तीयभेदस्य जातीयभेदस्य च समाप्तिः सांस्कृतिकविकासः पुरुषार्थसिद्धिः, निसर्गदर्शनं चारित्रिकविकासश्च बहुविधा लाभाः सम्भवन्ति।[1]



---

१. डा० राजरामहजारीमहोदयस्य महाभारतीयन्तीर्थानुशीलनमिति शोधनिबंधमाश्रित्य प्रणीतोऽयं लेखः।

# संस्कृतनाट्यं नृत्यञ्च

सुश्री अनूपा देवी

संस्कृतरूपकं कदा कुत्र वा आविर्भूतिं गतमिति केनापि विपश्चिता निश्चयेन वक्तुं नहि शक्यते। प्रायेण संस्कृतवाङ्मयस्य सर्वाण्येवाङ्गानि वेदप्रसूतानि अतएव अलौकिकानि इति भारतीयाचार्याणां सामान्यमभितम्। परमस्माकमग्रे संस्कृतनाट्यस्य यल्लक्षणं यच्च स्वरूपं तत्रैव संस्कृतरूपकस्य बीजमिति निपुणमभ्यूहितव्यम्। नटो नटी नटनं नाटयं नाटकमित्यादीनि सर्वाणि पदानि "नट अवस्पन्दने" इति धातुना निष्पन्नानि। संस्कृतनाट्यसिद्धान्तकारिषु केवलमस्ति नाट्यदर्पणकारो रामचन्द्रः येन नाटकमिति पदस्य निरुक्तिं कुर्वता एको नाटधातुरपि परिकल्पितः—"नाटकमिति नाटयति विचित्रं रञ्जनप्रवेशेन सभ्यानां हृदयं नर्तयतीति नाटकम्।" परं मतमिदं पूर्णतो रामचन्द्रीयम्। भगवता पाणिनिनापि "ञ्य" इति प्रत्ययं विवृण्वता नटधातोः साधुत्वं निरूपितमेव—"छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः (अष्टा: ४।३।१२६)।" किन्तु नाट्यमिति पदस्य कोऽभिप्रायः? अत्र सिद्धान्तकौमुदीकारो वक्ति—"नट नृत्तौ। इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वं पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः।" अतएव नृत्यमभिनयो वा नाट्यस्य सामान्यार्थो वर्तते। परं नर्तनं यदि नाट्यस्य स्वरूपं भवेत् तर्हि सर्वाणि संस्कृतनाटकानि नृत्यस्यैव विलसितानि स्युः। "नृत गात्रविक्षेपे" इति रूढो नटसहचरो धातुरयं स्वाभिधानद्वारेण नाट्यस्यापि सीमानं स्पृशत्येव। प्रायेण सर्वैर्नाट्यलक्षणकारिभिराचार्यैः नाट्यपदस्य विवृत्तिं कुर्वद्भिः नृत्यं नृत्तं वापि पदं व्याख्यातम्। नृत्यमस्ति नाट्यस्योपकारीति तन्मतमिदं अनेकत्र द्रष्टव्यमस्ति। यथाह दशरूपककारो धनञ्जयः—"मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः। लास्यताण्डवरूपेण नाटकाद्युपकारकम्॥ (दश: १।१०)।" गात्रविक्षेपत्वात् नृत्येऽपि अभिनयस्यानिवार्यता भवति। इदमेवार्थं प्रत्यक्षीकुर्वन् स्वावलोके धनिको

वदति—"…नृतेर्गात्रविक्षेपार्थत्वेनाङ्गिकबाहुल्यात्तत्कारिषु च नर्तकव्यपदेशात्… 'नट अवस्पन्दने' इति नटेः किञ्चिच्चलनार्थत्वात्सात्त्विकबाहुल्यम् ।"

अभिनयो रसात्मकस्य नाट्यस्य मौलिकं तत्त्वमिति सुज्ञातमेवास्ति इदमेव तत्त्वं भावात्मके नृत्येऽपि सुस्थितं भवति । अर्थात् एकत्र नाट्ये चतुर्विधाभिनये सात्त्विकस्य प्रायिकत्वमपरत्र च नृत्ये आङ्गिकस्य भूयस्त्वम् । अतो नाट्यं नृत्यञ्च मिथः साहचर्यत्वात् एकीभूत इव संलक्ष्येत इति नात्र विचिकित्सितव्यम् । इदमेवास्ति कारणं यद्भारतीयं नाट्यं नृत्यमूलमिति वक्तुं शक्यते । परं कथं नहि भारतीयं नृत्यमेव नाट्यमूलमिति मतं स्थाप्यते ? अस्माकं देशे वैदिकस्य साहित्यस्यानुशीलनेन स्फुटीभवति यदत्र नाट्यादस्ति नृत्यं प्राचीनतरम् । ऋग्वेदकालेऽपि नृत्यस्य बहुशः प्रयोगो दृश्यते ( ऋग्वेदः १०।१८।३; १०।२९।२; ८।३७।७; ८।८९।३; ८।२४।६; १।१३०।७ आदिः ) । परं नटस्य सर्वप्राचीनः प्रयोगः पाणिनिनैव कृतोऽस्ति ( अष्टा । ३० ११०।१११ ) तथ्यमिदम् अन्यप्रमाणैरपि पुष्टं भवति । उपलब्धेषु नाट्यलक्षणग्रन्थेषु भरतमुनिना कृतं नाट्यशास्त्रं सर्वप्राचीनमिति नात्र कोऽपि संशयः । अत्र संस्कृतनाट्यस्य पञ्चमवेदरूपस्य आविर्भावस्य या कथा ग्रन्थस्यादावेव लभ्यते तत्रापि नृत्यस्य पुराणत्वम् अनुसन्धेयम् । अर्थात् देवानां प्रार्थनां स्वीकुर्वता ब्रह्मणा वेदचतुष्टयात् नाट्यतत्त्वानि संगृह्य प्रथमं विश्वेऽस्मिन् नाट्यवेदोऽकारि । इत्थं नाट्यस्य प्रवर्तयिता ब्रह्माभूत् । परं तदानीं तत्कृतनाट्यशरीरे नृत्यस्य योगो नासीत् । देवलोके देवानामसुराणाञ्च समक्षम् अमृतमन्थननाम्नि समवकारे जगतः प्रथमेनाट्ये समभिनीते भरतादिभिः सहितेन ब्रह्मणा कैलासमागत्य भगवतः शङ्करस्य सामाजिकत्वे त्रिपुरदाहाख्यस्य रूपकप्रकारविशेषस्य डिमस्याभिनयः कारित इत्याहुः । तदनन्तरमेव एतदभिनयावर्जितहृदयेन शङ्करेण नाट्यस्यपूर्वरङ्गस्य कृते स्वकीयनृत्यकौशलं ताण्डवं प्रदत्तवान् । अर्थात् नाट्याविर्भावस्य पूर्वमेव नृत्याचार्यः स्वयम् ईश्वर एवासीत् इत्येतत्समाख्यानमिदं विशदीकरोति । भरतमुनिनापि स्वग्रन्थस्यादौ "प्रणम्यशिरसा देवौ पितामहमहेश्वरौ" इति प्रणतिपुरस्सरम् एतदेव तथ्यं स्थापितमस्ति ।

नृत्तं नटञ्च धातुद्वयममभिलक्ष्य विद्वत्सु बहुविधो विवादोऽपि लक्ष्यते। पण्डितानां मध्ये सर्वप्रथमं पाश्चात्यालोचकप्रवरेण वेबरमहोदयेन तथ्यमिदमुद्घाटितं यत् नृत इति धातुः नट इति धातोरेव प्राकृतीकरणं वर्तते। नटधातोरेव संस्कृतीकृतं रूपं नृतधातुरिति केचित्। परं प्राकृत-साहित्ये नट इति धातोः कुत्रापि अस्तित्वं नहि प्राप्यते। प्राकृतकोश-काराः नड इति धातुं दर्शयन्ति किन्तु प्राकृतभाषायां नट इति धातोः विवेचनं केनापि प्राकृतवाग्विदा नहि कृतमस्ति।[1] अस्माभिस्तु पूर्वमेव प्रपञ्चितमस्ति यत् नृत्यं खलु नाट्यस्य पूर्वजम्। नृत्यप्रयोग एव कालक्रमेण आङ्गिकाभिनयात्मकत्वात् परिपाकमगात्। विपाकेऽ-स्मिन् प्राप्ते नाट्यस्य सत्त्विकाभिनयरूपत्वं विकसितमभूत्। अतएव नृत्ये नाट्ये च उभयविधाभिनयप्रकारे सख्यं बद्धमूलं दृश्यते। अस्मादेव हेतोः नाट्यं नृत्यस्य नृत्तस्य चाप्यर्थे अनेकत्र प्रयुक्तं दृश्यते।

भारतवर्षे नृत्यमार्गेणैव नाट्यमजायत। संस्कृतरूपकाणां विमर्शे-णापि तन्नृत्यपरत्वमवलोक्यते। मालविकाग्निमित्रादिनाट्यग्रन्थेषु नृत्य-कलायाः स्फुटः प्रयोगो दृश्यते। तत्रापि नाट्यस्य नृत्यार्थपरत्वं व्यज्यते। तत्र नाटके छलितनामधेयं नाट्यं मालविकया अभिनीतं भवति। परं यद्यप्यत्र "छलितं" नाट्यमित्यभिहितं तत्तु यथार्थतो नृत्यस्यैव प्रकार-विशेषः। नृत्याचार्यो गणदासैः बकुलावलिकया "एष नाट्याचार्य आर्यगण-दासः संगीतशालातो निष्क्रामति" इत्येवंरूपेण वर्णितो भवति। गण-दासेनापि स्वकुलविद्याभुतं नृत्यात्मकं नाट्यमभिलक्ष्य इत्थमाशंसितम्—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम्॥

—माल० १।४

---

१ प्राकृते णट्ट धातु अस्ति। यथा—णट्टइ—हेमचन्द्राचार्यः (प्रा० व्या० सू० ४, २३०); तथैव प्राकृतशब्दमहार्णवोऽपि द्रष्टव्यः। अत्र णाड (नाट्य अर्थे) धातु वर्तते अतः बेवरमहोदस्य विचारः तथ्यमवगाहते।

—प्रबन्ध-सम्पादकः कपिलदेवगिरिः, चौ० सं० संस्थानम्।

अत्र श्लोके नानारसस्य नाट्यस्य यत्कीर्तनमस्ति तत्सर्वं गणदास-शिष्याया मालविकाया नृत्यकलामुद्दिश्यैव प्रख्यापितं वर्तते। संस्कृत-रूपकेषु अभिनयं कुर्वतो नटस्य विविधाङ्गानां यादृशो विनियोगः दृश्यते तदखिलं नृत्यस्यैव भङ्गिमानं स्मारयति। मुनिना भरतेन हस्ताभिनयं शरीराभिनयप्रभृतिं चोद्दिश्य यन्नटकर्मविस्तरेण विशदीकृतमस्ति तदपि सर्वं नाट्यक्षेत्रे नृत्यकौशलमेव प्रतिपादयति। अर्थात् नृत्याभ्यासं विना कोऽपि नटो रसात्मकं नाट्यं कर्तुमीशो न भवति इति स्फुटमेव प्रतीयते। अभिज्ञानशाकुन्तलस्य प्रथमे अङ्के नायिका शकुन्तला वृक्ष-सेचनं नाट्येन करोति। अत्र महाकविना कालिदासेन प्रयुक्तस्य "नाट्येन" इति पदस्य अर्थवत्तानुसन्धेया। तत्त्वतोऽत्र शकुन्तलाया हस्ते न तु घटमस्ति नहि सा परमार्थदृष्ट्या सेचनमेव करोति न चापि तत्र सेचनार्थं कोऽपि वृक्ष एवावतिष्ठते। परमविद्यमानतयापि एतद्-भावानां, प्रेक्षकाणां कृते तत्तद्वस्तुनः प्रतीतिः क्रियत एव। कथमेतत् सर्वमनुष्ठितं भवति? नृत्यप्रयोगविशदैः शकुन्तलाया अङ्गविशेषैरेव आङ्गिकाभिनयक्रमेण नृत्यमुद्रया असतोरपि भावात्मकमस्तित्वं सप्रकाशं स्थाप्यते। अतो यत्र रूपकेषु स्फुटं नृत्यप्रयोगो न दृश्यते तत्रापि गुण-वृत्त्या नटकर्मणि नृत्यस्य किञ्चित्स्वरूपस्य योगो दृश्यत एव। एतद्विना नाट्यं सफलमेव न भवेत्।

समासतोऽत्र तथ्यमिदं स्थापितं भवति यद्भारतीय नाट्यस्य प्रसूतिः नृत्य एव द्रष्टव्या। कालक्रमेण नृत्यमेवास्माकं देशे नाट्यरूपेण रसात्मिकीं परिणतिं लेभे।

## अष्टादशशतकस्य संस्कृतरूपकाणि

*श्रीरविनन्दनत्रिपाठी*

अष्टादशशताब्द्यां शताधिकानि रूपकाणि विरचितानि । तेषां विभाजनं भरतानुसारं नाटकप्रकरणादिरूपेण वर्तते । तदनुसृत्य रूपकाणां विवेचनं क्रियते ।

### नाटकम्

संस्कृतनाटकानि कथावस्तुदृष्ट्याऽधोलिखितप्रकाराणि सन्ति ।

१—पारम्परिकम् । २—सामाजिकम् ।
३—ऐतिहासिकम् । ४—प्रतीकात्मकम् ।

### शाहजी

*कविपरिचयः*—शाहजी भौसलवंश्यस्य स्कोजि नाम्नो नृपस्य पुत्र आसीत् । अस्य जन्म १६७२ ईशवीयाब्दे बभूव । १७१० ईशवीयवत्सरे चत्वारिंशद्वर्षीयोऽयं पञ्चत्वमाप । विदुषां शरण्येन शाहजिना षट्चत्वारिंशद्-विदुषां वृत्तये शाहजिराजपुरं नाम नगरं प्रदत्तम् ।

*कृतयः*—( १ ) चन्द्रशेखरविलासनाटकम् ।
( २ ) शब्दरत्नसमन्वयकोषः ।
( ३ ) शब्दार्थसंग्रहः ।
( ४ ) पञ्चभाषाविलासनाटकम् ।
( ५ ) द्वे यक्षगाने ( हिन्दीभाषायाम् ) ।

### चन्द्रशेखरविलासनाटकम्

अस्य प्रणयनं १७०५ ईशवीयेऽभवत् । क्षीरसागरनिमन्थनोत्थं कालकूटं विलोक्य भीता इन्द्रादयो देवाश्चतुराननस्य, ब्रह्मादयश्च नारायणस्य, नारायणादयश्च शिवस्य शरणं प्रयान्ति । शिवः समेषां देवानां प्रार्थनां श्रुत्वा कालकूटं पिबति । शिवोदरे संस्थितस्य निखिलस्य जगतो विनाशो

मा भूदिति भवानी तत्कालकूटं शिवस्य कण्ठ एव निरुणद्धि। प्रसन्ना देवाः सुमनसां वृष्टिं कुर्वन्ति। देवानां प्रार्थनां मानयन् महेश्वरश्चन्द्रमसं ललाटे धारयति। नारदीनां मङ्गलगानपूर्वकं नाटकमिदं समाप्यते।

नाटकस्यास्य प्रतिद्वयं तञ्जौरस्य सरस्वतीमहलपुस्तकालये सुरक्षितं विद्यते। तत एव १९६३ ईशवीये डॉ० सुन्दरशर्मणा सम्पाद्य प्रकाशितम्।

## पञ्चभाषाविलासनाटकम्

द्वितीयं शाहजिनो नाटकम्। अस्मिन् तमिल-तेलगू-हिन्दी-मराठी-संस्कृतानां पञ्चभाषाणां प्रयोगो विद्यते।

श्रीकृष्णस्य चतसृभिर्विविधभाषाभाषिणीभिः कन्याभिः समं विवाहस्यास्मिन् नाटके वर्णनं समुपलभ्यते। द्रविडदेशस्य कन्या कान्तिमती तमिलभाषाम्, आन्ध्रप्रदेशस्य कलानिधिः तेलगूभाषाम्, महाराष्ट्रस्य कोलिलभाषिणी मराठीभाषां, तथैवोत्तरप्रदेशस्य सरसशिखामणिर्हिन्दीभाषाम् प्रयुञ्जन्ति। श्रीकृष्णस्य संस्कृतप्रश्नानामुत्तराणि राजकुमार्यः स्वां स्वां मातृभाषामवलम्ब्य प्रददति।

नाटकमिदं तञ्जौरस्थात् सरस्वतीमहलपुस्तकालयात् १९६५ ईशवीये प्रकाशितम्।

## नल्लाध्वरी

*कविपरिचयः*—नल्लाध्वरी कौशिकगोत्रीयो ब्राह्मण आसीत्। नल्लाध्वरिणः समयः सप्तदशशतकस्य पश्चिमोभागस्तथाष्टादश शतकस्य पूर्वभागो वर्तते।

*कृतयः*—( १ ) शृङ्गारसर्वस्वभाणः। } प्रायः सप्तदश
( २ ) सुभद्रापरिणयनाटकम्। } शतकस्य रचने
( ३ ) चित्तवृत्तिकल्याणम्।
( ४ ) जीवन्मुक्ति कल्याणम्।

## जीवन्मुक्तिकल्याणम्

इदं प्रतीकात्मकं रूपकम्। अस्मिन्नाटके जीवस्य जीवनमुक्तया

समं प्रेम्णो वर्णनं वर्तते। जाग्रत्स्वप्नसुषुप्तिषु त्रिष्वप्यवस्थासु स्वपत्न्या बुद्ध्या सार्धं भ्रमन् जीवो विषयसुखादुद्विजति। ततः स मुक्तिं कामयते। रमणीयचरणनामा तस्य मन्त्री स्वात्मजया सत्त्वशुद्ध्या सहास्मिन् कार्ये जीवस्य साहाय्यमाचरति।

बुद्धेः पिताऽज्ञानवर्मा स्वस्यवास्तविकं स्वरूपं जिज्ञासोर्जीवस्य मार्गे विघ्नमुत्पादयति। अनुग्रहस्य मित्रस्य साहाय्येन जीवो ब्रह्म साक्षात्कुरुते।

नाटकस्य कथावस्तु सुघटितं विद्यते। नाटकमिदं पञ्चाङ्केषु विभक्तमस्ति।

इदं नाटकं टी० के० बालसुब्रह्मण्येनैयरेण सम्पादितम्। श्रीशङ्कर-गुरुकुलग्रन्थावल्याः १८ संख्यायां श्रीरङ्गात् १९४४ ईशवीये प्रकाशितम्।

## चित्तवृत्तिकल्याणम्

नाम्नैवास्य नाटकस्य परिचयः। अस्य प्रतिरद्यावधि न प्राप्ता।

## चौवकनाथः

*कविपरिचयः*—चौवकनाथो भरद्वाजगोत्रीय आन्ध्रप्रदेशस्य निवासी ब्राह्मण आसीत्। अस्य समयः सप्तदशशताब्द्याः पश्चिमो भागः, अष्टादशशतकस्य च पूर्वभागोऽस्ति।

*कृतयः*—(१) रसविलासभाणः।
(२) कान्तिमतीपरिणयोऽथवा कान्तिमतीशाहराजीयम्।
(३) सेवन्तिकापरिणयनाटकम्।

## कान्तिमतीशाहराजीयम्

अस्मिन् नाटके पञ्चाङ्काः सन्ति। एतस्मिन् तञ्जौराधिपस्य कान्तिमत्या सह परिणयस्य वर्णनमस्ति।

अप्रकाशितस्यास्य नाटकस्य तिस्रः प्रतयः तञ्जौरस्थ-सरस्वती-महलपुस्तकालये सुरक्षिताः सन्ति।

## सेवन्तिकापरिणयनाटकम्

इदं पञ्चाङ्कमस्ति। अस्मिन् केलदि-वसव-भूपालस्य केरलीयया राजकुमारी-सेवन्तिकया सार्धं परिणयस्य वर्णनं वर्तते।

इदं नाटकं द्वाभ्यां स्थानाभ्यां प्रकाशितम्। तद्यथा—

(अ) मुनगल एस० पट्टाभिरमय्यद्वारा सम्पादितं तथा १९२१ ईसवीये त्रिवेन्द्रस्थ-श्रीधरमुद्रणालयात् प्रकाशितम्।

(ब) सु० नारायणस्वामिशास्त्रिणा सम्पादितं तथा प्राच्यविद्या-संशोधनालयसंस्कृतग्रन्थमालायाः १०१ संख्यायां १९५९ ईसवीये मैसूरात् प्रकाशितम्।

## वेङ्कटेश्वरः

*कविपरिचयः*—वेङ्कटेश्वरो धर्मराजस्यात्मज आसीत्। धर्मराजोऽस्य पिता मणल्लूरनामकेऽग्रहारे निवसति स्म।

वेङ्कटेश्वरः शिवोपासना-निरतो ब्रह्मयोग्यासीत्। असौ तञ्जौरनृपस्य सरफौजीप्रथमस्य (१७११-१७२८ ई०) आश्रयं संप्राप्तवान्।

*कृतयः*—(१) मौसलवंशावलीचम्पूः।
(२) सभापतिविलासनाटकम्।
(३) नीलापरिणयनाटकम्।
(४) राघवानन्दनाटकम्।
(५) प्रतिज्ञाराघवानन्दनाटकम् (अनुपलब्धम्)।
(६) उन्मत्तविलासप्रहसनम्।

## सभापतिविलासनाटकम्

अस्य कथावस्तु दक्षिणभारतीयसुतसंहितामुपजीवति इदं नाटकं शिवस्य स्थलमाहात्म्येन सम्बद्धम्।

नाटककारेण मूलकथायां बहुशः परिवर्तनं कृतम्। मूलकथायां विष्णुना गृहीतं मोहिनीस्वरूपं वीक्ष्य केवलं शिव एव तद्गतमानसः तां कामयते, परन्तु प्रस्तुतनाटके सर्वे मुनयो मुनिकुमाराश्च मोहिनी-सौन्दर्यं दृष्ट्वा कामपीडिता भवन्ति।

सभापतिनाटके शिवं विवस्त्रं विलोक्य क्रुद्धा मुनियोऽभिचार-विधिना शार्दूलसर्पभूतानुत्पाद्य तान् शिवं प्रति प्रेरयन्ति। शिवः शार्दूलं मारयित्वा तस्य चर्म गृह्णाति, सर्पं कङ्कणीकरोति, भूतांश्च सेवकान् विदधाति। मुनिभ्यः प्रक्षिप्तं यज्ञाग्निं च हस्ते धृत्वा पार्वत्या सह नृत्यति। अन्ते च मुनिभिर्नमस्कृतस्तानुपदिशति—मोक्षोपलब्ध्यै शिवलिङ्गम् प्रतिष्ठाप्य पूजयतेति।

नाटकमिदं महामहोपाध्यायदण्डपाणिस्वमिना दीक्षितारेणसम्पादितम्। अन्नमलायात् अन्नमलायसंस्कृतग्रन्थमालायाः २ संख्यायाम् प्रकाशितम्।

## नीलापरिणयनाटकम्

अस्य कथावस्तु सम्भवतः दक्षिणभारतस्य कस्माच्चित् स्थल-पुराणात् संगृहीतमस्ति। नाटकेऽस्मिन् नीलादेवी पृथ्वीदेव्याः शापान्मर्त्यलोके चम्पकमञ्जरीति नाम्ना समवतरति। विष्णुरपि गोप्रलय-गोमिलमुनी समनुग्रहीतुं राजगोपाल इति नाम्ना भुवं स्वजनुषा समलङ्करोति। चम्पकमञ्जरी-राजगोपालौ परस्परं प्रेम्णानुबद्धौ भवतः। नीलादेव्याः प्रतीहारः सुदामापि स्थूलाक्षराक्षसरूपेण पृथिव्यां जन्म लभते। स च चम्पकमञ्जरी राजगोपालयोः परिणये मुनीनां यज्ञे च विघ्नमुत्पादयति, अतः गरुडः तं निहन्ति। राक्षसे हते सति यज्ञो निर्विघ्नं समाप्तिं गच्छति। मुनयः प्रसन्ना भूत्वा चम्पकमञ्जरी-राज-गोपालयोः परिणयं सम्पादयन्ति।

इदं नाटकमप्रकाशितमस्ति। अस्य द्वे हस्तलिखिते प्रती तञ्जौरस्य सरस्वतीमहलपुस्तकालये मिलतः।

## राघवानन्दनाटकम्

अस्य कथावस्तु रामायणात् संगृहीतम्। नाटकेऽस्मिन् मूलकथातोऽतिशयं परिवर्तनं विहितम्। क्वचित् क्वचित् तु रामायणस्य घटनासु पूर्वापरक्रमेऽपि परिवर्तनं कृतम् नाटकप्रणेत्रा। रामस्य वनवाससमय एव शत्रुघ्नेन लवणासुरो निहतः। एवमेव भरतेन गन्धर्वा अपि तदैव पराजिता इत्यस्य निदर्शनम्।

नाटकेऽस्मिन् हनूमानगस्त्यर्षिणा सम्प्रेषितो बालिनः सकाशात् सुग्रीवम् ऋष्यमूकं नयति। नाटके शम्बरासुरो बहूनुपद्रवान् करोति। यो हि पश्चाद्धनूमता पञ्चत्वं प्रापितः। नाटकेऽस्मिन् शम्बरासुरस्य समुपस्थितिर्मूलकथायां न विद्यते। अस्मिन् पञ्चाङ्का विद्यन्ते।

इदमप्रकाशितम्। अस्यैका प्रतिः तञ्जौरस्य सरस्वतीमहलपुस्तकालये सुरक्षिता वर्तते।

## आनन्दरायमखी

*कविपरिचयः*—आनन्दरायमखी शाहजिनः (प्रथमस्य) सरफौजिनः (प्रथमस्य) तथा तुक्कोजिनो धर्माधिकारी सेनाधिकारी चासीत्। अतः कवेः समयः सप्तदशशतकस्यान्तिमे भागे तथाष्टादशशतकस्य प्रथमे भागे भवितुमर्हति।

*कृतयः*—(१) जीवानन्दनाटकम्। (२) विद्यापरिणयनाटकम्।
(३) आश्वलायनगृह्यसूत्रवृत्तिः।

### जीवानन्दनाटकम्

इदं प्रतीकात्मकं नाटकम्। आयुर्वेदस्य सिद्धान्तान् सुस्पष्टान् कर्तुं व्याधयोऽस्मिन् पात्ररूपेण निरूपिताः। आयुर्वेदसिद्धान्तानां स्पष्टीकरणेन सार्धं वेदान्तस्य शिवभक्तेश्च सम्मिश्रणं मञ्जुलतामावहति।

विज्ञानशर्मा शरीरनगरस्य राज्ञो जीवस्य आदेशानुसारं शत्रोर्यक्ष्मण-श्रेष्ठां ज्ञातुं धारणां नियुनक्ति। धारणा यक्ष्मणः सेनां गत्वा तत्प्रवृत्ति समुपलभ्य विज्ञानशर्मणे निवेदयति। विज्ञानशर्मापि तदनुसारं राजानं सूचयति। यक्ष्मा शत्रुर्वातादिभिः तिसृभिः प्रकृतिभिः कामादिभिः षड्-रिपुभिश्च सार्धं शरीरनगरमाक्रमितुं समुत्सुकोऽस्ति। एतच्छ्रुत्वा जीव-राजो यक्ष्मणः संहारं कर्तुमावश्यकानि पारदादीनि सिद्धौषधानि लब्धुं पुण्डरीकपुरे (हृदये) पार्वती-परमेश्वरा उपासते। एवमेव कासादीनां विनाशाय तदुपयुक्तानामौषधीनाम् पात्ररूपेण नामग्रहणमस्मिन् नाटके समुपलभ्यते।

अन्ततो विज्ञानशर्मणो मन्त्रणाम् मानयित्वा जीवराज उमामहेश्वरौ समाराध्य प्रमथगणावृतस्य भवानीसहितस्य शिवस्य दर्शनं लभते।

शिवोऽपि शिरसावनताय सुभक्तिमते जीवाय योगविद्यां प्रददाति। ज्ञान-शर्म-विज्ञानशर्मणोश्चसमानसमादराय चाज्ञापयति।

एवं योगशक्तिद्वारा समेऽपि यक्ष्मादयो रोगशत्रवो विनाशमुपयान्ति। तेन हि जीवराजविज्ञानशर्माणौ सुखिनौ भवतः।

नाटकेऽस्मिन् सप्ताङ्का वर्तन्ते। कथावस्तु सुघटितं सुविभक्तञ्चास्ति। जीवानन्दनाटकस्याधोलिखितानि संस्करणानि मिलन्ति—

( क ) काव्यमालाग्रन्थावल्याः २७ संख्यायां दुर्गाप्रसादपाण्डुरङ्गेण परवेन प्रकाशितम्।

( ख ) अड्यारपुस्तकालयग्रन्थावल्याः ५६ संख्यायां दुरेस्वामि-शास्त्रिणा सम्पादितम्।

( ग ) एडोल्फ-वेकरलिङ्गेन जर्मनभाषायामनूद्य प्रकाशितम्।

( घ ) खुर्जीया नारायणवैद्यकृतटीकया समेतं हरिशास्त्रिणा दाधीचेन सम्पादितम्। १९९० विक्रमाब्दे खुर्जातः प्रकाशितम्।

( ङ ) अत्रिदेवविद्यालङ्कारद्वारा सम्पादितम्। वाराणस्याः पुस्तक-भवनात् प्रकाशितञ्च।

## विद्यापरिणयनाटकम्

आनन्दमखिनः प्रतीकात्मकं द्वितीयं नाटकम्। अस्मिन् नाटके जीवराजस्य विद्यया सह परिणयस्य वर्णनमस्ति।

अविद्यया पत्न्या निपीडितं जीवं दृष्ट्वा भवानी शिवभक्तिमादिशति यत्त्वं निवृत्तेः सहायतया जीवमविद्यातो वियुज्य विद्यया सह संयोजयेति। विवेकस्याग्रहं सम्मानयन् जीवस्य मन्त्री चित्तशर्मा जीवस्य मनसि प्रथमां पत्नीमविद्याम्प्रत्यरुचिमुत्पाद्य विद्यां प्रति तन्मनसि रुचिञ्जनयञ्छिवभक्तेः साहाय्यं करोति। निवृतिश्च जीवराजस्य पुरतः शिवभक्ते-र्महिमानंवर्ण यति। जीवराजे पृच्छति सति निवृत्तिर्विवृणोति यच्छिव-भक्ति-कृपयैव त्वं वेदारण्यं ( शिवक्षेत्रं ) प्रवेष्टुमर्हसि। शिवभक्ति-प्रसादेनैव विद्यासुन्दर्याः प्राप्तिर्भवति। इति श्रुत्वा जीवो विद्याप्राप्त्यै समुत्कण्ठितो भवति। अविद्या स्वसहायकै बहुशो विघ्नान्युत्पादयति। परन्तु जीवराजो महेश्वरभक्तेः कृपया सम्बिकस्य शिवस्य दर्शनं प्राप्नोति

निदिध्यासनेन प्रदत्तां विद्यामपि पत्नीरूपेण संप्राप्य जीवः कृतार्थो भवति ।

अस्मिन्नाटके सुविभक्ताः सप्ताङ्काः सन्ति । नाटकस्यास्य प्रणयनं सरफौजिनः प्रथमस्य शासनकाले (१७११-१७२८ ई०) बभूव ।

नाटकमिदं विद्यापरिणयनाटककाव्यमालायाः ३९ संख्यायाम् प्रकाशितम् ।

## उमापतिरुपाध्यायः

*कविपरिचयः*—उमापतिरुपाध्यायो दरभङ्गाजनपदान्तर्गतस्य कौशल-ग्रामस्य निवास्यासीत् । अनेन हरिहरदेवस्य हिन्दूपतेराश्रयः सम्प्रातः ।

*कृतिः*—पारिजातहरणनाटकम् ।

### पारिजातहरणनाटकम्

उमापतेरुपाध्यायस्यैकैव कृतिरिदं पारिजातहरणनाटकमुपलभ्यते । नाटकमिदं प्रसिद्धां पारिजातहरणकथामुपजीवति ।

अस्याभिनयो हरिहरदेवस्य हिन्दूपतेरादेशात् तस्य योद्धृणां वीर-रसावेशप्रशमनाय तच्छासनकाल एवाभूत् ।

पारिजातहरणनाटकस्य त्रीणि संस्करणानि प्राप्यन्ते ।

(अ) डा० ग्रियर्सनेन सम्पादितं, जनरल आफ विहार एण्ड ओरीसा सोसाइटी-जिल्द ३, २०-९८ पृष्ठेषु प्रकाशितम् ।

(ब) चेतनाथझाद्वारा सम्पादितं तथा दरभङ्गातः १९१७ ईश-वीये प्रकाशितम् ।

(स) नई दिल्लीतः प्रकाशितम् ।

## जगन्नाथः

*कविपरिचयः*—जगन्नाथो विश्वामित्रगोत्रो महाराष्ट्रीयो ब्राह्मण आसीत् । अयं तञ्जौरनृपस्य स्कौजिनो द्वितीयस्य (१७३५-३६ ई०) तथा प्रतापसिंहस्य (१७४१-६४ ई०) आश्रितः कविरासीत् ।

पश्चिमे वयसि जगन्नाथो भासुरानन्दनाथात् (भास्करराय-

दीक्षितात् ) नाथसम्प्रदायस्य दीक्षां गृहीतवान्। दीक्षाप्राप्तेः पश्चादपि जगन्नाथेनानेके ग्रन्था विरचिताः।

*कृतयः*— ( १ ) रतिमन्मथनाटकम्।
( २ ) वसुमतीपरिणयनाटकम्। ( ३ ) हृदयामृतम्।
( ४ ) नित्योत्सवनिबन्धः। ( ५ ) भास्करविलासः।
( ६ ) अश्वधाटीकाव्यम्।

## रतिमन्मथनाटकम्

अस्य कथावस्त्वनेकेभ्य पुराणेभ्यः संगृहीतमस्ति। अस्मिन् रतिमन्मथयोः परिणयस्य वर्णनमस्ति। नाटकप्रणेत्रा मूलकथा बहुशः परिवर्तिता। कौतूहलोत्पादनाय कल्पनाया उन्मुक्तप्रयोगोऽप्यातिशय्येन दृश्यते।

मन्मथद्वारा रतेरट्टालिकायां प्रथमावलोकनम्, प्रथमावलोकन एव तयोः प्रगाढानुरागोद्भवः, रतेर्मन्मथस्य च परस्परमसोढव्यो विरहः, रतेर्धारागृहे शीतापचारः, रतिद्वारा वियोगापनोदनाय मन्मथस्य चित्रनिर्माणं, यदृच्छया कञ्चुकिना समानीते तस्मिन्नेव चित्रफलके स्वचित्रस्य पार्श्वतो मन्मथेन रत्याश्चित्रनिर्माणं, तदवलोक्य, रत्याः प्रमोदः, रत्याः शम्वरासुरेण हरणं, सर्वार्थसाधिकया शम्वररथे रत्याः स्थाने मायावतीं निर्माय तस्यास्तत्र रक्षणम्—इत्यादीनि बहूनि मौलिककल्पनायुतानि स्थलानि सन्ति।

नाटकेऽस्मिन् पञ्चाङ्काः वर्तन्ते अस्य प्रथमाभिनयः तञ्जौरे आनन्दवल्लीदेव्या वसन्तोत्सवे बभूव।

## वसुमतीपरिणयनाटकम्

इदं राजनीतिप्रधानं प्रतीकात्मकं वर्तते। अस्मिन् राजनीति रुपादिष्टा। पात्राणि च प्रतीकात्मकानि सन्ति। अस्य नायको गुणभूषणो गुणैरलङ्कृतस्य राज्ञः प्रतीकमस्ति। नायिका वसुमती च राज्यस्य पृथिव्या वा प्रतीकम्। विवेकनिध्यादयः पात्राणि प्रतीकात्मकान्येव सन्ति।

स्वपितरि राजनि पृथौ दिवङ्गते राजमहिषी सुनीतिः स्वभगिनीं वसुमतीं स्वसमीपे रक्षति। राजा कदाचित्तां स्वप्ने दृष्ट्वा तामेव चिन्तयति। वसुमत्यपि नृपगतमानसा विरहव्यथया व्यथिता चित्रफलके राज्ञश्चित्रं निर्माय तत्सान्निध्येन वियोगं दूरीकरोति। कदाचित् कात्यायनी तच्चित्रफलकं राजानं दर्शयति। राजा तदवलोक्य तस्मिन्नेव चित्रफलके विरहगीतमेकं लिखित्वा तद् वसुमतीं प्रति प्रेषयति ।

वसुमत्यां सार्वभौमप्रणयिन्या गुणानवलोक्य मन्त्री गुणनिधी राजमहिषीं सुनीतिं कथयति यद् राज्ञः सार्वभौमपदोपलब्ध्यै वसुमत्या सह परिणय आवश्यकः। राज्ञी च तमनुजानाति। एवं गुणभूषणो राजा वसुमतीं परिणीय मिथिलाधिपतेः साहाय्येन सार्वभौमत्वं लभते।

नाटकेऽस्मिन् सुघटिताः पञ्चाङ्काः सन्ति। नाटकमिदमप्रकाशितं वर्तते। अस्यैका प्रतिः पूनायाः, भण्डारकर ओरिएण्टल रिसर्च इन्स्टीटयूट, संस्थायामुपलभ्यते।

## विश्वेश्वरपाण्डेयः

*कविपरिचयः*—विश्वेश्वरपाण्डेयस्य पिता लक्ष्मीधर उत्तरप्रदेशस्य पाटियाग्रामे निवसति स्म। लक्ष्मीधरेण काश्यां मणिकर्णिकायास्तटे पार्थिवशिवलिङ्गानां कोटिः समर्चिता। प्रसन्नस्य शिवस्य कृपया लक्ष्मीधरगृहे विश्वेश्वरोऽयं जन्मालभत। एष विलक्षणप्रतिभासम्पन्न आसीत्।

विश्वेश्वरस्य समयोष्टादशशतकस्य प्रथमः पादो वर्तते।

*कृतयः*—(१) अलङ्कार-कौस्तुभं सटीकम्। (२) अलङ्कारमुक्तावली। (३) आर्यासप्तशती। (४) अशौचीयदशश्लोकीय-विवृतिः। (५) कवीन्द्रकर्णाभरणम्। (६) काव्यतिलकम्। (७) काव्य-रत्नम्। (८) तत्त्व-चिन्तामणि-दीधिति-प्रवेशः। (९) तर्ककुतूहलम्। (१०) तारासहस्रनामव्याख्या-अभिधार्थचिन्तामणिः। (११) नवमालिकानाटिका। (१२) नैषधीय-टीका। (१३) मन्दारमञ्जरीकथा। (१४) रसचन्द्रिका। (१५) रसमञ्जरी-टीका। (१६) रोमावलीशतकम्।

(१७) लक्ष्मी-विलासः। (१८) वक्षोजशतकम्। (१९) शृङ्गारमञ्जरी-सट्टकम्। (२०) षड्ऋतुवर्णनम्। (२१) व्याकरण-सिद्धान्तसुधानिधिः। (२२) होलिकाशतकम्। (२३) रुक्मिणी-परिणयनाटकम्।

## रुक्मिणी-परिणयनाटकम्

इदं नाटकमनुपलब्धं विद्यते। केवलमस्य द्वौ श्लोकौ 'अलङ्कार-कौस्तुभे' मिलतः।

# हरिहरोपाध्यायः

*कविपरिचयः*—हरिहरोपाध्यायो वत्सगोत्रो मैथिल-ब्राह्मण आसीत्। कवेः समयविषये विदुषां विप्रतिपत्तयो वर्तन्ते। मुकुन्दझोमेशमिश्रौ हरिहरोपाध्यायस्य समयमष्टादश-शतकस्य पूर्वार्द्धे मानयतः।

*कृतयः*—(१) भर्तृहरिनिर्वेदनाटकम्।
(२) प्रभावतीपरिणयनाटकम्। (३) सूक्तिमुक्तावली।

## भर्तृहरिनिर्वेदनाटकम्

भर्तृहरिनिर्वेनाटके भर्तृहरेर्वैराग्यस्य कथानकं नाटकरूपेणोपन्यस्त-मस्ति। नाटकेऽस्मिन् पञ्चाङ्का विद्यन्ते। इदं नाटकं 'काव्यमाला-सीरीज २९ संख्यायां' बम्बईतः प्रकाशितम्। अस्य प्रकाशनं वाराणसी-तोऽपि सम्भूतम्।

## प्रभावती-परिणयनाटकम्

अस्मिन् नाटके प्रद्युम्नस्य प्रभावत्या सह विवाहस्य वर्णनमस्ति। अस्य कथावस्तु हरिवंशपुराण-श्रीमद्भागवताभ्यां संगृहीतं वर्तते। नाटक-कारेण मूलकथायां बहूनि परिवर्तितानि कृतानि।

वज्रनाभनाम्नो दैत्यस्य तनयां प्रभावतीं प्रद्युम्नं प्रत्यत्सुकापयितुं श्रीकृष्णो भद्रनटं नियुनक्ति। प्रद्युम्नश्च शुचिमुखी हंसीद्वारा प्रदर्शिते चित्रपटे प्रभावतीमवलोक्य ताम्प्रत्यासक्तो भवति। भद्रनटः प्रद्युम्नं विज्ञापयति यत्—प्रभावती भवन्तं प्रत्यासक्तमानसा वर्तते। श्रुत्वैतत् प्रद्युम्नः प्रभावतीहरणं चिकीर्षति।

भद्रनटः श्रीकृष्ण-बलरामयोः परामर्शानुसारं प्रद्युम्नं नाट्यनायकं, गदं पीठमर्दं, साम्बञ्च विदूषकीकृत्य द्वारकानिवासिभिरन्यैरपि शैलूषैः सार्धं वज्रपुरं प्रविशति। देवानाक्रमितुमिच्छुर्वज्रनाभः प्रद्युम्नेन निहन्यते। अपराधक्षमापनाय प्रद्युम्नः प्रभावतीं क्षमां याचते।

नाटकेऽस्मिन् पञ्चाङ्काः सन्ति। इदं नाटकं रमानाथझामहोदयेन सम्पाद्य पटनातः प्रकाशितम्।

## घनश्यामः

*कविपरिचयः*—घनश्यामो महाराष्ट्रीयो ब्राह्मण आसीत्। अस्य मातापितरौ काशीमहादेवावास्ताम्। घनश्यामस्य द्वे विदुष्यौ पत्न्यावास्ताम्–सुन्दरी, कमला च। एताभ्यां राजशेखरस्य विद्धशालभञ्जिकानाटिकायाः टीका लिखिता।

घनश्यामोऽसामान्यो मेधाव्यासीत्। द्वादशवर्षीयोऽसौ युद्धकाण्डचम्पूं प्रणीतवान्। स्वायुषो द्वाविंशद्वर्षे मदनसञ्जीवनभाणं विरचितवान्। घनश्यामेन स्वजीवनकाल एव प्रभूतं यशः प्राप्तम्। अस्याश्रयप्रदाता तञ्जौराधिपतिः तुक्कोजी ( १७२९-१७३५ ) आसीत्।

*कृतयः*—( १ ) भगवत्पादचरितम्। ( २ ) षण्मतिमण्डनम्। ( ३ ) अन्यापदेशकशतकम्। ( ४ ) प्रसङ्गलीलार्णवः। ( ५ ) वेङ्कटेशचरितम्। ( ६ ) स्थलमाहात्म्यपञ्चकम् ( ७ ) रसार्णवः। ( ८ ) कलिदूषणम्। ( ९ ) मदनसञ्जीवनभाणः। ( १० ) कुमारविजयनाटकम्। ( ११ ) आनन्दसुन्दरी-सट्टकम्। ( १२ ) चण्डानुरञ्जनप्रहजनम्। (१३) डमरुकम्। (१४) नवग्रहचरितम्। ( १५ ) प्रचण्डराहूदयः। ( १६ ) अनुभूतिचिन्तामणिनाटिका। ( १७ ) गणेशचरितम्। ( १८ ) त्रिमठीनाटकम्।

एतदतिरिक्तं बहुषु ग्रन्थेषु घनश्यामेन कृताः टीकाः समुपलभ्यन्ते।

### कुमारविजयनाटकम्

अस्य कथावस्तुनः उपजीव्यम् प्रमुखरूपेण स्कन्दपुराणमस्ति। नाटकेऽस्मि रचनाकर्तुरधोलिखिता मौलिककल्पनाः सन्ति—

( १ ) दक्षयज्ञे समुपस्थितान् सर्वानेव ब्रह्मादिदेवान् वीरभद्रो दण्डयति, परन्तु शिवस्य मित्रत्वेन कुबेरं परिहरति ।

( २ ) गौरीजन्मोत्सवे हिमालयः पुरोहितं ब्राह्मणेभ्यो धनं प्रदातुमादिशति ।

( ३ ) केरलदेशीयो मौहुर्तिको गौर्या लक्षणानि वीक्ष्य—अस्याः पतिः शिवो भवितेति भविष्यद् वक्ति ।

( ४ ) गौरीशङ्करौ प्राकृतजनाविव कामपीडामाचरतः .

( ५ ) गौरीमनोविनोदनायोभयानुरागनाटकस्य अभिनयः क्रियते, यस्मिन् पार्वतीशिवयोरेवानुरागवर्णनं कथावस्तुरूपेण सन्निहितमासीत्

नाटकमिदमप्रकाशितमस्ति । अस्य द्वे प्रती तञ्जौरस्य सरस्वती महलपुस्तकालये स्तः ।

## नृसिंहकविः

*कविपरिचय*—नृसिंहकवि भरद्वाजगोत्रो ब्राह्मण आसीत् । अयं मद्रासस्य टिप्लीकेन सम्भागे निवसति स्म । नृसिंहकविर्नैयायिकोप्यासीत् ।

*कृतिः*—( १ ) अनुमितिपरिणयनाटकम् ।

## अनुमितिपरिणयनाटकम्

नृसिंहकविविरचितमनुमितिपरिणयनाटकं प्रतीकात्मकं रूपकमस्ति । न्यायशास्त्रस्य तत्त्वानि पात्रीकृत्य अनुमितेः प्रमाणरूपेणोपयोगिताप्रतिपादकमिदमष्टादशशतकस्यैकमात्रनाटकम् ।

नाटकेऽस्मिन् परामर्शात्मजाया अनुमितेर्न्यायरसिकेन सह परिणयस्य वर्णनं वर्तते

न्यायरसिकस्य प्रथमा पत्नी साक्षात्कारिणी स्वपत्युरनुमितिं ( द्वितीयां पत्नीं ) प्रत्यासक्तिं विलोक्य तस्मै क्रुध्यति । साक्षात्कारिण्याः पिता चार्वाकोऽपि न्यायरसिकाय क्रुध्यति । न्यायरसिकोऽपि रघुनाथशिरोमण्यादीन् तार्किकानाश्रित्य चार्वाकं जयति ।

नाटकस्यास्य प्रथमोऽङ्कः सम्पूर्णो मिलति । द्वितीयोऽङ्कश्चासम्पूर्णोऽस्ति ।

नाटकमिदमप्रकाशितम् । अस्यैका प्रतिः 'गवर्नमेण्ट ओरिएण्टल मेनुस्क्रिप्ट्स पुस्तकालये' उपलभ्यते ।

## श्रीधरः

*कविपरिचयः*—श्रीधरस्य माता-पितरौ, कुलं, जन्मस्थानं सर्वाण्यज्ञातानि । अनेन स्वगुरोर्नाम राम इति निर्दिष्टम् । कस्तावत् स राम इति विषयेऽपि विदुषां विप्रतिपत्तयः सन्ति । श्रीधरः केरलप्रदेशस्थितस्याम्पलपुरनृपस्य राज्याश्रयं प्राप्तवान् । देवनारायणस्य शासनकालोऽष्टादशशताब्द्यामम्पलपुरेऽनुमीयते ।

*कृतिः*—( १ ) लक्ष्मीदेवनारायणीयम् ( नाटकम् ) ।

### लक्ष्मीदेवनारायणीयम्

अस्मिन् नाटकेऽम्पलपुरनरेशस्य देवनारायणस्य नन्दनपुरस्य राज्ञो दिनराजस्य तनयया लक्ष्म्या सह परिणयस्य वर्णनमस्ति । इदमैतिहासिकं रूपकम् ।

वारिभद्रानदीतीरे स्थितस्य वासुदेवस्य दर्शनार्थं राजा देवनारायणो गच्छति । तत्र नदीजले लक्ष्म्याः प्रतिबिम्बमवलोक्य मुग्धो भवति । पश्चाद् नदीतटे सख्या मन्दारनन्दिन्या सार्धं भ्रमन्तीं लक्ष्मीमवलोकयति

लक्ष्मीर्बालनन्दया सख्या देवनारायणं प्रति मदनसन्देशम् प्रेषयति । देवनारायणो भद्रनन्दने मिलितुं संदिशति । तत्र भद्रायुधो नाम राक्षसो लक्ष्मीं हरति । स च सपरिवारं देवनारायणेन निहन्यते । ततो वासुदेवेन सुरक्षितां राज्ञा दिनकरेण च विवाहविधिना सम्प्रदत्तां लक्ष्मीं प्राप्य देवनारायणो मोदते ।

नाटकेऽस्मिन् सुघटिताः पञ्चाङ्काः सन्ति । इदमप्रकाशितमस्ति । अस्य प्रतिद्वयं त्रिवेन्द्रमे केरलविश्वविद्यालयस्य हस्तलिखितग्रन्थालये सुरक्षितं विद्यते ।

## देवराजकविः

*कविपरिचयः*—देवराजः केरलप्रदेशे शुचीन्द्रस्य समीप आश्रमग्रामे निवसति स्म। देवराजः त्रावणकोरस्य राज्ञो मार्तण्डवर्मणः प्रमुखः सभापण्डित आसीत्। मार्तण्डवर्मणो भागिनेयस्य युवराजस्य बालराम-कार्तिक-तिरुणालयस्य देवराजस्योपरि महती कृपासीत्।

देवराजस्य पूर्वजा मद्रासराज्यस्य तिन्वेल्लिजनपदे पट्टमडाहग्रामस्य निवासिन आसन्। पट्टमडाहादेव देवराजःत्रावणकोरमागतः।

*कृतिः*—( १ ) बालमार्तण्डविजयनाटकम्।

### बालमार्तण्डविजयनाटकम्

इदमैतिहासिकं रूपकमस्ति। अस्य नायको बालमार्तण्डवर्मा १७२९ ईसवीयतः १७५८ ईसवीयाब्दं यावत् त्रावणकोरराज्यस्य शासक आसीत्। अस्मिन् नाटके मार्तण्डवर्मणः पद्मनाभं प्रति भक्तेर्वर्णनं विद्यते।

बालमार्तण्डवर्मा राज्याद् निर्विण्णो भवति, यतो हि शासन-कार्येण भक्त्यां विविधा बाधा जायन्ते। पद्मनाभो नायकं प्रेरयति—यत्त्वं मम प्रतिनिधिरूपेण राज्यं कुरुष्व। एवं ते कापि बाधा मोहो वा न भविता। एतेन प्रेरितो भूत्वा बालमार्तण्डवर्मा बहूनि राज्यानि विजित्य, तेभ्यो धनान्यादाय त्रिवेन्द्रमस्थस्य पद्मनाभमन्दिरस्य जीर्णोद्धारं कारयति। पद्मनाभस्य च महाभिषेकं सम्पादयति।

बालमार्तण्डनाटके ऐतिहासिकतथ्यैः सह कविकल्पनाया मञ्जुलोऽभिनिवेशो विहितः। नाटकमिदं सुसंगठितेषु पञ्चाङ्केषु सुविभक्तमस्ति। बालमार्तण्डविजयनाटकस्य सम्पादनं शिवशास्त्रिणा कृतम्। १९३० ईसवीयवत्सरे त्रिवेन्द्रमात् 'संस्कृतसीरीज १०८ संख्यायाम्' प्रकाशितम्।

## शङ्करदीक्षितः

*कविपरिचयः*—शङ्करदीक्षितो भरद्वाज-कुले समुत्पन्नो महाराष्ट्रीयो

ब्राह्मणः काश्यां निवसति स्म । अस्य पितामहो ढुण्ढिराजो विदुषामग्रगण्यो बभूव । शङ्करदीक्षितः १७८० ईसवीयाब्दे दिवं जगाम ।

*कृतयः*—( १ ) प्रद्युम्नविजयनाटकम् । ( २ ) शारदातिलकभाणः ।
( ३ ) गङ्गावतारचम्पूः । ( ४ ) शङ्करचेतोविलासचम्पूः ।

## प्रद्युम्नविजयनाटकम्

इदं शङ्करदीक्षितेन १७३६ ईशवीयाब्दे प्रणीतमम् । नाटकस्य कथावस्तु हरिवंशपुराणात् संगृहीतम् । नाटककारेण मूलकथायां बहूनि परिवर्तनानि कृतानि ।

वज्रनाभदैत्येन्द्रस्योपद्रवैः खिन्न इन्द्रः सर्वमेतद् वृत्तान्तं श्रीकृष्णाय निवेदयति । रुक्मिण्या भद्रनटेन च साकं श्रीकृष्णः प्रद्युम्नस्य विवाहविषये परामृशति । भद्रनटो वज्रनाभदैत्यस्य तनयां शीलरूपसमन्वितां कन्यारत्नं प्रभावतीं प्रद्युम्नस्य योग्यां वधूं समर्थयति । रुक्मिण्यपि प्रभावत्यास्तथारूपगुणश्रवणेन संहृष्टा तदानयनं समर्थयति ।

इन्द्रः कुटनीतिं पुरस्कृत्य हंसीमाध्यमेन प्रद्युम्नस्य शौर्यसौन्दर्यादिगुणानां वर्णनं प्रभावत्याः समक्षं कारयित्वा तां प्रद्युम्नं प्रत्युत्सुकापयति ।

प्रद्युम्नो नटाचार्यरूपेण शैलूषरूपधारिभ्यां गदसाम्बाभ्यां भद्रनटेन च सार्धं वज्रनाभस्य राजधानीं वज्रपुरं नाम नगरं प्रविशति । तदनु चान्येऽपि यादववीराः शैलूषरूपधारिणः तन्नगरं प्रविशन्ति । तत्र च प्रभावती-प्रद्युम्नयोः परिचयः संजायते । प्रभावती प्रद्युम्नस्य प्रद्युम्नश्च प्रभावत्याः लोकोत्तरसौन्दर्येण विमोहितावनुरागरज्जुना निबद्धौ भवतः । वज्रनाभ एतत्सर्वं ज्ञात्वा सर्वान् शैलूषान् हन्तुमादिशति । तुमलं युद्धं सम्पद्यते । वज्रनाभो विक्रम्य प्रद्युम्नेन निहन्यते ।

नाटकेऽस्मिन् सप्ताङ्का विलसन्ति । प्रत्येकस्याङ्कस्य नामापि पृथक्पृथगङ्कान्ते सुनिर्दिष्टम् । इदमप्रकाशितं वर्तते । अस्यैका हस्तलिखिता प्रतिर्वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवन-

पुस्तकालये विद्यते। द्वितीया प्रतिः 'एशियाटिकसोसाइटी' नाम्नि संस्थायां कलकत्तानगरे समुपलभ्यते।

## चयनीचंद्रशेखरराजगुरुः

*कविपरिचयः*—चन्द्रशेखरो वत्सगोत्रोत्पन्न उत्कलनिवासी ब्राह्मण आसीत्। चयननाम्नोयज्ञस्य सम्पादकत्वेनायं चयनीत्युपाधिना समलङ्कृतः। चन्द्रशेखरो गोपीनाथस्य राजगुरोर्द्वितीयः पुत्र आसीत्। अनेन खुर्दस्य ( उड़ीसा ) राज्ञो गजपतिवीरकेशरीदेवप्रथमस्य राज्याश्रयः समुपलब्धः। अयं राजा १७३६ ईशवीयतः १७७३ ईशवीयाब्दं यावच्छासनं चकार। अतश्चन्द्रशेखरस्यापि स एव समयो भवितुमर्हति।

*कृतिः*—( १ ) मधुरानिरुद्धनाटकम्।

### मधुरानिरुद्धनाटकम्

अस्य कथावस्तु हरिवंशपुराण-श्रीमद्भागवतपुराण-विष्णुपुराणेभ्यो गृहीतमस्ति। अस्मिन्नाटके श्रीकृष्णपौत्रस्यानिरुद्धस्य बाणासुरात्मजयोषसा सार्धं विवाहस्य वर्णनं विद्यते। कविर्मूलकथायां बहूनि परिवर्तनानि कृतवान्। बाणासुरद्वारानिरुद्धस्य नागपाशनिबन्धनं तु परित्यक्तमेव। ज्वालादेवीसमाराधनात् प्राप्तखेचर्यन्तर्धानविद्योऽनिरुद्धो बाणभटैरवलोकयितुमपि न शक्यते। अन्येषु कविकृतपरिवर्तनेषु किमपि वैशिष्ट्यं न समुत्पन्नम्। वस्तुवर्णनबाहुल्याद् गति शैथिल्यमपि वरीवर्ति।

नाटकेऽस्मिन्नष्टावङ्काः सन्ति। प्रत्येकस्याङ्कस्यान्ते तस्य नामग्रहणकं वर्तते। अस्योड़ियालिप्यां द्वे प्रती भुवनेश्वरस्य राजकीयसंग्रहालये समुपलभ्येते।

## द्वारकानाथः

*कविपरिचयः*—द्वारकानाथो वङ्गप्रदेशस्य नवद्वीपजनपदान्तर्गतस्य श्रीपाटमङ्गलदेहिग्रामस्य निवास्यासीत्।

*कृतिः*—गोविन्दवल्लभनाटकम्।

## गोविन्दवल्लभनाटकम्

अस्य कथावस्तु श्रीमद्भागवतादादिपुराणाच्च संगृहीतमस्ति। मूलकथास्मिन् नाटके प्रकामं परिवर्तिता। नाटकेऽस्मिन् बालकृष्णः स्वाग्रजेन बलदेवेन श्रीदामसुदामभ्याञ्च मित्राभ्याम् अन्यैश्च गोपबालकैः सह गोचारणाय गोकुलाद् वृन्दावनं जिगमिषुः पितरं नन्दमनुज्ञां याचते। नन्दश्च ज्योतिर्विदं समाहूय गोचारणाय मुहूर्तं पृच्छतीति सर्वथा नवीना घटना वस्तुनि संयोजिता।

गाश्चारयितुं गच्छन् कृष्णो मार्गे श्रीदाम्न आग्रहं सम्मानयन् गोपबालकैः समं वृषभानुपुरीं प्रयाति। तत्र श्रीदाम्नो जननी श्रीकृष्णं सगोपबालकं बहु समाद्रियते। तत्रैव राधा-कृष्णौ परस्परं संवीक्ष्य स्नेहसिक्तमानसौ भवतः। वृन्दावने तयोर्मिलनं सम्पद्यते। राधायाः प्रार्थनातः श्रीकृष्णः सखीभिः समं राधां नौकया यमुनायाः पारं प्रापयति। नाटककारेण नौकायामपि राधा-कृष्णयोर्विहारस्य वर्णनं कृतम्।

नाटकेऽस्मिन् हास्यरसोद्भावनाय मधुमङ्गलो नाम विदूषकः परिकल्पितः। स नाम मधुमंगलो हरिणम् अश्वं मत्वा तमारोहति। हरिणस्य प्लुतैर्भीतमना रक्षायै कृष्णमाक्रोशति। एवमेव मधुपानमत्तो हलमुसलधरो बलदेवो यमुनापुलिने गोपबालान् ताडयितुमनुधावन् यमुनाजले गोपबालकानां प्रतिबिम्बान् दृष्ट्वा तानेव गोपबालान् मन्वानो यमुनाजले कूर्दति। बहुसमयं यावत् तत्रैव विहरति। पश्चाद् बलिष्ठैर्गोपै यमुनाजलाद् बहिर्निःसार्यते। प्रकृतिस्थः सन् बलदेवः सर्वान् क्षमा याचते। एषोऽपि प्रसङ्गो हास्यं जनयति।

गोविन्दवल्लभनाटके षडङ्का सन्ति। इदं नाटकं हरिदासेन सम्पादितम् नादियातो बङ्गाक्षरेषु प्रकाशितम्

## राजविजयनाटकम्

अस्य प्रणेता हेमेन्द्रनाथदासगुप्तानुसारं कश्चन बंगवासी कविरासीत्। नाटकस्य रचना १७५१ ईशवीयाब्दस्य समीपे समभवत्। अस्य रचयिता बंगनवाबस्य मीरकासिमस्य पटनास्थितस्योपराज्यपालस्य

नृपराजवल्लभस्याश्रितः कविरासीत्। इदं नाटकमैतिहासिकं सामाजिकञ्च वर्तते।

राजविजयनाटके राज्ञा राजवल्लभेन सम्पादितस्य सप्तसंस्थाज्ञयस्य वर्णनं विद्यते औत्कलपण्डितमतानुसारं यज्ञे ऽस्मिन्नम्बष्ठानां (वैद्यानां) यज्ञोपवीतधारणं यज्ञसम्पादनञ्च वेदसम्मतिमिति प्रमाण-पुरस्सरं स्पष्टीकृतम्।

नाटकस्यास्य द्वावेवाङ्कौ प्राप्येते। तत्रापि द्वितीयोऽङ्कोऽसम्पूर्णः। अस्यैका हस्तलिखिता प्रतिर्ढाकाविश्वविद्यालये ६२३५ (सी) संख्यायां सुरक्षिताऽस्ति

## रामपाणिवादः

*कविपरिचय* :—रामपाणिवादः केरलप्रदेशे अम्पलवासिजात्याः पाणिवादोपजात्यां (नम्बियारोपजात्यां) संबभूव। अयं मङ्गलग्रामे निवसतिस्म। अनेन प्रथमतः स्वपितुरेव विद्याः समधिगताः। अनन्तरं नारायणभट्टाद् गुरोरधीतवान्। अम्पलपुरस्य राजा देवनारायणः तस्याश्रयप्रादाऽऽसीत्। १७५० ईसवीयाब्दे मार्तण्डवर्माऽम्पलपुरं जितवान्। ततः पश्चाद् पाणिवादः त्रावणकोरं गतवान्। मार्तण्डवर्मण आश्रये पाणिवादः सीताराघवनाटकं प्रणीतवान्। रामपाणिवादः कविर्नाटककारष्टीकाकारश्चासीत्।

*कृतय* :—(१) सीताराघवनाटकम्। (२) मदनकेतुचरित-प्रहसनम्। (३) लीलावतीवीथी। (४) चन्द्रिकावीथी। (५) शिवागीतिः। (६) विष्णुविलासः। (७) राघवीयम्। (८) कंसवहोऽथवा कंसवधः। (९) उषानिरुद्धम्। (१०) भागवतचम्पूः। (११) सूर्यशतकम्। (१२) मुकुन्दशतकम्। (१३) शिवशतकम्। (१४) विलासिनी। एतेषां ग्रन्थानामतिरिक्तं रामपाणिवादस्य बहुषु ग्रन्थेषु टीका अप्युपलभ्यन्ते।

### सीताराघवनाटकम्

अस्य कथावस्तु रामायणमुपजीवति। अस्मिन्नाटके यज्ञरक्षार्थं विश्वामित्र द्वारा रामलक्ष्मणयोरानयनादारभ्य रावणवधानन्तरं राम-

राज्याभिषेकं यावद् रामचरितस्य वर्णनमस्ति। रचनाकारेणास्मिन् नाटके बहु परिवर्तनं कृतम्। बह्व्यो नवनवाः कल्पनाः कथावस्तुनि संयोजिताः।

सीताराघवनाटके मायावसु-करम्बकौ नामकौ राक्षसौ ताटका-सुबाह्वोः प्रतिशोधार्थमात्मनोर्दशरथ-सुमन्त्रयोः स्वरूपं प्रकल्प्य मिथिलां गत्वा सलक्ष्मणं रामं शिवधनुषो भङ्गान्निवारयतः। तस्मिन्नेव समये वास्तविकदशरथसुमन्त्रयोः समागमनाद् राक्षसौ पलायेते। तथैव परशुराममपि मायावसू राक्षस एव रामलक्ष्मणयोर्वधाय प्रेरयति। मायावसुरेव रावणेन सीताहरणस्य योजनां निर्माति।

मन्थराचरित्रपरिमार्जनाय कविनैका नवीना कल्पना कल्पिता। सूर्पणखाया दासी मन्थरायित्वा रामवनवासाय कैकेयीमुत्तेजयति। एवमेव मन्त्री प्रहस्तो रावणं विलोभयितुं सीतायाश्चित्रं प्रदर्शयति। तच्चित्रं दृष्ट्वा रावणः सीतालावण्यसमाहृतमानसः तदाहरणाय चेष्टते।

सीताराघवनाटके रामो मिथिलात एव वनं प्रयाति। मायावसुरिन्द्रचारणस्य व्रणाङ्गदस्य रूपं धृत्वा रामलक्ष्मणसुग्रीवाणां समीपं गत्वाऽलीकं घोषयति यद् हनूमान् मेघनादेन पञ्चत्वं प्रापितोऽङ्गदेनापि प्राणा विसर्जिता इति। परन्तु दधिमुखस्तदैव समागत्य सूचयति—हनुमदादयः समागता इति। राक्षसः पुनरपि पलायते।

अनसूयया प्रदत्तस्याङ्गराजस्य लोपामुद्रया वनदेवतामन्दारवती द्वारा लङ्कास्थां सीतां प्रति प्रेषणमपि कवेर्मौलिका कल्पना।

नाटकेऽस्मिन् सप्ताङ्का विलसन्ति। इदं नाटकं शूरनाट्-कुञ्जन-पिल्लै-द्वारा सम्पादितम् त्रिवेन्द्रमात् त्रिवेन्द्रमसंस्कृतसीरीज १८२ संख्यायां १९५८ ईसवीयवत्सरे प्रकाशितम्।

## अश्वतितिरुणालरामवर्मा

*कविपरिचय* :—अश्वतितिरुणालरामवर्मा कार्तिकतिरुणालरामवर्मणो (१७-५८-९८ ई०) भागिनेय आसीत्। १७५८ ईसवीयाब्देऽयं युवराजपदमलभत।

अश्वतितिरुणालरामवर्मा कार्तिकतिरुणालवर्मणोऽत्यधिकं प्रेम-भाजनमासीत्। अश्वतिः स्वभावतः कविरासीत्। अनेन संस्कृते मलयालमभाषायाञ्च बह्वो ग्रन्था ग्रथिताः।

*कृतयः*—(१) रुक्मिणीपरिणयनाटकम्। (२) शृङ्गारसुधाकरभाणः।
(३) सन्तानगोपालप्रबन्धः। (४) कार्तवीर्यविजयप्रबन्धः।
(५) वञ्चिमहाराजस्तवः। (६) दशावतारदण्डकम्।

एतदतिरिक्तमम्बरीषचरितादयो ग्रन्था मलयालमभाषायां सन्ति।

## रुक्मिणीपरिणयनाटकम्

अस्य कथावस्तु प्रमुखतया श्रीमद्भागवतपुराणात् संगृहीतमस्ति। नाटककारेण स्वरुच्यनुसारम् मूलकथानके भूरिशः परिवर्तनं कृतम्।

रुक्मिणीपरिणयनाटकानुसारं वासुभद्रः (श्रीकृष्णः) रुक्मिणी-स्वयम्बरविषये विस्तृतां सूचनामुपलब्धुममात्यमुद्धवं ब्राह्मणं कपिञ्जलञ्च प्रेषयति। तौ तत्र विदर्भनगरे स्वयम्बरविषयकं निखिलं वृत्तान्तं ज्ञायेते। कुण्डिनपुरादुद्धवः श्रीकृष्णं पत्रद्वारा सूचयति—'मयाऽत्रत्याः सर्वे मन्त्रिणो, विदर्भनृपतेः प्रियमित्राणि, रुक्मिण्याः सख्यश्च भवता सार्धं परिणयाय स्वपक्षे कृतानि। केवलं रुक्मी शिशुपालेन सह रुक्मिण्या विवाहमिच्छति। शिशुपालं रुक्मिणञ्च वञ्चयितुं मया शोभनोपायश्चिन्तित इति।' इतश्च शिशुपालस्य मित्रं शाल्वराजः शिशुपालार्थं रुक्मिण्या हरणं करोति। श्रीकृष्णः चक्रसुदर्शनेन रुक्मिणीं शाल्वराजात् परिरक्षति।

रुक्मिणीपरिणयनाटके वासुभद्रः स्वं मुक्ताहारं मक्मिण्याः काम-सन्तापदूरीकरणाय प्रेषयति। रुक्मिणी च चित्रफलके वासुभद्रस्य चित्रं निर्माय, तस्य चरणयोर्निपत्य विलपति। रुक्मिण्याः सखी नवमालिका गौरी-विलास-प्रासादे रुक्मिणी-वासुभद्रयोः समागमं कारयति। नवमालिका शिशुपालस्य विवाहार्थं स्वसखीमनङ्गसेनां मण्डपे नयति। तया सह शिशुपालस्य विवाहः सम्पद्यते। इमां प्रवञ्चनां ज्ञात्वा शिशुपालस्य मित्राणि जरासन्धादय उद्धवनिवासस्थानं निरुन्धन्ति। वासुभद्रो जरासन्धेन सह संग्रामाय तत्परो भवति। परन्तु जरासन्धादयः पलायन्ते। श्रीमद्भागवते नैवम्। एतत्सर्वं कविकल्पनाप्रसूतं वस्तु।

नाटकेऽस्मिन् पञ्चाङ्का विद्यन्ते। अस्य प्रकाशनं बम्बईतः 'काव्यमालासंस्कृतसीरीज ४० संख्यायां' सञ्जातम्।

## सदाशिवदीक्षितः

*कविपरिचय* :—सदाशिवदीक्षितः भरद्वाजगोत्रोत्पन्नो ब्राह्मण आसीत्। मीनाक्षीचौवकनाथावस्य मातापितरावास्ताम्। सदाशिवदीक्षितः त्रावणकोरस्य नृपतेः कार्तिकतिरुणाळ्वर्मणः सभापण्डित आसीत्।

*कृतय* :—( ) लक्ष्मीनारायणनाटकम्।
( २ ) वसुलक्ष्मीकल्याणनाटकम्।
( ३ ) रामवर्मयशोभूषणम्।

### लक्ष्मीकल्याणनाटकम्

इदमैतिहासिकं रूपकं वर्तते। अस्मिन्नाटके कविनैतिहासिकवस्तुनि कल्पनाया मञ्जुलं सम्मिश्रणं कृतम्। नाटके लक्ष्मी-पद्मनाभयोः परिणयस्य वर्णनं विद्यते।

एकदा बालरामवर्मा ( १७५८-९८ ई० ) नभोवाणीं शृणोति—'राजन्! सूर्योदये लक्ष्मीः कमलोदरात् कन्यारूपेण प्रादुर्भूय तव कुलमलङ्कृतं करिष्यतीति।' लक्ष्मीरेवं बालरामवर्मणा शिशुरूपेण सम्प्राप्ता। शनैः शनैर्यौवनं प्राप्तवती लक्ष्मीर्मोकन्दोद्याने पतिरूपेण विष्णुं प्राप्तुं तपस्तपति। नारदः समागत्य बालरामवर्माणं कथयति यद् 'भवतः कन्यायाः पद्मनाभेन सह विवाहो भवितेति।'

लक्ष्म्याः पृथिव्यामवतारस्य कथैवमस्ति। एकदा विनोदनार्थं लक्ष्मीर्विष्णोरक्षिणी स्वपाणिभ्यां संवृते कृतवती। एतेन भूमण्डलम् पीडितं मत्वा विष्णुर्लक्ष्मीं शपतिस्म यत्—'त्वं भूमण्डले क्वचिदवतीर्य मां प्राप्नुहीति।' तदनुसारं लक्ष्मीर्बालरामवर्मणो गृहेऽवततार विष्णुश्च त्रावणकोरस्य मन्दिरेऽवतरति स्म।

नारदस्यानुरोधं सम्मानयन् विष्णुर्लक्ष्म्या साकं विवाहं स्वीकरोति। पद्मनाभो वृद्धविप्ररूपं धृत्वा लक्ष्म्या अनुरागं परीक्षमाणः परिहासोक्तिभिर्विष्णुमुपहसति। लक्ष्मीरेतद् दृष्ट्वा भृशं कुप्यति। स्वं प्रति लक्ष्म्याः प्रगाढं स्नेहं वीक्ष्य विष्णुर्वृद्धब्राह्मणरूपं परित्यज्य स्वकीयं

रूपं दर्शयति । विष्णुं दृष्ट्वा लक्ष्मीः प्रहर्षनिर्भरा जायते । तदा लक्ष्म्याः सख्यो विष्णुं कथयन्ति—'अस्याः पिता राजर्षिः कुलशेखर इमां भवते प्रदातुं चिन्तितोऽस्तीति' । ततः पश्चात् प्रेमासक्तमानसौ लक्ष्मी-पद्मनाभौ विवाहतिथिं प्रतीक्षमाणौ वियोगवह्नौ परितपतः । ततः शुभे मुहूर्ते-सखिभिः कृतमण्डना लक्ष्मीः स्वयम्वरे पद्मनाभं वृणुते ।

लक्ष्मीकल्याणनाटके सुसंगठिताः सुविभक्ताश्च पञ्चाङ्काः सुशोभन्ते । इदमप्रकाशितम् । अस्यैका हस्तलिखिता प्रतिः त्रिवेन्द्रमस्य विश्व विद्यालय-हस्तलिखित-पुस्तकालये प्राप्यते ।

## वसुलक्ष्मीकल्याणनाटकम्

इदं नाटकमांशिकरूपेणैतिहासिकं रूपकं विद्यते । अस्मिन् त्रावण-कोरनृपस्य बालरामवर्मणः ( १७५८-९८ ई० ) सिन्धुराजकुमार्या सार्धं विवाहस्य वर्णनमस्ति । सिन्धुराजो वसुलक्ष्म्याः परिणयं बालरामवर्मणा सह चिकीर्षति, परन्तु सिन्धुराज्ञी वसुलक्ष्म्याः परिणयं स्वभ्रातृजेन सिंहलराजकुमारेण सह कर्तुमिच्छति । सिन्धुराज्ञी कुलदैवतदर्शनापदेशेन वसुलक्ष्मीं सिंहलदेशं गमयति । दैवयोगान्नौका वञ्चिभूमेस्तटं प्राप्नोति । वञ्चिभूमे संरक्षको राजमहिषी-वसुमत्या भ्राता वसुभद्राजो वसुमती प्रधानमन्त्रिणो नीतिसागरस्य समीपे प्रेषयति । नीतिसागरो वसु-लक्ष्म्याः सद्गुणान् श्रुत्वा तां महिष्या वसुमत्याः संरक्षणे रक्षति । कदा-चिद् वसुलक्ष्म्या लोकोत्तरं सौन्दर्यं संवीक्ष्य बालरामवर्मा विमोहितो भवति । वसुलक्ष्मीं प्रति राज्ञः तथाविधमाकर्षणं विलोक्य वसुमती तस्या विवाहं स्वपितृव्यजेन पाण्ड्यराजेन सह कर्तुं निश्चिनोति । वसुमत्या निश्चयं विफलयितुं विदूषकेण वामनेन सह राजा योजनां निर्धारयति । विदूषकेण सह राजा सानुचरस्य पाण्ड्यराजस्य कपटवेशं निर्माय वसु-मतीतो वसुलक्ष्मीं प्राप्नोति ।

वसुलक्ष्म्याः पिता सिन्धुराजो नीतिसागरस्य संदेशं प्राप्य सपरिजनः त्रिवेन्द्रमं समागत्य वसुलक्ष्मी-बालरामवर्मणोः परिणयमनुमोदते । वसुलक्ष्मीकल्याणनाटके पञ्चाङ्काः सन्ति ।

## वेङ्कटसुब्रह्मण्याध्वरी

*कविपरिचयः*—वेङ्कटसुब्रह्मण्याध्वरी वेङ्कटेश्वरमखिनो ज्येष्ठपुत्र आसीत्। अयं सुप्रसिद्धस्याप्पयदीक्षितस्य वंशे प्रादुर्बभूव। अयं वैयाकरणो, मीमांसकः, तर्कविज्ञश्चासीत्। अयं काव्यार्थस्य मर्मज्ञो वेद-विद्यायामपि सुप्रवीणः पण्डितोऽभवत्। कविरयं सरस्वत्याः परमोपासको बभूव। अनेन त्रावणकोरनृपस्य कार्तिक-तिरुणाळ्रामवर्मणः सभायाः सभापण्डितपदमलङ्कृतम्।

*कृतिः*—वसुलक्ष्मीकल्याणनाटकम्।

### वसुलक्ष्मीकल्याणनाटकम्।

अस्य नाटकस्य कथावस्तु सदाशिवविरचितस्य वसुलक्ष्मीकल्याण-नाटकस्य कथावस्तुवद् वर्तते। अस्मिन्नपि वसुनिधेः पुत्र्या वसुलक्ष्म्याः त्रावणकोरस्य नृपतिना कार्तिकतिरुणाळ्रामवर्मणा सह विवाहस्य वर्णनं विद्यते। अस्मिन्नाटके हूणराजस्य समावेश एव विशेषं वस्तु। शेषं सदाशिवस्य वसुलक्ष्मीकल्याणनाटकवदस्ति। अस्मिन्नपि पञ्चैवाङ्का विलसन्ति।

नाटकमिदमप्रकाशितं विद्यते। अस्यैका हस्तलिखिता प्रतिर्विश्व-विद्यालयस्य हस्तलिखित-पुस्तकालये प्राप्यते।

## शिवकविः

*कविपरिचयः*—शिवकविर्यमुनातटसंस्थितस्य णाणेर( नानेर )नगस्य निवास्यासीत्। क्वेदं नगरमित्यादि न ज्ञायते। अस्य जननी-जनक-योर्वंशस्यापि च नाम नोपलभ्यते। कवेरेकमात्रकृतेर्विवेकचन्द्रोदय-नाटकस्य कस्यचन महाधिराजस्य सभायामभिनयोऽभूदिति स्वयं कविनैव लिखितम्। परन्तु तस्य महाराजस्य नाम्न उल्लेखो न कृतः। कविकृतेः प्रणयनम् १७६३ ईसवीयवर्षे संजातम्।

*कृतिः* ( १ ) विवेकचन्द्रोदयः।

## विवेकचन्द्रोदयनाटकम्

अस्मिन् नाटके विवेकस्याधर्मादेरुपरि विजयस्य वर्णनं विलसति। रुक्मिणी-कृष्णयोः परिणयस्याप्यस्मिन् वर्णनम् विराजते। एवं हीदं नाटकं पारम्परिक-प्रतीकात्मकनाटकयोरन्तराले सुशोभते।

सिद्धिदेवश्चारुकण्ठस्य पुरस्तादिन्द्रजालमनुसृत्य रुक्मिणी-परिणयं प्रदर्शयति। तत्रैव दुर्विनयादय इन्द्रस्योपरि दोषारोपणं कुर्वन्ति। अधर्मस्यानुचरो दुर्विनयो धर्मस्य मन्त्रिणे विवेकाय प्रदातुम् पत्रं लिखति। पत्रे तपोव्रतादिनियमाननावश्यकान् प्रतिपाद्य कामक्रोधादीन् स्तौति। इन्द्रादिदेवान् प्रति स्वाधिकारान् परित्यज्याधर्मादेः सेवानुष्ठानायाप्यस्मिन् पत्रे समादिष्टम्।

देवाश्चेदं पत्रमुपहसन्ति। देवाज्ञया विनयो दुर्विनयमुपदिशति। विवेको धर्मं प्रशस्याधर्मस्य दोषानाविष्करोति। विवेकवचनाद् दुर्विनयादयः ततः प्रपलाय्य शिशुपालरुक्म्यादीन् प्रविशन्ति। रुक्मिणी-कृष्णयोः परिणयस्य कथावस्तु श्रीमद्भागवतपुराणकथानुषङ्गि विद्यते। पात्रबाहुल्याद् वर्णनबाहुल्याच्च नाटकेऽस्मिन् शैथिल्यं वरीवर्ति। नाट्यनिर्देशानामपि सम्यक् परिपालनमस्मिन् न कृतम्।

विवेकचन्द्रोदयनाटके चत्वारोऽङ्काः सन्ति। नाटकमिदं के० ह्वी० शर्मणा सम्पादितम्। होशियारपुरस्य विश्वेश्वरानन्दसंस्थानात् प्रकाशितम्।

## नृसिंहकविः

*कविपरिचयः*—नृसिंहकविर्मैसूरराज्ये 'सनगर' नाम्नि ब्राह्मणानां विद्वत्परिवारे सम्बभूव। अस्य पितुरभिधानं शिवराम इत्यासीत्। नृसिंहकविना स्वजनकादेव शास्त्राण्यधीतानि। अस्य द्वितीयो गुरुर्योगानन्दनामा सन्यासी बभूव। कवेः तृतीयो गुरुः पेरुमलोऽभवत्। नृसिंहस्याश्रयप्रदाता मैसूरनृपतेः श्वसुरः प्रधानमन्त्री च नञ्जराज आसीत्। अयं कविः 'अभिनव कालिदास' इत्यपि कथ्यते।

*कृतयः*—(१) चन्द्रकलाकल्याणनाटकम्।

( २ ) नञ्जराजयशोभूषणम् । (३) शिवदयासहस्रकाव्यम् ।

### चन्द्रकलाकल्याणनाटकम्

अस्मिन्नाटके कुन्तलराजरत्नाकरस्य तनूजायाश्चन्द्रकलाया मैसूर-राज्यस्य प्रधानमन्त्रिणा नञ्जराजेन सह पाणिग्रहणस्य वर्णनं विद्यते ।

नाटकेऽस्मिन् पञ्चाङ्काः सन्ति । अस्य प्रकाशनं 'नञ्जराजयशोभूषणेन' सह तदङ्गत्वेन संवृत्तम् । 'नञ्जराजयशोभूषणं' नाम ई० कृष्णमाचार्येण सम्पादितम् । 'गायकवाड़ ओरिएण्टल सीरीज ४७ संख्यायां' बड़ौदातः १९३० ईसवीयाब्दे प्रकाशितम् ।

## कविचन्द्रो द्विजः

*कविपरिचयः*—कविचन्द्रो द्विजोऽसमप्रदेशे निवसति स्म । अस्य मातापित्रोः परिचयो नोपलभ्यते । असमप्रदेशस्य 'आहोमवंशोद्भवो' राजा शिवसिंहः ( १७१४–१७४४ ई० ) तस्य चाम्बिका–प्रणयेश्वरी-नाम्न्यौ पट्टमहिष्यौ कवेराश्रयप्रदातार आसन् ।

*कृती*—( १ ) कामकुमारहरणनाटकम् ।
( २ ) धर्मपुराणस्य चासमभाषायामनुवादः ।

### कामकुमारहरणनाटकम्

अस्य नाटकस्य प्रणयनसमये प्रणयेश्वरीदेवी बृहद्राजपदमधितिष्ठति स्म । कामकुमारनाटकस्य निर्माणं सम्भवतः १७२५ ईसवीयाब्दादारभ्य १७३१ ईसवीयाब्दस्य मध्ये सम्पन्नम् । नाटकेऽस्मिन् बाणासुरा-त्मजयोषसा सह प्रद्युम्नतनयस्य विवाहो व्यावर्णितः ।

कामकुमारहरणनाटके षडङ्का विलसन्ति । नाटकमिदं डॉ० सत्येन्द्र-शर्मणा सम्पादितम् । असमप्रदेशस्थात् जोरहाटतः रूपकत्रय-संस्करणे १९६२ ईसवीयवर्षे प्रकाशितम् ।

## हरियज्वा अथवा हरिदीक्षितः

*कविपरिचयः*—हरीयज्वा मैसूरराज्यस्य धारवारजनपदस्थे नरगुन्दग्रामे

शाण्डिल्यगोत्रे ब्राह्मणपरिवारे समजनि। लक्ष्मीनृसिंहावस्य जननी-जनकावास्ताम्। अस्य कुलदैवतमपि नृसिंहो भगवानेव। नरगुन्दस्य राजा रामराव-दादाजी-भावे हरियज्वन आश्रयप्रदातासीत्। हरियज्वना संस्कृते मराठीभाषायाञ्च ग्रन्था ग्रथिताः।

कृतयः—(१) ब्रह्मसूत्रवृत्तिः (बादरायणसूत्राणां व्याख्या)।
(२) मितभाषिणी (श्रीमद्भगवद्गीतायाष्टीका)।
(३) बालानन्दिनी (श्रीशिवगीतायाष्टीका)।
(४) सारसंग्रहः। (५) विवेकमिहिरनाटकम्।
(६) कंसान्तकनाटकम्। (७) नृसिंहनाटकम्।

एतदतिरिक्तं भावबोधन्यादयो सप्त ग्रन्था मराठीभाषया विरचिताः।

## विवेकमिहिरनाटकम्

इदं नाटकं प्रतीकात्मकं रूपकमस्ति। अस्मिन् मोहविवेकादयः पात्राणि प्रतीकात्मकानि विद्यन्ते।

विवेकमिहिरनाटके राज्ञो विवेकस्य प्रतिपक्षिणो मोहस्योपरिष्टाद् विजयस्य वर्णनं वर्तते। मोहस्यानुचराः कामक्रोधादयो मोहस्य समक्षं स्वबलविक्रमं वर्णयन्तः श्लाघन्ते, परन्तु विवेकस्य विजयाभिनिष्क्रमणं श्रुत्वैव सर्वे पलायन्ते।

विवेको मोहं निन्दति। विदूषको मोहं विवेकाद् बलवत्तरं समर्थयति। स्वनिन्दां श्रुत्वा विवेको विमनस्कायते। आचार्योपदेशेन विदूषकनिन्दाकारणात् खिन्नतां परित्यज्य पुनरपि प्रहृष्टचेता भवति।

आचार्यो विवेकमनुजानाति यत्—त्वया शमदमादिभिः समं भक्त्याश्शरणं गन्तव्यमिति। श्रद्धाभक्त्यौ चाप्याचार्येण समाज्ञप्ते यद्—युवाभ्यां शमदमादिभिः समं विवेकः परिपोषणीय इति। अन्तत आचार्योपदेशेन जीवः कृतार्थतां लभते।

विवेकमिहिरनाटके पञ्चाङ्काः सन्ति। नाटकेऽस्मिन् नाट्यशास्त्र-नियमानामुल्लङ्घनं पदे-पदे दृश्यते। इदमप्रकाशितम्। अस्य द्वे हस्त-लिखिते प्रती भारतेतिहाससंशोधकमण्डले पूनायामुपलभ्येते।

### कंसान्तकनाटकम्

नाटकेऽस्मिन् श्रीकृष्णस्य लीलानां वर्णनं वर्तते। अस्मिन् पञ्चाङ्काः सन्ति। हरियज्वन इदमपि नाटकमप्रकाशितं विद्यते। अस्यैका प्रतिः 'ओरिएण्टल-रिसर्च-इस्टीच्यूट' नाम्न्यां संस्थायां मैसूरे प्राप्यते।

### नृसिंहनाटकम्

अस्मिन्नाटके हरियज्वना कविना स्वकुलदैवतस्य भगवतो नृहिंस्य महिम्नो वर्णनं कृतम्। नाटकस्यास्य प्रथमद्वितीयावङ्कौ पुरुषार्थ-पत्रिकायां नरगुन्दतः प्रकाशितौ।

## काशीपतिकविराजः

*कविपरिचयः*—काशीपतिकविराजः कौण्डिन्यगोत्रोत्पन्नो ब्राह्मणो मैसूर-राज्ये न्युवास। रामपतिरस्य पितासीत्। काशीपतिकविराजो मैसूर-नृपतेः कृष्णरावद्वितीयस्य (१७३४-६६) सर्वाधिकारिणो नञ्जराजस्या-श्रितः कविरासीत्। अयं दर्शनशास्त्रे प्रावीण्येन सार्धं सरसकवित्वेऽपि नैपुण्यं प्राप।

*कृती*—(१) मुकुन्दानन्दभाणः। (२) श्रवणानन्दिनीव्याख्या।

## कृष्णदत्तः

*कविपरिचयः*—कृष्णदत्त आनन्ददेवीसदारामयोरात्मज आसीत्। अयं 'डालवाणीयजोशी'त्यभिधीयते स्म। वागजालजनपदस्य त्रामठी-ग्रामोऽस्य वसतिर्बभूव।

*कृती*—(१) सान्द्रकुतूहलप्रहसनम्। (२) राधारहस्यकाव्यम्।

## प्रधानवेङ्कप्पः

*कविपरिचयः*—प्रधानवेङ्कप्पो भार्गवंश्यो ब्राह्मणो वागम्बिका-हम्पार्ययोः तनय आसीत्। वेङ्कप्पो मैसूरभूपतेः कृष्णरावद्वितीयस्य (१७३४-६६ ई०) कृपया सर्वाधिकारिणो नञ्जराजस्य अध्यक्षतायां 'प्रधान'—पदं प्राप्तवान्। ततः परं वेङ्कप्पो मैसूराराज्यान्नञ्जराजस्य बहिष्करणे कृष्णराजद्वितीयस्य साहाय्यमाचरत्। ततः पश्चाद् कृष्ण-

राजेन वेङ्कप्पो सेनां विहाय सर्वेषां विभागानां रिनीक्षकपदे नियुक्तः। वेङ्कप्पो राघौवानृपेण सह सन्धि विधाय मैसूरं संग्रामविभीषिकातो ररक्ष।

वेङ्कप्पोऽनेकेषु युद्धेषु सक्रियरूपेण सम्मिलितोऽभूत्। १७७१ ईसवीयाब्दस्य अप्रैलमासे महाराष्ट्रमैसूरयोर्भीषणे युद्धे हैदरअलीतनयेन टीप्वा ( टीपू-महोदयेन ) सार्धं समरे सम्मिलितो बभूव।

सफलदुरभिसन्धिकारित्वेन वेङ्कप्पो हैदरअली-कोपभाजनं बभूव। अस्य पदावनतिं विधाय हैदरअली राजधानीतः ( श्रीरङ्गपत्तनात् ) सुदूरे सीरनामके स्थानेऽमुं नियुक्तवान्।

वेङ्कप्पः संस्कृत-कन्नड़-तेलगू-भाषाणां प्रकाण्डपण्डित आसीत्।

*कृतयः*—(१) कामकलाविलासभाणः। (२) कुक्षिम्भरभैक्षवप्रहसनम्।
(३) महेन्द्रविजयडिमः। (४) वीरराघवव्यायोगः।
(५) लक्ष्मीस्वयम्वरसमवकारः। (६) सीताकल्याणवीथी।
(७) रुक्मिणीमाधवाङ्कः। (८) उर्वशीसार्वभौमेहामृगः।

एवं वेङ्कप्पो दशरूपकेषु नाटकं प्रकरणञ्च विहाय सर्वाणि रूपकाणि रचयाम्बभूव।

(९) अलङ्कारमणिदर्पणः। (१०) जगन्नाथविजयकाव्यम्।
(११) सुधाफ्री (गद्यकाव्यम्)। (१२) कुशलवविजयचम्पूः।
(१३) हनुमच्छतकम्। (१४) सूर्यशतकम्।

## रामचन्द्रशेखरः

*कविपरिचयः*—अयं तञ्जौरनृपस्य ( १७४१-६४ ई० ) प्रतापसिंहस्याश्रितः कविर्बभूव। अयं रसज्ञो वैयाकरणश्चासीत्। अनेन पौण्डरीकनामा यागः सम्पादितोऽतः 'पुण्डरीकयाजी'—त्यपि जनैरभिधीयते स्म।

*कृतिः*—(१) कलानन्दनाटकम्।

### कलानन्दनाटकम्

अस्य नाटकस्योपजीव्यं नन्दकचरितं वर्तते। अस्मिन् राज्ञो नन्दकस्य कलावत्या सह परिणयाख्यानं वर्णितम्। नाटकेऽस्मिन् सप्ताङ्काः सन्ति। इदमप्रकाशितम्। अस्य हस्तलिखिता प्रतिः तञ्जौरस्थे सरस्वती-महल-पुस्तकालये प्राप्यते।

## कृष्णदत्तमैथिलः

*कविपरिचयः*—कृष्णदत्तमैथिलो दरभङ्गाजनपदस्य 'उभान' नामके ग्रामे निवसति स्म। अयं श्रोत्रियब्राह्मणपरिवारे सम्बभूव। कृष्णदत्तश्छिन्नमस्तकाया देव्या उपासकश्चमत्कारी प्रतिभानवान् कविरासीत्।

*कृतयः*—(१) कुवलयाश्वीयनाटकम्। (२) पुरञ्जनचरितनाटकम्।
(३) गीतगोपीपतिकाव्यम्।
(४) चण्डिकाचरितचन्द्रिकाकाव्यम्।
(५) गीतगोविन्दस्य गङ्गाभिधाना टीका।

### कुवलयाश्वीयनाटकम्

अस्य कथावस्तु मार्कण्डेयपुराणान् कविना सङ्कलितम्। नाटककारेण मूलकथायां बहूनि परिवर्तनानि कृतानि। नाटकेऽस्मिन् सोमशर्मा वाराणसीं गत्वा तत्रत्यं नृपालमाश्रमेषु राक्षसानामुपद्रवविषये सूचयति। ततः पश्चाद् गालवो नाम मुनिः सुशील-पुण्यशीलाभ्यां शिष्याभ्यां कुवलयनाम्ना तुरङ्गमेण चानुगम्यमानो वाराणसीधीश्वरं शत्रुजितं यज्ञरक्षायै राजकुमारं ऋतुध्वजं याचते।

प्रस्तुतनाटकानुसारं कुवलयोऽश्वो मुनिना गालवेन भगवतो भास्करात समुपलब्धम्। तदारोहणत्वाद् राजकुमार 'कुवलयाश्व' इत्यभिधां प्राप्नोति।

कुवलयाश्वीनायटककथावस्त्वनुसारं पातालकेतु राक्षसाधिपतिः कङ्कालक-करालकनामानौ स्वानुचरौ गालवाश्रमं कुवलयाश्वस्य हरणार्थं प्रेषयति। तयोः कङ्कालकः साधुवेशं निर्माय राजकुमारहरणस्योपयुक्तं समयं प्रतीक्षमाणो गालवाश्रमे तिष्ठति। मुनिः स्वशिष्यं शालङ्कायनमादिशति—राजकुमारमाश्रमसम्भागान् दर्शयति। राक्षसः कङ्कालकः शालङ्कायनवेशं रचयित्वाऽऽश्रमसौन्दर्यं दर्शयन् कुवलयाश्वं दूरं नयति। एतस्मिन्नेव समये पातालकेतुर्मुन्याश्रममाक्रामति। आश्रमनिवासिनो राजकुमारं रक्षायै सार्तनादमाह्वयन्ति। तेषामार्तनादं श्रुत्वा त्वरया कुवलयाश्वमाश्रमं प्रविशतमवलोक्य पातालकेतुः पलायते। कुवलयाश्वः पातालकेतुमनुधावन् पातालद्वारं प्राप्नोति तदैव पातालकेतुः

तिरोभवति । राजकुमारः पातालं प्रविश्य तत्र पातालकेतुमन्विष्यति । सर्वतो राक्षसमन्विष्यन् मदालसाभवनं निकषा कुवलयाश्वो मदालसा-सख्या कुण्डलया विलोक्यते । कुण्डला मदालसया राजकुमारं परिचाययति । मदालसा कुवलयाश्वं विलोक्यासक्ता भवति । कुवलयाश्वोऽपि तामुपयुक्तां पत्नीं मनुते ।

प्रस्तुतनाटकानुसारं मदालसातातस्य विश्वावसोः मुनेर्गालवस्य च स्वीकृतिं प्राप्य तुम्बुरुः तौ परिणयसूत्रे निबध्नाति । पातालान्निःसरणसमये ससेनः पातालकेतुः कुवलयाश्वमाक्रामति । कुवलयाश्वेन सेनासमेतो राक्षसो विक्रम्य हन्यते । ततो गालवो मुनिरिदं वृत्तान्तं वाराणसीनरपतिं प्रेषयति । राजा शत्रुजिद् राजकुमारस्य पराक्रमेण सन्तुष्टः कुवलयाश्वं युवराजपदेऽभिषेचयति ।

पातालकेतोः प्रतिशोधपरोऽनुचरो कङ्कालकेतुर्मुनिवेशं निर्माय यज्ञसम्पूर्त्यै कुवलयाश्वं तत्कण्ठाभरणं याचते । राजकुमारेण तस्मै कण्ठाभरणं प्रदत्तम् । तल्लब्ध्वा 'अहं वरुणाराधनार्थं यामी'-ति कथयित्वा गालवाश्रमाद् वाराणसीं गत्वा कुवलयाश्वस्य मृत्युं घोषयति । मृत्योः प्रमाणरूपेण तदेव कण्ठाभरणं दर्शयति । राजकुमारस्य निधनं श्रुत्वा तदसोढव्यं दुःखमसहमाना मदालसा प्राणांस्त्यजति ।

कुवलयाश्वीयनाटकम् नाट्यशास्त्रनियमानुकूलं सुसङ्घटितं रूपकं विद्यते । अस्मिन् सप्ताङ्का विलसन्ति ।

नाटकमिदमप्रकाशितम् । अस्यैका हस्तलिखिता प्रतिर्दरभङ्गायां कामेश्वरसिंहसंस्कृतविश्वविद्यालये प्राप्यते ।

## पुरञ्जनचरितम्

अस्य नाटकस्य कथावस्तुन उपजीव्यं श्रीमद्भागवतपुराणस्य पुरञ्जनोपाख्यानं वर्तते । इदं प्रतीकात्मकं रूपकम् ।

स्वनिवासानुकूलं नगरं विचिन्वन् राजापुरञ्जनः सचिवेन सुसाधनेनानुगम्यमानः प्रवरापुरीं प्राप्नोति । तत्र पुरञ्जनस्य पुरस्वामिन्या पुरञ्जन्या सह विवाहो संजायते । असूचयित्वा मृगयां गतवते पुरञ्ज-

नाय पुरञ्जनी क्रुध्यति। पुरञ्जनेन बहुशोऽनुनये कृते सति पुरञ्जनी मानं परिहरति। ततश्च तौ पुरविहाराय गच्छतः।

चण्डवेग-भय-प्रज्वारैरनुगता कालकन्यका पुरञ्जनपुरमाक्रामति। कालकन्यकया पुरञ्जनोऽज्ञातरूपेणोपभुज्यते। तेन पुरञ्जने जरा-दौर्बल्यादि-लक्षणानि लक्ष्यन्ते। पुरञ्जनी पुरञ्जनं परित्यज्यान्यत्र व्रजति। पुरञ्जनोऽपि तत्पुरं विहायान्यत्र प्रयाति।

विदर्भान् गच्छन् पुरञ्जनो सहसात्मानं वैदर्भीनारीरूपेऽवलोकयति। तस्याश्च विवाहं वैदर्भराजकुमारेण मलयध्वजेन सह सम्पद्यते। अविज्ञातलक्षणो नाम सुहृत् नवलक्षणायाः कामधेन्वाः साहाय्येन पुरञ्जनस्य तस्य वास्तविकेन रूपेण परिचयं कारयति। पुरञ्जनश्च तज्ज्ञात्वा तस्मै साधुवादं प्रयच्छति।

पुरञ्जनचरितनाटकस्य सर्वाणि पात्राणि प्रतीकात्मकानि सन्ति। अत्र पुरञ्जनो जीवात्मनः, पुरञ्जनी बुद्धेरविद्याया वा, अविज्ञातलक्षणः सुहृदीश्वरस्य, प्रजागरसर्पः प्राणवायोः; चण्डवेगः सम्वत्सरस्य, कालकन्यका वृद्धावस्थायाः, भयो मृत्योः, नवलक्षणाधेनु र्नवधाभक्तेः प्रतीकानि सन्ति।

पुरञ्जनचरितनाटकस्य कथावस्तु सुघटितं विद्यते। अस्मिन् पञ्चाङ्काः सुशोभन्ते।

नाटकमिदं कुमारीनीलमसोलङ्कीद्वारा सम्पादितम्। 'चरोतर-बुक-स्टाल आनन्द, पश्चिम रेल्वे' द्वारा प्रकाशितम्।

## रमापतिरुपाध्यायः

*कविपरिचयः*—श्रीउपाध्यायो वत्सगोत्रोत्पन्नो मैथिलो ब्राह्मणः पुल्लीपुरे सम्बभूव। रमापतेः पितुर्नाम कृष्णमतिरुपाध्यायोऽवर्तत। कविरयं वेदोपनिषदां विद्वान् सरसकविश्चासीत्।

रमापतिना मिथिलानृपस्य नरेन्द्रसिंहस्य (१७४४-६१ ई०) राजाश्रयः सम्प्राप्तः। डॉ० जयकान्तमिश्रानुसारं मिथिलानरपेर्नरपति-ठक्कुरस्य पौत्री रमापतेः पत्नी बभूव।

*कृतिः*—रुक्मिणीपरिणयनाटकम्।

## रुक्मिणीपरिणयनाटकम्

अस्मिन् नाटके षडङ्का सन्ति । अस्मिन् रुक्मिणी-कृष्णयोर्विवाहस्य वर्णनं विद्यते नाटकमिदं डॉ० जयकान्तमिश्रेण सम्पादितम् । अखिल-भारतीयमैथिलीसाहित्यसमितिना १९६१ ईसवीयाब्दे प्रकाशितम् ।

## लालकविः

*कविपरिचयः*—लालकवेर्जननीजनकयोर्जातिनिवासस्थानयोश्च विषये किमपि न ज्ञायते । कविनात्मनः कृते सुकवि-चतुर-गणकशब्दाः प्रयुक्ता । सम्भवतोऽस्याश्रयप्रदाता नरेन्द्रसिंहः ( १७४४-६१ ई० ) आसीत् ।

*कृतिः*—गौरीस्वयंवरनाटकम् ।

## गौरीस्वयंवरनाटकम्

इदं नाटकं मिथिलायाः 'कीर्तनियानाटक'-परम्परानुसारं नाटककारेण विरचितम् । अस्य कथावस्तु पार्वती-शिवयोः परिणयवर्णनमस्ति । महाकविकालिदासस्य कुमारसम्भवमस्याधारः ।

इदं नाटकं डा० जयकान्तमिश्रः सम्पादितवान् । मैथिलीसाहित्य-समितिना इलाहाबादतोऽस्य प्रकाशनं संजातम् ।

## नीलकण्ठमिश्रः

*कविपरिचयः*—वत्सगोत्रोत्पन्नस्य नीलकण्ठस्य पितरौ सुवर्णादेवी-दिव्यसिंहावास्ताम् । अयमुत्कलप्रदेशे नरसिंहग्रामे निवसति स्म । ग्रामोऽयं सम्प्रति 'केवोंझरगढ़' इत्युच्यते । केवोंझगढस्य जनार्दनभञ्जः ( १७६२-१८३१ ई० ) एवास्य राजाश्रयप्रदातासीत् ।

*कृतिः*—( १ ) भञ्जमहोदयनाटम् ।

## भञ्जमहोदयनाटकम्

भञ्जमहोदयनाटके केवोंजरराज्यस्येतिहास-भूगोलयोर्वणनमस्ति । अतो विनायकमिश्रेणेदं नाटकं केवोंझरराज्यस्य 'गजेटियर' इति कथितम् ।

नाटकेऽस्मिन् दशाङ्का सन्ति। अस्य सम्पादनं बाणेश्वराचार्येण कृतम्। उड़ियालिपौ नाटकमिदं १९४६ ईसवीयवत्सरे कटकतः प्रकाशितम्।

## भोलानाथशुक्लः

*कविपरिचयः*—भोलानाथो गङ्गायमुनयोर्मध्ये देवकालीपुरस्य निवासी कान्यकुब्जब्राह्मण आसीत्। पौष्करीदेवी-नन्दरामावस्य मातापितरावास्ताम्। अयं संस्कृ-हिन्दीभाषयोः प्रकाण्डपण्डित आसीत्। अस्याश्रयप्रदातारौ राजस्थानस्य भट्टराजा सदाशिवो, जयपुरनरेशः सवाईमाधवसिंहश्चाभूताम्।

*कृती*—(१) कर्णकुतूहलनाटकम्। (२) श्रीकृष्णलीलामृतकाव्यम्।

### कर्णकुतूहलनाटकम्

अस्मिन् नाटके त्रयाणां कुतूहलानां वर्णनं विद्यते। नाटकमिदं गोपालनारायण-बहुरा-द्वारा सम्पादितम्। राजस्थान-पुरातन-ग्रन्थमालायाः २६ ग्रन्थाङ्के जयपुरादिदं प्रकाशितम्।

## वैद्यनाथ-वाचस्पतिभट्टाचार्यः

*कविपरिचयः*—वैद्यनाथवाचस्पतिभट्टाचार्यो वङ्गदेशीयो ब्राह्मण आसीत्। अस्य पितरौ, जन्मस्थानञ्च न ज्ञायन्ते। अयं नवद्वीपनृपतेरीश्वरचन्द्रस्य (१७८८-१८०२ ई०) राजाश्रयं लब्धवान्।

*कृतिः*—(१) चित्रयज्ञनाटकम्।

### चित्रयज्ञनाटकम्

नाटकेऽस्मिन् शिवगणेन वीरभद्रेण दक्षयज्ञविध्वंसनस्य वर्णनं विद्यते। अस्मिन् पञ्चाङ्काः सन्ति। इदमप्रकाशितम्। अस्यैका हस्तलिखिता प्रतिः संस्कृतकालेजे कलकत्तायां लभ्यते।

## शीघ्रकवीश्वरो जगन्नाथः

*कविपरिचयः*—अयं गुजरातप्रदेशस्य नहानीबौरुग्रामे वत्सगोत्रे ब्राह्मणपरिवारे जन्मालभत। अस्य पितुर्नाम कुबेर इत्यासीत्।

जगन्नाथः स्वपितुरेव संस्कृतमधिजगाम। अनन्तरं ४० दिवसं यावद् उपोस्य बहुचरां देवीमर्चयामास। प्रसन्ना देवी जगन्नाथायाशुकवित्वं प्रदत्तवती। अतोऽयं शीघ्रकवीश्वरत्वेन ख्यातिमाप्नोत्।

जगन्नाथस्य भावनगर-पूना-बड़ौदाराज्येषु बहुसम्मानमासीत्। भावनगरस्य राजा बखतसिंहो भाग्यमहोदयेन नाटकेन प्रसन्नो भूत्वा जगन्नाथायायकरीं भूमिं, निवासाय भवनञ्च प्रायच्छत्। पूनाराज्यतोऽनुवर्षं नानाफणनबीसेन सप्तशतानि रूप्यकाणि स्वीकृतानि। एवमेव बड़ौदाराज्येन प्रतिवर्षं शतद्वयमस्मै प्रदीयते स्म।

जगन्नाथश्चित्र-नृत्य-संगीत-कलास्वपि परमविचक्षण आसीत्।

*कृतयः*—(१) भाग्यमहोदयनाटकम्। (२) वृद्धवंशवर्णनम्।
(३) नागरमहोदयः। (४) श्रीगोविन्दरावविजयः।
(५) अमृतबीजस्तवनम्। (६) रमारमणांघ्रिसरोजवर्णनम्।
(७) अमरेलीस्थो नागनाथमन्दिरशिलालेखः।
(८) प्रासङ्गिक-प्रास्ताविकश्लोकाः। (९) हाटकेश्वराष्टकम्।
(१०) प्रासङ्गिक-प्राकृत-संस्कृतश्लोकपूर्तिः।

### भाग्यमहोदयनाटकम्

नाटकेऽस्मिन् भावनगरस्य राज्ञो बखतसिंहस्य यशसो वर्णनमस्ति। बखतसिंह एवास्मिन् भाग्यसिंहाभिधानो नृपतिः। इदं नाटकं जगन्नाथेन १७९५ ई० वर्षे प्रणीतम्।

भाग्यमहोदयनाटकं देवशङ्करवैकुण्ठजीभट्टेन सम्पादितम्। भावनगस्य सरस्वतीमुद्रणालयाच्च १९१२ ईसवीयाब्दे प्रकाशितम्।

## वेङ्कटाचार्यः (तृतीयः)

*कविपरिचयः*—वेङ्कटाचार्यतृतीयोऽप्यावेङ्कटाचार्यः, कीर्तिवेङ्कटाचार्यश्च

कथ्यते। अस्य जनकोऽण्णयाचार्यः, पितामहश्च श्रीनिवासतातार्य आस्ताम्।

वेङ्कटाचार्यतृतीयेन स्वपितृव्याच्छ्रीनिवासाचार्यद्वितीयात् तथैवाग्रजाच्छ्रीनिवासाचार्यतृतीयादधीतम्।

*कृतयः*—(१) शृङ्गारतरङ्गिणीनाटकम्। (२) गजसूत्रार्थः।
(३) कृष्णभावशतकम्। (४) अलङ्कारकौस्तुभम्।
(५) अचलात्मजापरिणयः।
(६) शृङ्गारलहरी, लक्ष्मीशतकं वा।
(७) दशावतार-स्तोत्रम्। (८) हयग्रीवदण्डकम्।
(६) यतिराजदण्डकम्। (१०) झञ्झामारुतः।

## शृङ्गारतरङ्गिणीनाटकम्

अस्य नाटकस्य कथावस्तु मुख्यतया पद्मपुराणात संगृहीतमस्ति। नाटककारेण मूलकथायां बहूनि परिवर्तनानि कृतानि।

शृङ्गारतरङ्गिणीनाटके सत्यभामाया मानं रक्षता भगवता कृष्णेन स्वर्गतः पारिजातस्यानयनस्य वर्णनं वर्तते।

नाटकेऽस्मिन् पञ्चाङ्का विलसन्ति। इदमप्रकाशितम्। अस्य हस्तलिखिताः प्रतयः त्रिषु स्थानेषु सुरक्षिताः सन्ति—

(क) मद्रासस्य 'गवर्नमेण्ट ओरिएण्टल मेनुस्क्रिप्ट्स पुस्तकालये।
(ख) मैसूरस्य 'ओरिएण्टल रिसर्च इन्स्टीच्यूट' संस्थायां, सरस्वती भण्डारे च।
(ग) लन्दनस्य 'इण्डिया आफिस लाइब्रेरी' इति पुस्तकालये च।

## वीरराघवः

*कविपरिचयः*—नरसिंहसूरितनूजोवीरराघवोऽण्णावप्पंगार इत्यप्यभिधीयते स्म। अयं वाधूलगोत्रोद्भवो ब्राह्मण आसीत्। अस्य जन्म मद्रासप्रदेशस्य चिंगिलपुटजनपदस्थे तिरामलसाई (भुसुरपुर)-ग्रामे १७७० ईसवीयाब्दे बभूव।

*कृतयः*—(१) मलयाब्वकल्याणनाटिका। (२) उत्तररामचरितटीका।
(३) महावीरचरितटीका। (४) भक्तिसारोदयकाव्यम्।

एतदतिरिक्तं कविना वीरराघवेण कतिपये दार्शनिकग्रन्था अपि रचिताः।

## शक्तिवल्लभभट्टाचार्यः

*कविपरिचयः*—लक्ष्मीनारायणस्यात्मजः शक्तिवल्लभभट्टाचार्य आत्रेयगोत्रोत्पन्नः कान्यकुब्जब्राह्मणो नेपालमधिवसति स्म। अनेन नेपालनरपते रणबहादुरशाहस्य (१७७७-६६ ई०, १८०४-५ ई०) राजाश्रयः सम्प्राप्तः। शक्तिवल्लभेन शिवकृष्णावुपासितौ। अस्य कवित्वशक्तिः श्रीकृष्णकृपातः प्रादुरभूत्।

*कृतिः*—जयरत्नाकरनाटकम्।

### जयरत्नाकरनाटकम्

अस्मिन नाटके नेपालनृपते रणबहादुरशाहस्य (१७८६ ईसवीयाब्दादारभ्य १७६१ ईसवीयाब्दं यावद् विजयस्य वर्णनं वर्तते। अस्मिन् रणबहादुरशाहः तत्-पितृव्यो राजबहादुरवर्मा च प्रशंसितौ। जयरत्नाकरनाटके रणबहादुरशाहस्य वंशावली व्यावर्णिता। नेपालनरेशभातृवर्गस्य सैनिकानाञ्च राजभक्ति-पराक्रमावपि व्यावर्णितौ।

जयरत्नाकरनाटके नाट्यनियमाः सम्यङ् न परिपालिताः। अङ्कस्य स्थाने 'कल्लोल' इति लिखितम्। नाटकेऽस्मिन्नेकादश कल्लोलाः सन्ति।

जयरत्नाकरनाटकं घनवज्रवज्राचार्येण ज्ञानमणिना च सम्मिलितरूपेण सम्पादितं, नेपालीभाषयानूदितञ्च। २०१४ विक्रमीयवत्सरे नेपालसंस्कृतपरिषदा चेदं प्रकाशितम्।

## सदाशिवोद्गाता कविरत्नपुरोहितः

*कविपरिचयः*—सदाशिवो वत्सगोत्रे ब्राह्मणपरिवारे सम्बभूव। अस्य कौटुम्बिकमुपनाम 'उद्गाता' इत्यासीत्। उत्कलप्रदेशीयोऽयं कवि

थारकोटे ( उत्कले ) नृपेण 'कविरत्नपुरोहित' इत्युपाधिना विभूषितः।

*कृतिः*—प्रमुदितगोविन्दनाटकम् ।

## प्रमुदितगोविन्दनाटकम्

अस्य श्रीमद्भागवतीया कथैवाधारः। अस्मिन् नाटककारेण बह्वयो नवनवाः कल्पनाः स्फोरिताः।

अस्मिन् नाटके विष्णुर्दैत्यैः सह सन्धिं संस्थापयितुं चारद्वारा सन्धिपत्रं दैत्यान् प्रति प्रेषयति। नाटकेऽस्मिन् दैत्याः समुद्रमन्थनात्पूर्वमेव जानन्ति यत् सुधाप्राप्तौ विष्णुस्तां देवेभ्य एव प्रदास्यति। दैत्याः केवलं क्लेशभागिनो भविष्यन्ति।

प्रस्तुतनाटके पुरन्दर आसुरीमायाविधमनाय दैत्यकन्यया शच्या साकं विवाहं स्वीकरोति। समुद्रोऽपि स्वयमाविर्भूय विष्णोः परिणयं लक्ष्म्या सह सम्पादयति। एताः सर्वाः कवेर्मौलिकाः परिकल्पना विलसन्ति।

प्रमुदितगोविन्दनाटके सप्ताङ्काः सन्ति। इदमप्रकाशितम्। अस्यैका प्रतिः 'गवर्नमेण्ट ओरिएण्टल मैनुस्क्रिप्ट्स लाइब्रेरी, मद्रासे' विद्यते। अपरा प्रतिः 'स्टेट म्यूजियम औरीसा' भुवनेश्वरे लभ्यते।

### जातवेदः

*कविपरिचयः*—अयं केरलप्रदेशस्य विश्वामित्रगोत्रोद्भवेषु प्रसिद्धेष्वष्टनम्बूतिरि-ब्राह्मणपरिवारेषु कस्मिंश्चिदेकस्मिन् प्रादुरभूत्। जातवेदश्चतुर्थाश्रमे संन्यासे वर्तमानः कृतिमधोलिखितां रचयामास।

*कृतिः*—( १ ) पूर्णपुरुषार्थचन्द्रोदयनाटकम्

## पूर्णपुरुषार्थचन्द्रोदयनाटकम्

इदं नाटकं प्रतीकात्मकं रूपकं विद्यते। नाटकेऽस्मिन् राजा दशाश्वो नायकः ( आत्मा ), सारश्रुतेस्तनूजाऽऽनन्दपक्ववल्ली ( आनन्दः ) च नायिका। अधिकजवो विदूषकः। श्रुतिनिरूपणा श्रुतिनिर्णीतिश्च चेट्यौ, सुभक्तिः सुश्रद्धा च योगिन्यौ, जैन-बौद्ध-

कापालिकाश्च परिपन्थिनः, कामादयः षड् रिपवः प्रतीकात्मकानि-पात्राणि सन्ति।

पूर्णपुरुषार्थचन्द्रोदयनाटके सुघटिताः पञ्चाङ्काः सुशोभन्ते। नाटकमिदमप्रकाशितम्। अस्य प्रतिद्वयं, 'गवर्नमेण्ट मेनुस्क्रिप्ट्स-लाइब्रेरी, मद्रासे' प्राप्यते।

## मल्लार्याराध्यः

*कविपरिचयः*—अयं आन्ध्रप्रदेशस्य कृष्णाजनपदे चागण्टिवंशे सम्बभूव। अस्य पितुर्नाम शरमणाराध्य इत्यासीत्। अयं कल्याणपुरस्य (क्लेडि) सामन्तस्य राज्ञो वसवेश्वरस्याश्रितः कविर्बभूव। वसवेश्वरः १७३६ ईसवीयादारभ्य १७५४ ईसवीयाब्दं यावच्छशास।

*कृतिः*—शिवलिङ्गसूर्योदयनाटकम्।

### शिवलिङ्गसूर्योदयनाटकम्

अस्मिन् नाटके राज्ञः सुज्ञानस्य शिवलिङ्गसूर्योदये सति प्रतिपक्षिणोऽज्ञानस्योपरि विजयस्य वर्णनं विद्यते। नाटकेऽस्मिन् सुज्ञानाज्ञान-शिवलिङ्ग–काम-रति–विद्या-शान्ति–भक्ति–चार्वाक–क्षपणक-बौद्ध-भिक्षवः प्रतीकात्मकानि पात्राणि।

शिवलिङ्गसूर्योदयनाटकस्य कथावस्तु सुघटितं विद्यते। अस्मिन् पञ्चाङ्काः सन्ति। नाटकमिदमप्रकाशितम्। अस्यैका हस्तलिखिता प्रतिः 'गवर्नमेण्ट ओरिएण्टल मेनुस्क्रिप्ट्स लाइब्रेरी, मद्रासे' लभ्यते।

## गौरीकान्तद्विजः

*कविपरिचयः*—अयं भरद्वाजगोत्रोत्पन्नो ब्राह्मण आसीत्। अयं कवि-रसमप्रदेशे ब्रह्मपुत्रं समया निवसति स्म। भस्माचले विराजमानस्योमा-नन्दशिवस्य कृपया गौरीकान्तो विघ्नेशजन्मोदयनाटकं प्रणिनाय। अनेनाहोमनृपतेः कमलेश्वरस्य (१७६५-१८१० ई०) आश्रयः सम्प्राप्तः।

*कृतिः*—(१) विघ्नेशजन्मोदयनाटकम्।

### विघ्नेशजन्मोदयनाटकम्

इदं नाटकं १७६६ ईसवीयाब्दे प्रणीतम्। नाटकेऽस्मिन् गणेशप्रादुर्भावस्य, शनैश्चरग्रहस्य दृष्टिपातेन गणेशशिरसः पृथग्भूय गोलोक-

गमनस्य, विष्णुना हस्तिशावकशिरसो गणेशग्रीवायां संयोजनस्य, परशुराम-विहित-गणेशैकदन्तभङ्गस्य, परशुरामकृतस्तवेन प्रसन्नया पार्वत्या वरप्रदानस्य च वर्णनानि विद्यन्ते ।

विघ्नेशजन्मोदयनाटके त्रयोऽङ्काः सन्ति । नाटकमिदं सत्येन्द्रशर्मणा सम्पादितम् । अस्य प्रकाशनं जोरहाटतः रूपकत्रये 'असमसाहित्य-सभया' सम्पन्नम् ।

## डिमः

*महेन्द्रविजयडिमः*—प्रधानवेङ्कप्पविरचितस्य अस्य डिमस्य कथा-वस्तु पुराणवर्णितसमुद्रमन्थनाद् गृहीतमस्ति ।

महर्षेर्दुर्वाससः शापाद् देवा दैत्येभ्यः पराजिताः । दैत्यकृताममरा-वत्या दुर्दशां विलोक्य महेन्द्रस्तान् विनाशयितुं समीहते । परन्तु देव-गुरुर्बृहस्पतिरिन्द्रं समयं प्रतीक्षितुमादिशति । यतो हि विष्णुः संदिदेश—'सागरादमृतोत्पादने विनियोज्य दैत्या पराजेया' इति । महेन्द्रो मतमिदं स्वीकरोति

ततो वृहस्पतिर्दैत्याधिकृताममरावतीं गत्वा देव-दानवयोः सन्धि प्रस्तावयति । दैत्यगुरुर्भार्गवः सन्धिं स्वीकरोति । तदनुसारं देवदानवानां सागरमन्थने तदुद्भूतामृतविभाजने च सहमतिर्जायते ।

दैवैः समं दानवा अपि मन्दराचलं मन्थानीकृत्य, नागराजं वासुकिञ्च रज्जूविधाय सागरं निमथ्नन्ति । विष्णुश्च कच्छपीभूय मन्थानभूतं मन्दरं पृष्ठेन धारयति ।

निमन्थनात् प्रथमतः समुद्भूतं कालकूटं देवदानवैः प्रसादितः शिवः पिबति । ततश्च कल्पवृक्षादयः क्रमादुपलभ्यन्ते । अन्ततः सुधाकलशं हस्तेन दधानो धन्वतरिर्दृश्यते । ततो देवा दानवाश्च धन्वन्तरिहस्तात् सुधाकलशं बलाद् ग्रहीतुं प्रयतन्ते । तत्र दैत्याः सफलतामाप्नुवन्ति ।

विष्णुर्मोहिनीरूपं विनिर्माय स्वकीयेन लोकोत्तरसौन्दर्येण दैत्यान् वशीकृत्य तेभ्यः सुधाकलशं गृहीत्वा देवेभ्योऽमृतं प्रयच्छति । तेन सुसंक्रुद्धा दानवा देवानाहवायाह्वयन्ति । भयङ्करं युद्धं सम्प्रवर्तते । देवा विष्णोः साहाय्येन विजयिनो भवन्ति ।

महेन्द्रविजयडिमे चत्वारोऽङ्का विलसन्ति । अयमप्रकाशितः । अस्य तिस्रो हस्तलिखिताः प्रतयः 'ओरिएण्टल-रिसर्च-इन्स्टीट्यूट-मैसूरे' प्राप्यन्ते ।

## व्यायोगः

*वीरराघवव्यायोगः*—प्रधानवेङ्कप्पकविना विरचितोऽयम् । अस्य सुघटितं कथावस्तु रामायणमुपजीवति । मूलकथानके कविना स्वरुच्यनुसारं बहूनि परिवर्तनानि कृतानि ।

राक्षसै रामस्य वधाय निश्चयः कृत इति जटायुना संसूचनं रामायणे न लभ्यते । एवमेव खरादिभिः सङ्ग्रामे सम्प्रवृत्ते पाकशासनेन रामार्थं साङ्ग्रामिकरथप्रेषणमपि रामायणे न प्राप्यते ।

अस्मिन् व्यायोगे वनवासावधौ दण्डकवने वसन् रामः ऋषीणां प्रार्थनां सम्मानयन् राक्षसानां संहारम् प्रतिजानाति । तदनुसृत्य सर्वप्रथमं विराधं निहन्ति । जानकीरक्षायै लक्ष्मणं नियुज्य रामो राक्षसान् योद्धुं प्रयाति । मारीचादयः संग्रामादपसरन्ति । खरदूषणादयो भयङ्करं युद्धं कृत्वा रामेण निहन्यन्ते । विजयश्रियावृतो रामो मातलिना सह रथारूढः समरभूमेः तपोवनं प्रतिनिवर्तते ।

अयमप्रकाशितः । अस्य प्रतित्रितयं 'ओरिएण्टल-रिसर्च इन्स्टीट्यूट, मैसूरे' समुपलभ्यते ।

## समवकारः

*लक्ष्मीस्वयंवरसमवकारोऽथवा विबुध-दानव-समवकारः*—। अस्मिन् समवकारे लक्ष्मीनारायणयोः परिणयस्य पौराणिका कथैव कथावस्तुरूपेणोपन्यस्ता ।

प्रणयकलहे विष्णवे प्रकुपिता लक्ष्मीः क्षीरसागरस्य गृहे तत्तनयारूपेण समवतरति । सा यदा विवाहयोग्या सञ्जाता तदा तस्याः पिता—'सर्वश्रेष्ठाय लोककल्याणकारिणे वराय रमां स्वां दुहितरं प्रदास्यामी'ति निश्चिनोति । ततः स्वयंवरमायोजयति । देवा दानवाः ऋषयश्च स्वयंवरे समाहूयन्ते । विष्णुर्लक्ष्मी-वियोगे समनुतप्तो नारदाल्लक्ष्म्याः

प्रवृत्तिं स्वंप्रत्यनुरक्तिञ्च विजानाति । वरुणस्यामन्त्रणमुपलभ्य स्वयंवरे सम्मिलितुं वरुणपुरीम् प्रयाति ।

स्वयंवरे रमा माधवं वृणुते । सर्वगुणाभिरामं श्रृङ्गारदैवतं भुवनैकवीरं विष्णुं जामातृरूपेण सम्प्राप्य वरुणादयो मुदमाप्नुवन्ति ।

लक्ष्मीस्वयंवरसमवकारे त्रयोङ्काः सन्ति । समवकारस्यास्य प्रणयनं नाट्यशास्त्रानुसारि वर्तते ।

## वीथी

### चन्द्रिकावीथी

इयं चन्द्रिकावीथी रामपाणिपादस्य कृतिर्वर्तते । अस्यामङ्गराजस्य चन्द्रसेनस्य विद्याधरमणिरथात्मजया चन्द्रिकया सह विवाहस्य वर्णनं विद्यते ।

चन्द्रसेनश्चन्द्रिकां स्वप्नेऽवलोकयति । स्वप्ने साभिरमणीयमङ्गुलीयकं चन्द्रसेनाय प्रदायादृश्या भवति । स्वप्न एव चन्द्रिकामवलोक्य चन्द्रसेनः तद्विरहे समनुतप्त उद्यानं व्रजति यत्र तेन विरहव्याकुलायाश्चन्द्रिकायाः पत्रमुपलभ्यते ।

चण्डो नाम राक्षसश्चन्द्रिकायामपहरति । चन्द्रसेनस्तां राक्षसापसदाद् विमोचयितुं राक्षसं प्रहरति । तुमुलं युद्धं जायते । अन्ततो राक्षसं निहत्य चन्द्रसेनश्चन्द्रिकां प्राप्नोति । तौ द्वावपि परिणयसूत्रे निबद्धौ सञ्जायेते । चन्द्रिकावीथ्यामेक एवाङ्कोऽस्ति ।

### लीलावतीवीथी

रामपाणिपादविरचितायां अस्यां वीथ्यां कुन्तलराजस्य वीरपालस्य कर्णाटकराजकुमार्या लीलावत्या सह विवाहस्य वर्णनं वर्तते ।

शत्रुभ्यो भये सञ्जाते कर्णाटकराजो लीलावतीं वीरपालमहिष्याः कलावत्याः संरक्षणे न्यसति । वीरपालस्तत्र लीलावतीं दृष्ट्वा तस्या लावण्यसम्पत्या ताम्प्रत्यासक्तिमनुभवति । विदूषकस्य केलिमालासिद्धिमत्योश्च प्रयत्नैर्वीरपालो लीलावतीं परिणयति । तत एकदा ताम्राक्षो

नाम राक्षसो लीलावतीमपहरति । कुन्तलराजो वीरपालो विक्रम्य तं निहत्य लीलावतीं विमोचयति । अस्यां वीथ्यामपि एक एवाङ्को वर्तते ।

## सीताकल्याणवीथी

प्रधानवेङ्कप्पकविनिर्मितायां अस्यां वीथ्यां सीतारामयोः पाणिग्रहणस्य वर्णनं वर्तते । अस्याः कथानकं रामायणमुपजीवति । अस्यामप्येकाङ्क एवास्ति ।

## रुक्मिणीमाधवाङ्कः

प्रधानवेङ्कप्पप्रणीते रुक्मिणीमाधवाङ्के रुक्मिणी-माधवयोः परिणयस्य वर्णनं विद्यते । कविना पौराणिके कथानके निम्नलिखितानि परिवर्तनानि कृतानि—

( १ ) अस्मिन् नारदेन माधवो रुक्मिण्याः स्वं प्रत्यनुरक्तिमवगच्छति । परन्तु रुक्मी तां शिशुपालाय प्रदातुमीहते । श्रीमद्भागवते नैवम् । तत्र तु वृत्तान्तमिदं माधवो रुक्मिण्याः पत्रं निपठ्य विजानाति ।

( २ ) अस्मिन् विदर्भगमनात्पूर्वं माधवो गुप्तचरं विदर्भान् प्रेषयति । तद्वारा रुक्मिणीमनोवृत्तिं, रुक्मिव्यवसायं, शिशुपालेन सह विवाहसमारम्भसम्भारानवगच्छति । मूलकथानके तु माधव इदं सर्वं रुक्मिणीपत्रेण पत्रवाहिना ब्राह्मणेन च ज्ञात्वा विदर्भान् प्रतिष्ठति ।

( ३ ) रुक्मिणीमाधवाङ्कानुसारं चण्डिकायतनं गता रुक्मिणी तत्सख्यश्च तत्र माधवमनवलोक्य मूर्छिता निपतन्ति । मूर्छावस्थायामेव सारथिना दारुकेण सह माधवस्ता रथे समारोप्य द्वारकायां नयति । क्षणानन्तरं प्रकृतिस्था रुक्मिण्यादयस्ताः शिशुपालेनात्मनामपहरणम् मत्वा मरणाय व्यवस्यन्ति, परन्तु दारुकवचनाद् वास्तविकतामवगत्य प्रसन्नाः कृतकृत्यतामनुभवन्ति ।

( ४ ) अस्मिन् रुक्मिणीमपहृत्य द्वारकां गतवति माधवे रुक्मिणीतातो भीष्मकस्तत्र यात्वा रुक्मिणीमाधवयोः परिणयविधिं सम्पादयति । रुक्मिण्याः पत्रवाहको ब्राह्मणोऽपि द्वारकां गत्वा विवाहमेनमवलोकयति । ब्राह्मणोऽयं माधवेन पुरस्कृतो जायते । इदमपि कविकल्पनमेव ।

( ५ ) प्रस्तुते रुक्मिणीमाधवाङ्के सशिष्यो नारदो रुक्मिण्याः परिणयं वर्णयतीत्यपि श्रीमद्भागवते न वर्तते। अस्मिन् एकोऽङ्को वर्तते।

## ईहामृगः

### उर्वशीसार्वभौमेहामृगः

प्रधानवेङ्कप्पविरचितेऽस्मिन्नुर्वशीपुरूरवसोः परिणयस्य वर्णनमस्ति।

कामदेवस्याभिमानं चूर्णयितुं नारायण उर्वशीं जङ्घातो जनयामास। ततः समेषां देवानामुपभोगाय सा स्वर्गं प्रेषिता। तत्र महेन्द्र उर्वशीं प्रत्यासक्तो वर्तते। 'उर्वश्या रूपं भव्यं, तस्यामनेके गुणाश्चे'ति नारदाच्छ्रुत्वा पुरूरवास्ताम्प्रत्यासक्तमना बोभवीति। उर्वश्या वियोगवह्नौ तातप्यते च।

पुरूरवसो महेन्द्रेण सख्यं वर्तते। असुरैरुपद्रुतो महेन्द्रस्तं सहायतार्थमामन्त्रयति। पुरूरवाः स्वर्गं गत्वा तत्र दैत्यान् पराजयति।

स्वर्गे पुरूरवसं दृष्ट्वोर्वश्यापि पुरूरवसम्प्रत्यासक्तिरासाद्यते। कृतकार्योमहेन्द्रः पुरूरवसं तस्य राजधानीं प्रतिनिवर्तयति।

उर्वशी पुरूरवसो वियोगे तातप्यमाना महेन्द्रप्रणयस्य प्रत्याख्यानं करोति। पुरूरवसं प्रत्युर्वश्या आसक्तिमवगत्य महेन्द्रः पुरूरवसो रूपं धृत्वोर्वशीं निकषा प्रयाति। संयोगात् पुरूरवा अपि तदा तत्रैवागच्छति। उर्वशी तदा द्वौ पुरूरवसौ दृष्ट्वा–'कतमो वास्तविकः पुरूरवा' इति निर्णेतुं न शक्नोति।

पुरूरवा महेद्रं स्ववेशेऽवलोक्य तं राक्षसविशेषं मत्वा, तच्छिरः कर्तनाय समुद्यतो भवति। महेन्द्रोऽपि प्रतियुद्धाय सन्नद्धो जायते।

तदानीमेव नारदस्तत्रैकं तापसं प्रहिणोति। तापसस्तत्र गत्वा विवेचयति–द्वयोः पुरूरवसोर्मध्ये यः प्रथमं समागतः स महेन्द्रो नाम। यश्च पश्चादागतः स एव वास्तविक पुरूरवा। तत उर्वश्यर्थं महेन्द्र-पुरूरवसोर्युद्धं भवति। तत्र नारदः समागत्य कथयति—'नारायणस्यादेशेन सङ्ग्रामो विरमतु। नारायणादेशानुसारं स एवोर्वश्याः पतिर्भवितुमर्हति यमुर्वशी कामयत' इति।

उर्वशी पुरूरवसमेव वृणुते । पुरूरवाश्च तामादायात्मनो राजधानीं प्रतिनिवर्तते ।

उर्वशीसार्वभौमेहामृगे प्रख्यातोत्पाद्ययोः कथानकयोः सम्मिश्रणं वर्तते । अस्मिन् चत्वारोऽङ्काः सुशोभन्ते ।

## अनादिमिश्रः

*कविपरिचयः*—अनादिमिश्रो भरद्वाजगोत्रोत्पन्न औत्कलो ब्राह्मण आसीत् । अस्याश्रयप्रदाता नारायणमङ्गराजः सप्तदश-शतकस्य पश्चिमे भागेऽष्टादश-शतकस्य च पूर्वभागे पुरीजनपदस्य खण्डपारोपनगरे शासनमकरोत् ।

*कृतिः*— ( १ ) मणिमाला-नाटिका ।

### मणिमाला-नाटिका

अस्यां नाटिकायामुज्जयिन्या नृपतेः शृङ्गारशृङ्गस्य पुष्करद्वीपराज्ञो विजयविक्रमस्यात्मजया मणिमालया सार्धं परिणस्य वर्णनं विद्यते ।

राजा शृङ्गारशृङ्गः मणिमाला च स्वप्ने परस्परमवलोक्यासक्तौ जायेते । अद्भुतभूतनामा कश्चन योगी तयोः प्रणयं योगबलेन ज्ञात्वा राजानं समया समागत्य विज्ञापयति—'देव ! मणिमालायां त्रैलोक्य-साम्राज्ञीलक्षणानि सन्ति । इमां प्राप्तुं भवता भगवती दुर्गा समाराध्य-ताम् । आत्मनश्चित्रञ्च भवान् मणिमालायै पुष्करद्वीपं प्रेषयतु ।'

योगिमतमनुसृत्य राजा भगवतीं दुर्गां समाराधयति । समाराधनतः प्रसन्ना दुर्गा तस्मै पारिजातमालां प्रयच्छति । तन्मालां धारयित्वा राज्ञो मित्रं चित्रचरित उज्जयिनीतः पुष्करद्वीप प्रतिष्ठिति ।

शृङ्गारशृङ्गस्य महिषी प्रतिप्रिया राज्ञो मणिमालां प्रत्यासक्तिं श्रुत्वा तस्मै क्रुध्यति । राजा विज्ञापयति यद्—'मणिमाला मया स्वप्ने दृष्टा । मणिमालोपलब्ध्याहं सम्राड् भवितु शक्नोमि । तदर्थमहं जगन्मातु-र्दुर्गायाः कृपां प्राप्तुं प्रयत्नशीलोऽस्मीति' । ईदृशेन समाचारेण प्रसन्ना महिषी प्रतिप्रिया स्वयमपि दुर्गापुजायै समुद्यता जायते । राजापि दुर्गां प्रसादयितुं मन्दिरं गच्छति ।

पुष्करद्वीपस्य राजा विजयविक्रमो मणिमालां गन्धर्वराजाय प्रदातुं निश्चिनोति। बान्धवानामाग्रहेण मणिमाला विवाहात्पूर्वं नगरदेवतार्चनाय प्रयाति। तत्र दोलाविहारमपि कुरुते। ततोऽन्तःपुरं प्रतिनिवर्त्य विचित्रचातुरीं ब्रूते—'अहमेकं मनोज्ञं पुरुषं स्वप्ने दृष्ट्वा तत्प्रत्यासक्तमना अस्मी'-ति।

प्रसादितया दुर्गया विनियुक्ता योगिनी सुसिद्धिसाधिनी मणिमालां शृङ्गारशृङ्गराजानं प्रति विलोभयन्ती कथयति—'ईदृशमेव चित्रमेकं काचन शिल्पिनी भवत्यै समुपहाररूपेण प्रदातुं द्वारि प्रतीक्षमाणा तिष्ठति।' ततो मणिमालाया अनुज्ञां प्राप्य विचित्रचातुरी शिल्पिनी-वेशधरं राज्ञो मित्रं चित्रचरितं प्रवेशयति। चित्रचरितो मणिमालां ब्रूते—'अहं जम्बूद्वीपनृपस्य शृङ्गारशृङ्गस्य शिल्पिन्यस्मि। इदं चित्रमपि तस्यैव नृपतेरस्ति।' ततो मणिमालां विचित्रचातुरी ब्रवीति—'चित्र-गतोऽयं नृपतिरपि स्वप्ने भवतीं दृष्ट्वा भवत्या सम्प्राप्तिमेव चिन्त-यन्नास्ते।'

गन्धर्वराजेन सह विवाहस्य तिथिमत्यासन्नां ज्ञात्वा मणिमाला मनोरथविघातमाशङ्कमाना भृशमुद्विग्ना भवति। सुसिद्धिसाधिनी तत्रैत्य मणिमालामाश्वासयति। सा ससख्यै मणिमालायै गगनगामिनीं कनकमयीं नौकां प्रदाय—'इमामध्यारुह्याविलम्बमुज्जयिनीं गम्यताम्। अहमग्रतो गत्वा भवत्या आगमनं राज्ञे तावद् विनिवेदयामी'-ति ब्रवीति।

मणिमाला सुसिद्धिसाधिनीमतमवलम्ब्य सख्या विचित्रचातुर्या चित्रचरितेन च सह कनकमयीं नौकामारुह्य गगनमार्गेणोज्जयिनीं प्रतिष्ठति।

उज्जयिनीं प्रतिनिवर्तमाना सुसिद्धिसाधिनी मार्गे घर्घरघण्टा-नाम्न्या योगिन्या सह सौहार्दं लभते। ततो घर्घरघण्टां सुसिद्धिसाधिनी मणिमाला-शृङ्गारशृङ्गयोः प्रणयं ब्रवीति। तत्रैव नारदः समागत्य योगिन्यौ मणिमालाया भविष्यद् वक्ति—'राक्षसपतिर्द्वन्द्वदंष्ट्रो मणिमालां हरिता। तञ्च राजाशृङ्गारशृङ्गो हन्तेति'। ततश्च ते योगिन्यौ शृङ्गारशृङ्गं निकषा गत्वा निवेदयतः—'मणिमाला गगनचारिण्या कनकनौकयो-

ज्जयिनीमायाति । मणिमाला च तत्र वरमालां राज्ञे समर्प्य तं पतिं वृणुते ।

क्रौञ्चपर्वतनिवासी द्वन्द्वदंष्ट्रो राक्षसः प्रचण्डाभिधानायाः स्व-भगिन्याः साहाय्येनाज्ञातरूपेण मणिमालाया अपहरणं कारयति । राजा शृङ्गारशृङ्गश्चैतज्ज्ञात्वा तां प्रमदवनेऽन्विष्यति । तत्र तामप्राप्य निराशो मूर्छामाप्नोति । तन्मित्रं चित्रचरितोऽपि मूर्छितो जायते । तदा योगिनी सुसिद्धिसाधिनी तौ मन्त्रजलेनाभ्युक्ष्य प्रबोधयति ।

ततः सुसिद्धिसाधिनी राजानं वक्ति—'द्वन्द्वदंष्ट्राक्षसस्याज्ञया तत्स्वसा प्रचण्डा मणिमालां निगीर्य स्ववसतिं निनाय । अहमद्भुतभूते-र्वचनात् क्रौञ्चपर्वतं गत्वा राक्षसीमुदरे विदार्य मणिमालां तदुदरा-न्निःसार्यामृतसञ्जीविन्या मणिमालां यावज्जीवयामि स्म तावदेव द्वन्द्वदंष्ट्रो मां व्यापादयितुमधावत् । अहं मणिमालां घर्घरघण्टायै रक्षार्थं समर्पितवती । एतस्मिन्नेव समयेऽद्भुतभूतिना राक्षसो समराय समाहूतः । अद्भुतभूतिस्तं नागपाशेन बबन्ध, परन्तु स राक्षसो मृतिं नैव प्राप ।'

अद्भुतभूतिश्च राजानं विज्ञापयति—'क्रौञ्चपर्वते मध्ये स्वर्णवृक्ष-मेकः कीटनृपतिर्निवसति, यो दिवानिशं राक्षसे द्वन्द्वदंष्ट्रे प्राणान् सञ्चारयति । तस्य कीटनृपतेः वधे सञ्जाते राक्षसः स्वयमेव मृत्युं प्राप्स्यति । परन्तु तं कीटनृपतिं स एव मारयितुं पारयिष्यति यस्य नाम्नि 'ङ्ग' द्वयं भवेत् । एवम्भूतो भवानेव । अतः स कीटनृपतिर्भवतैव हन्तव्य' इति ।

राजा शृङ्गारशृङ्गो विदूषकेण विचित्रचातुर्यो, चित्रचरितेन, सुसिद्धिसाधिन्या, अद्भुतभूतिना चानुगम्यमानः क्रौञ्चपर्वतमासादयति । तत्राद्भुतभूतिना प्रदत्तेन खड्गेन राजाशृङ्गारशृङ्गः कीटनृपतिं निहन्ति । कीटनृपतिना सार्धमेव द्वन्द्वदंष्ट्रोऽपि म्रियते । ततो राजा मणिमालां निरुपद्रवां वीक्ष्य मोदते । देवाङ्गना मणिमालां राज्ञे समर्पयन्ति । इन्द्रश्च राजानं त्रिभुवनाधिपत्येऽभिषिञ्चति । ततः शृङ्गारशृङ्गः क्रौञ्चपर्व-तादिन्द्रप्रदत्ते रथे समारुह्य मणिमालयान्यैश्च सर्वैः सार्धमुज्जयिनी-मायाति । राज्ञो महिषी पतिप्रिया मणिमालां भगिनीकृत्य स्वीकरोति । राज्ञा साकं मणिमालाया विवाहमप्यनुमोदते ।

मणिमालानाटिकायां चत्वारोऽङ्काः सन्ति । वर्णनबाहुल्यात् पात्र-बाहुल्याच्च कथाप्रवाहे क्वचित् क्वचिदवरोधः समनुभूयते । नाटिकेयमप्रकाशिता । भुवनेश्वरस्य 'उड़ीसाराजकीयसंग्रहालये'ऽस्या एका हस्तलिखिता प्रतिः समुपलभ्यते ।

## नवमालिका-नाटिका

विश्वेश्वरविरचितायां अस्यामवन्तिराजेन विजयसेनेन सहाङ्गराजहिरण्यवर्मणः तनूजायाः परिणयस्य वर्णनमास्ते । नाटिकायाः कथावस्तु कविकल्पनाप्रसूतं विद्यते ।

विजयसेनस्य मन्त्री नीतिनिधिर्दिग्विजयाय प्रतिष्ठति । स दण्डकवने सखीद्वयानुगतां नवमालिकामवलोकयति । स ता अवन्तीनानयति । नवमालिकायां त्रैलोक्यसाम्राज्या लक्षणानि वीक्ष्य राज्ञः सार्वभौमत्वकामनया सखीसमेतां तां पट्टमहिषीचन्द्रलेखायाः संरक्षणे न्यसति ।

पट्टमहिषी चन्द्रलेखा नवमालिकाया लोकोत्तरसौन्दर्येण घर्षिता राज्ञो दृष्टे नवमालिकां निह्नूय रक्षति । कदाचिद् विदूषकेण सह नृप उपवने विहरन्तीं चन्द्रलेखां मिलितुं याति । राज्ञो दर्शनपथान्नवमालिकां निह्नोतुकामा चन्द्रलेखा तां स्वपृष्ठतः कृत्वा चन्द्रिकानाम्नीं दासीमादिशति—'नयेतो नवमालिकां क्वचिदन्यत्रेति' । परन्तु देव्या नासिकारत्ने नवमालिकायाः प्रतिबिम्बं दृष्ट्वा राजा ताम्प्रत्यासक्तो जायते ।

देव्या चित्रफलकान्वेषणायोपवनं प्रेषिताया नवमालिकाया राज्ञा मिलनं भवति । देवी च तत्र गत्वा नवमालिकानृपयोः प्रणयव्यापारं दृष्ट्वा ताभ्यां क्रुध्यति । राजा देवीं क्षमां याचते, परन्तु देवी राजानं प्रत्याख्याय ततो निर्गच्छति । ततो देवी चन्द्रिकया सह नवमालिकां कारागारे निक्षिपति ।

एकदा प्रभाकरनामा कश्चन तपस्वी दिव्यरत्नमेकं राज्ञे प्रदाय तत्प्रभावं ब्रूते—'अनेन रत्नेन राक्षसादिप्रभवा उत्पाता निष्प्रभावा जायन्ते । अहमेकदा दण्डकवने तपस्यामि स्म । तदास्य रत्नस्य प्रभावेण केनचिद् राक्षसेनापहृताः तिस्रः कन्यकाः तदधस्ताद् दण्डकारण्यभूमिं

निपतिताः। या नारी पतिप्रतिकूला भवति सैतद्रत्नं नोद्ग्रहीतुं शक्नोति। महिषी चन्द्रलेखा कौतूहलात् तद्रत्नमुद्ग्रहीतुं प्रयतते, परन्तु तदुद्ग्रहणेऽसफला भूत्वा परां लज्जामनुभवति। चन्द्रलेखा तद्दोषं दूरीकर्तुं राज्ञो विवाहं नवमालिकया सह कारयति।

एतस्मिन्नेव कालेऽङ्गराज्ञो हिरण्यवर्मणः सुमतिनामामात्यः समागत्य देवीं राजानञ्च ब्रूते—'अङ्गराजस्य महिष्यां प्रागेका कन्या जन्मालभत। परन्तु सा मन्दाकिनी तटे सखीभ्यां सह खेलन्ती केनचिद्रक्षसादर्शनं नीता। इदानीमङ्गराजस्य गृहं पुत्रेणैकेन स्वजन्मना समलङ्कृतम्।

चन्द्रिका-सारसिकाभ्यां सखीभ्यां सह नवमालिका सुमतिममात्य-मभिजानाति। सुमतिरपि नवमालिकादीरभिज्ञाय राजानं ब्रवीति—इयमेव नवमालिका राज्ञो हिरण्यवर्मणोऽदर्शनं गता कन्या।

देवी नवमालिकां क्षमां याचते। नीतिनिधिस्तासामुपलब्धिवृत्तान्तं निवेदयति।

नवमालिकानाटिकायां सुघटिताश्चत्वारोऽङ्का विद्यन्ते। नाटिकेयं बाबूलालशुक्लेन सम्पादिता। मन्दसौरस्थ-मालवमयूरकार्यालयात् २०२१ विक्रम-सम्वत्सरे प्रकाशिता।

## मलयजाकल्याणनाटिका

वीरराघवविरचितायामस्यां नाटिकायां तौण्डीरदेशस्य राज्ञो मलयराजस्य राजकुमार्या मलयजया सह परिणयस्य वर्णनं वर्तते। अस्या अपि कथावस्तु कविकल्पितं वर्तते।

कदाचिद् देवराजः स्वमहिष्या साकं मृगयायै मलयदेशमासाद्य मलयजामवलोक्यासक्तो भवति। मलयजापि राजानं विलोक्य तादृशी-मेवावस्थां गच्छति।

एकदा राजा विदूषकेण सह ततो याति यतो विरहम्लाना मलयजा सखीभिः समाश्वास्यते। तत्रैत्य राजा मलयजामभिनन्दयति।

एतदनन्तरं देवराजस्य महिषी मलयजायाः तत्पत्रं प्राप्नोति यस्मिन् प्रमदवने मिलितुं सङ्केतमासीत्। ततो महिषी मलयजायाः

सख्या मञ्जरिकाया वेशं प्रकल्प्य प्रमदवनं प्राप्नोति। तत्र मलयजादेव-राजयोः प्रणयव्यापारं वीक्ष्य मञ्जरिकाया वेशं परित्यज्य भृशं क्रुध्यति। एतस्मिन्नेवान्तराले जामदग्न्यो मुनिरागत्य मध्यस्थतां निर्वाह्य मलयजा-देवराजयोः परिणयं कारयति।

मलयजाकल्याणनाटिकायामपि चत्वार एवाङ्काः सन्ति। नाटिकेयं बाबूलालशुक्लशास्त्रिणा सम्पादिता। जाम्बवतीदेवीशुक्लया च 'नेपियर टाउन, जबलपुरात्' प्रकाशिता।



# अष्टादशशतकस्यान्येषां रूपकाणां परिचयः

*श्रीरविनन्दनत्रिपाठी*

## वेङ्कटकृष्णदीक्षितः

*कविपरिचयः*—वेङ्कटकृष्णदीक्षितस्य जन्म मद्रासराज्ये दक्षिणार्कोट-जनपदस्य 'पल्लवकचारि'-नाम्नि ग्रामे बभूव। अयं बाधूलगोत्रोद्भवो ब्राह्मण आसीत्। मङ्गलाम्बा-वेङ्कटाद्री मातापितरावस्यास्ताम्। अयं संस्कृत-तेलगू-मराठीभाषाणां पण्डित आसीत्।

*कृतयः*—(१) कुशलवविजयनाटकम्। (२) रामचन्द्रोदयकाव्यम्। (३) नटेशविजयकाव्यम्। (४) उत्तरचम्पूः।

### कुशलवविजयनाटकम्

अस्मिन् नाटके कुशलवयो रामेण सह युद्धस्य वर्णनं विद्यते। संग्रामे कुशलवौ रामं पराजयतः। अस्मिन् नाटके षडङ्काः सन्ति। नाटकमिदमप्रकाशितम्। अस्यैका देवनागरी लिपौ हस्तलिखिता प्रतिः त्रिवेन्द्रं स्थिते केरल-विश्वविद्यालये वर्तते।

## पेर्यप्पाकविः

*कविपरिचयः*—पेर्यप्पाकवे र्लक्ष्मीरण्णाशास्त्री च जननीजनकावास्ताम्। कविनामुना तञ्जौरनृपस्य शाहजिनः (१६८४-१७११) आश्रयः समुपलब्धः। अयं तञ्जौरं समया पञ्चनदे निवसति स्म।

*कृती*—(१) शृङ्गारमञ्जरशाहराजीयनाटकम्।
(२) षड्दर्शनसिद्धान्तसंग्रहस्यैकोऽध्यायः।

### शृङ्गारमञ्जरीशाहराजीयनाटकम्

नाटकेऽस्मिन् शृङ्गारमञ्जर्या सह शाहजिनो विवाहस्य वर्णनं वर्तते। अस्य नाटकस्य प्रथमोऽभिनयः पञ्चनदस्य (तिरुवेय्यरुग्रामस्य) ग्रामदैवतस्य भगवतो पञ्चनदीश्वरस्य चैत्रयात्रासमये समभवत्। नाटक-

मिदमप्रकाशितम् । अस्यैका हस्तलिखिता प्रतिः 'ओरिएण्टलमैनुस्क्रिप्ट्स-लाइब्रेरी-मद्रासे' प्राप्यते ।

## अम्पाध्वरी

*कविपरिचयः*—अयं कविः चिदम्बरमखिनो सुनुरासीत् । श्रीवत्स-गोत्रोत्पन्नोऽयं दाक्षिणात्यो ब्राह्मण आसीत् । अयं तञ्जौरजनपदस्य, मायावरं निकषा किल्लियूरनामकं ग्राममधिवसति स्म ।

*कृतयः*—( १ ) आचारनवनीतम् ।
( २ ) गौरीमायूरमाहात्म्यचम्पूः । (३) मदनभूषणभाणः ।

### मदनभूषणभाणः

अस्मिन् भाणे विटस्य मदनभूषणस्य गणिकया वकुलमञ्जर्या सह समागमस्य वर्णनं विद्यते । भाणोऽयमप्रकाशितः । अस्यैका हस्त-लिखिता प्रतिः तञ्जौरस्य सरस्वतीमहलपुस्तकालये प्राप्यते ।

## मृदुरामः

*कविपरिचयः*—अयं कविः कौण्डिन्यगोत्रोद्भवो ब्राह्मणः तञ्जौरे न्युवास । अयं रघुनाथाध्वरिणः तनय आसीत् । अमुनापि राज्ञः शाह-जिन आश्रयः सम्प्राप्तः ।

*कृतिः*—( १ ) रसिकतिलकभाणः ।

### रसिकतिलकभाणः

अस्मिन् कनकमञ्जर्या गणिकाया रसिकशेखरस्य विटस्य च समा-गमकथानकं व्यावर्णितम् । अस्य भाणस्य प्रथमोऽभिनयः कमलापुर्यां ( तञ्जौरे ) भगवतः त्यागराजस्य वसन्तोत्सवे बभूव । अयमपि भाणो-ऽप्रकाशितः । अस्यैका-हस्तलिखिता प्रतिः 'युनिवर्सिटी मेनुस्क्रिप्ट्स-लाइब्रेरी-त्रिवेन्द्रमे सुरक्षिता वर्तते ।

## महामहोपाध्यायो जगदीश्वरभट्टाचार्यः

*कविपरिचय*—श्री भट्टाचार्यस्य समयः सप्तदशशतकस्यान्तिमो भागः अष्टादशशतकस्य च पूर्वभागो वर्तते । एष महामहोपाध्यायः तर्कशास्त्रस्य मूर्धन्यो विद्वानासीत् ।

*कृतयः*—( १ ) तर्कामृतम् । ( २ ) शब्दशक्तिप्रकाशिका ।
( ३ ) जागदीशी । ( ४ ) हास्यार्णवप्रहसनम् ।

## हास्यार्णवप्रहसनम्

अस्य प्रहसनस्यानेका हस्तलिखिताः प्रतयः प्राप्यन्ते । 'बङ्गीय-साहित्यपरिषदि' समुपलब्धायाः प्रतेरनुसारमस्य प्रहसनस्य प्रणयन-मष्टादशशतकस्य प्रथमे वर्षे ( १७०१ ई० ) बभूव । हास्यार्णवप्रहसने द्वावङ्कौ स्तः । प्रहसनेऽस्मिन् राजोऽनयसिन्धोः, अयथार्थवादिनोऽनुचरस्य, मन्त्रिणः, कुमतिवर्मणः, बन्धुराया वेश्यायाः, तत्पुत्र्याश्च मृगाङ्कलेखायाः, उपाध्यायस्य विश्वभण्डस्य शिष्यस्य च कलहाङ्कुरस्य धौर्त्यान्युद्घाटितानि ।

## वेङ्कटेश्वरः

*कविपरिचयः*—वेङ्कटेश्वरः कौण्डिन्यगोत्रोत्पन्नो ब्राह्मण आसीत् । अस्य पिता दक्षिणामूर्तिर्गुरुश्च रामभद्रो बभूवतुः । अयमपि शाहजिनो नृपस्याश्रयं लब्धवान् ।

*कृतयः*—( १ ) भानुप्रबन्धप्रहसनम् । ( २ ) उणादिनिघण्टुः ।
( ३ ) रामभद्रदीक्षितकृतपतञ्जलिचरितस्य टीका ।

## भानुप्रबन्धप्रहसनम्

अस्य प्रहसनस्य द्वेऽपरे नामनी वर्तेते— ( कः ) वेङ्कटेशप्रहसनम्, ( खः ) लम्बोदरप्रहसनञ्च । प्रहसनमिदं मैसूरतः १८९० ईसवीयाब्दे प्रकाशितम् ।

## वैद्यनाथः 'तत्सत्'

*कविपरिचयः*—वैद्यनाथः तत्सदभिधाने ब्राह्मणकुले वाराणस्यां सम्बभूव । द्वारकादेवी-श्रीरामभट्टावस्य पितरावभूताम् ।

*कृतयः*—( १ ) श्रीकृष्णलीलानाटिका । ( २ ) उदाहरणचन्द्रिका ।
( ३ ) काव्यप्रदीपस्य प्रभानाम्नी टीका ।
( ४ ) अप्पयदीक्षितकृतकुवलयानन्दस्यालङ्कारचन्द्रिकाभिधाना टीका ।

### श्रीकृष्णलीलानाटिका

इयं नाटिका महाजनकस्यादेशात् शरदृतौ कमलालययात्रामहोत्सवे सर्वप्रथममभिनीता। नाटिकायामस्यां राधाकृष्णयोः परिणयो व्यावर्णितः। अस्यां नाटिकायां श्रीकृष्णमित्रस्य विजयनन्दनस्यापि चन्द्रप्रभया सह विवाहो वर्णितः।

नाटिकेयमप्रकाशिता। अस्यैका हस्तलिखिता प्रतिः 'कलकत्ता-संस्कृत-कालेजे' समुपलभ्यते।

## वरदाचार्य अथवा अम्मालाचार्यः

वरदाचार्योऽम्मालाचार्योभिधानेनापि प्रसिद्धो वर्तते। सुदर्शननामास्य पिता घटिकाशतकोपाधिना विभूषितो बभूव।

*कृतयः*—( १ ) वसन्ततिलकभाणः। ( २ ) लक्ष्मीशतकम्।
( ३ ) रुक्मिणीपरिणयचम्पूः।
( ४ ) यतिराज विजयो, वेदान्तविलासनाटकं वा।

### यतिराजविजयनाटकम्

इदं नाटकं प्रतीकात्मकं रूपकं वर्तते। अस्य प्रथमाभिनयो रङ्गराजस्य चैत्रयात्रामहोत्सवे सुसम्पन्नः। नाटकेऽस्मिन् विशिष्टाद्वैतमतस्य सर्वश्रेष्ठता प्रतिपादिता। अस्मिन् विशिष्टाद्वैतमतप्रतिपादकस्य आचार्यरामानुजस्य चरितमपि नाटकीयरूपेण प्रस्तुतम्। नाटकमिदं तिरुपतेः प्रकाशितम्।

### वसन्ततिलकभाणः

अस्य भाणस्य प्रथमोऽभिनयो मकरध्वजस्य वसन्तोत्सवे बभूव। अस्मिन् विटस्य श‍ृङ्गारशेखरस्य गणिकया वासन्तिकया सह समागमस्य वर्णनमस्ति। भाणोऽयं प्रकाशितो वर्तते।

## गोकुलनाथोपाध्यायः

*कविपरिचयः*—वत्सगोत्रोत्पन्नो गोकुलनाथोपाध्यायो मिथिलायां दरभङ्गाजनपदस्थे मधुवनीं निकषा मगरौनीग्रामे निवसति स्म। उमादेवा-पीताम्बरावस्य मातापितरौ बभूवतुः।

*कृतयः*—( १ ) अमृतोदयनाटकम् । ( २ ) कुसुमाञ्जलिटिप्पणी ।
( ३ ) एकावली । ( ४ ) कादम्बरीकीर्तिश्लोकः ।
( ५ ) कादम्बरीप्रदीपः । ( ६ ) कादम्बरीप्रश्नोत्तरमाला ।
( ७ ) काव्यप्रकाशटीका । ( ८ ) रश्मिचक्रम् ।
( ९ ) दिक्कालचक्रम् ।
(१०) तत्त्वचिन्तामणिदीधितिविद्योतः ।
(११) पदवाक्यरत्नाकरः । (१२) मासमीमांसा ।
(१३) मिथ्यात्वनिर्वचनम् ।
(१४) शिवस्तुतिः शिवशतकं वा ।
(१५) खण्डनकुठारः । (१६) आलोक-टिप्पणी ।
(१७) आधाराधेयभावतत्त्वपरीक्षा । (१८) मुक्तिवादविचारः ।
(१९) विशिष्टवैशिष्ट्यबोधः । (२०) तर्कतत्त्वनिरूपणम् ।
(२१) प्रबोधकादम्बरी । (२२) द्वन्द्वविचारः ।
(२४) मदालसानाटकम् । (२५) शुद्धिविवेकः ।
(२६) अशौचनिर्णयः । (२७) वृहत्तरङ्गिणी ।
(२८) रसमहार्णवः । (२९) बौद्धाधिकारविवरणम् ।
(३०) भूयाम्यसाधनप्रकरणम् । (३१) शक्तिवादः ।
(३२) लाघव-गौरवरहस्यम् । (३३) न्यायसिद्धान्ततत्त्वम् ।

## अमृतोदयनाटकम्

अस्मिन् नाटके न्यायदर्शनस्य सिद्धान्ताः सरलीकृताः । इदं प्रतीकात्मकं नाटकम् । नाटकेऽस्मिन् पञ्चाङ्काः सन्ति । इदं प्रकाशितं विद्यते ।

## मदालसानाटकम्

इदं नाटकं मार्कण्डेयपुराणमुपजीवति । अस्मिन् मदालसा-कुवलयाश्वयोः प्रणयो व्यावर्णितः । इदमप्रकाशितम् । अस्यैका प्रतिः गवर्नमेण्ट-ओरिएण्टल-मैनुस्क्रिप्ट्स लाइब्रेरी-मद्रासे' समुपलभ्यते ।

## देवानन्दः

*कविपरिचयः*—देवानन्दो देवनाथोपाध्याय इत्यपरेण नाम्नापि प्रसिद्धः । अयं मैथिलब्राह्मणानां सकराढिकुले समुत्पन्नः । देवानन्दो

दक्षिणमिथिलायां पर्वतपुरे निवसति स्मः। गुणवतीरघुनाथौ कवेः पितरावास्ताम्।

*कृति* :—( १ ) उषाहरणनाटकम्।

## उषाहरणनाटकम्

इदम् नाटकं कीर्तनियाप्रकारकं नाटकं विद्यते। नाटकस्यास्य कथावस्तुन आधारः श्रीमद्भागवतपुराणस्य श्रीकृष्णपौत्रेणानिरुद्धेन सार्धं बाणासुरात्मजाया उषसो विवाहस्य कथानकमस्ति। नाटकमिदमुमापतिकवेः पारिजातहरणनाटकमिव गेयं नाटकं वर्तते। अस्मिन् षडङ्का सन्ति। अस्य प्रकाशनमद्यावधि न सञ्जातम्।

## पेरुसूरिः

*कविपरिचयः*—पेरुसूरिरान्ध्रप्रदेशीयः कौशिकगोत्रोद्भवो ब्राह्मणः काञ्चीपुरीमधिवसति स्म। वेङ्कटाम्बा—वेङ्कटेश्वरौ पेरुसूरेः पितरौ बभूवतुः।

*कृतयः*—( १ ) औणादिकपदार्णवः। ( २ ) श्रीरामचन्द्रविजयः।
( ३ ) भरताभ्युदयः। ( ४ ) चकोरसन्देशः।
( ५ ) वेङ्कटभाणः। ( नाम्नैवास्योल्लेखः प्राप्यते )।
( ६ ) वसुमङ्गलनाटकम्।

## वसुमङ्गलनाटकम्

अस्मिन् नाटके वसोरुपरिचरस्य कोलाहलपर्वततनूजया गिरिकया सार्धं परिणयस्य वर्णनमस्ति। नाटकेऽस्मिन षडङ्का विलसन्ति। इदमप्रकाशितम्। अस्यैका हस्तलिखिता प्रतिः 'गवर्नमेण्ट–ओरिएण्टल-मेनुस्क्रिप्ट्सलाइब्रेरी'–मद्रासे लभ्यते।

## विट्ठलकृष्णो 'विद्यावागीशः'

*कविपरिचयः*—श्रीविद्यावागीशो विट्ठलकृष्णो बीकानेरनृपस्य सुजानसिंहस्य ( १६६०–१७३५ ई० ) आश्रये न्युवास।

*कृतीः*—(१) हास्यार्णवकौतूहलप्रहसनम् ।

(२) अनूपसिंहगुणावतारः ।

## हास्यार्णवकौतूहलप्रहसनम्

इदं प्रहसनमप्रकाशितं विद्यते । अस्यैका हस्तलिखिता प्रतिः 'अनूप-संस्कृत-पुस्तकालय'-बीकानेरे प्राप्यते ।

### भाष्यकारः

*कविपरिचयः*—कालहस्तीश्वरस्य तनूजोऽयं भाष्यकारकविर्वेणुपुर-नृपस्य वसवभूपालस्य प्रेमभाजनं बभूव । कविरयं मीमांसा-वेदान्त-योरपि निष्णात आसीत् ।

*कृतिः*—( १ ) आञ्जनेयविजयनाटकम् ।

## आञ्जनेयविजयनाटकम्

अस्मिन् नाटके हनूमतो बलविक्रमस्य वर्णनमस्ति । अस्य प्रथमोऽ-भिनयो भगवतो रामस्यावतारमहोत्सवे सम्पन्नः ।

आञ्जनेयविजयनाटकमप्रकाशितमपूर्णञ्च विद्यते । अस्यैका हस्त-लिखिता प्रतिः 'प्राच्यविद्याशोध-संस्थान'-मैसूरे समुपलभ्यते ।

### वेङ्कटवरदः

*कविपरिचयः*—वेङ्कटवरदो दक्षिणार्काटजनपदे श्रीमुष्णग्रामे श्रीमुष्ण-वैष्णवाचार्याणां कुले जन्मालभत । अम्पलाचार्योऽस्य जनक आसीत् ।

*कृतिः*—( १ ) श्रीकृष्णविजयडिमः ।

## श्रीकृष्णविजयडिमः

अस्मिन् डिमे सुभद्रार्जुनयोः परिणयस्य वर्णनमस्ति । वेङ्कटवरदो डिममिमं स्वायुषो सप्तसप्ततितमे वर्षे विरचितवान् । अस्य प्रथमोऽ-भिनयः श्रीमुष्णे श्रीमुष्णपुरनायकस्य भगवतो विष्णोः सभायां वसन्ततौ यज्ञसमये विहितः । डिमोऽयमप्रकाशितः । अस्यैका हस्त-

लिखिता प्रतिः गवर्नमेण्ट-'ओरिएण्टल-मेनुस्क्रिप्ट्स-लाइब्रेरी'-मद्रासे विद्यते ।

## रूपचन्द्रः

*कविपरिचयः*—रूपचन्द्रो बीकानेरनृपस्य सुजानसिंहस्य ( १६६०-१७३५ ई० ) आश्रये निवसति स्म । अनेन सुरजनसिंहस्य मन्त्रिणः सर्वज्ञपुत्रस्यानन्दरामस्य मनोविनोदार्थं १७३० ईसवीयवत्सरे नाटकानुकारि षड्भाषामयं प्रपत्रं व्यरचि । एतासां भाषाणां प्रपत्रेऽस्मिन् प्रयोगेण रूपचन्द्रस्य तासु-तासु भाषासु वैचक्षण्यं प्रतितिष्ठति ।

## विठ्ठलः

*कविपरिचयः*—विट्ठलो बीजापुरस्यादिलशाहिवंशमाधारीकृत्यैकं छायानाटकं प्रणिनाय । आदिलशाहिवंशस्य बीजापुरे १४८६ ईसवीयाब्दादारभ्य १६६८ ईसवीयाब्दं यावच्छासनमासीत् । विट्ठलस्य समयोऽष्टादशशतकान्तराले वर्तते ।

विट्ठलस्य छायानाटकमिदमप्रकाशितं विद्यते । अस्य छायानाटकस्यैका प्रतिलिपेरुल्लेखो राजेन्द्रलालमित्रेण "कैटलाग आफ संस्कृत-मेनुस्क्रिप्ट्स इन द लाइब्रेरी आफ हिज हाइनेस द महाराजा आफ बीकानेर'-नाम्न्यां विषयानुक्रमणिकायां कृतः ।

## राघवेन्द्रकविः

*कविपरिचयः*—राघवेन्द्रकविरष्टादशशतकस्य पूर्वभागे विद्यमान आसीत् ।

*कृतिः*—( १ ) राधामाधवनाटकम् ।

### राधामाधवनाटकम्

नाटकेऽस्मिन् गोकुलेश्वरस्य श्रीकृष्णस्य श्रीराधायाश्च मध्ये वृन्दावनसञ्जातानां शृङ्गारलीलानां वर्णना विलसति । अस्य प्रथमोऽभिनयः श्रीकृष्णस्य रासोल्लासमहोत्सवे सम्पन्नः ।

नाटकेऽस्मिन सप्ताङ्काः सन्ति । इदमप्रकाशितम् । अस्य द्वे हस्तलिखिते प्रती समुपलभ्यते । एका प्रतिः 'भण्डारकर-ओरिएण्टल-इन्स्टीट्यूट'-पुण्यनगरे प्राप्यते । अपरा 'विश्वेश्वरानन्द-वैदिक-रिसर्च-इन्स्टीट्यूट'-होशियारपुरे लभ्यते ।

## अनन्तनारायणः

*कविपरिचयः*—अनन्तनारायणवर्मा भरद्वाजगोत्रोद्भवः पाण्ड्यप्रदेशीयो ब्राह्मण आसीत् । अयं केरलप्रदेशस्य कालीकटस्य जामोरियनराज्ञो मानविक्रमस्य त्रिचूर ( कोचीन ) -राज्ञो रामवर्मणश्चाश्रयं समुपलब्धवान् ।

*कृती*—(१) शृङ्गारसर्वस्वभाणः ।
(२) विष्णुसहस्रनाम्नो 'हरिभक्तिकामधेनु'-नाम्नी टीका ।

### शृङ्गारसर्वस्वभाणः

अस्मिन् भाणे नायकविटस्य द्वौ सखायौ सुन्दरीमेकां वसन्ततिलकाद् विघटय्य नायकेन सह संघटयतः । अस्य प्रथमाभिनयो राज्ञो मानविक्रमस्य समक्षं 'तिरुनावाय'- नामके स्थले माघमहोत्सवयात्राकाले बभूव । भाणोऽयमप्रकाशितः । अस्य द्वे हस्तलिखिते प्रती 'गवर्नमेण्ट-ओरिएण्टल-मेनुस्क्रिप्ट्स-लाइब्रेरी'-मद्रासे सम्प्राप्येते ।

## साम्बशिवः

*कविपरिचयः*—साम्बशिवः कनकसभापतेः पुत्र आसीत् । असौ वत्सगोत्रोद्भवो ब्राह्मणो गोपालसमुद्रग्राममध्युवास । साम्बशिव आच्वानदीक्षित इत्यपरेण नाम्नापि प्रसिद्धोऽस्ति । अनेन कालीकटस्य जामोरियननृपस्य मानविक्रमस्य तथा मैसूरनृपतेर्डोडाकृष्णराव-वोडियारस्य ( १७१४-३२ ई० ) आश्रयः सम्प्राप्तः ।

*कृतयः*—(१) शृङ्गारविलासभाणः । (२) अन्योक्तिमाला ।
(३) आस्थानभूषणम् ।

### शृङ्गारविलासभाणः

अयं भाणोऽप्रकाशितो वर्तते । अस्य द्वयोः प्रतिलिप्योरेका—'गवर्नमेण्ट-ओरिएण्टल-लाइब्रेरी-मैसूरे' प्राप्यतेऽपरा 'गवर्नमेण्ट-ओरिएण्टल-मेनुस्क्रिप्ट्स-लाइब्रेरी-मद्रासे' समुपलभ्यते ।

## कविभूषणो गोविन्दसामन्तरायः

*कविपरिचयः*—'कविभूषणे' त्युपाधिना विभूषितो गोविन्दसामन्तरायो रामचन्द्रसामन्तरायस्यात्मज आसीत् । कविरयमष्टादशशतकस्य मध्यभाग उत्कलप्रदेशस्य खुर्दशासनाधीने बांकीराज्ये निवासमकरोत् ।

*कृतय* :—(१) समृद्धमाधवनाटकम् । (२) वीरसर्वस्वम् ।
(३) सूरिसर्वस्वम् ।

### समृद्धमाधवनाटकम्

अस्मिन् नाटके राधाकृष्णयोः शृङ्गारविचेष्टितानां वर्णनं विद्यते । अस्य प्रथमोऽभिनयो वसन्तकाले जगन्नाथपुर्यां जगन्नाथमन्दिरे विहितः । समृद्धमाधवनाटके सप्ताङ्काः सन्ति । नाटकमिदमप्रकाशितम् । अस्यैका हस्तलिखिता प्रतिः-एसियाटिक-सोसाइटी,-कलकत्तायामुपलभ्यते ।

## तिरुमलकविः

*कविपरिचयः*—अयं कविः तिरुमलनाथ—विमलनाथ–अय्यलनाथ-नामभिरप्यभिधीयते । सम्भवतोऽयमेव नृसिंहकविनाभिनवकालिदासेनोल्लिखित आल्लूरतिरुमलाभिनवभवभूतिरित्युपाधिना समलङ्कृतो वर्तते ।

*कृतिः*—( १ ) कुहनाभैक्षवप्रहसनम् ।

### कुहनाभैक्षवप्रहसनम्

अस्मिन् प्रहसने कस्यचन संन्यासिन आसक्तेर्वर्णनं विद्यते, यः संन्यासी अहमदनाम्नो यवनस्याधिकारे निवासिन्या कयाचिन्नार्या सह प्रणयव्यापारं विदधाति । स्वशिष्यस्य साहाय्येन तां प्राप्नोत्यपि ।

कुहनाभैक्षवमप्रकाशितं विद्यते । अस्य हस्तलिखिताः प्रतयो मद्रास-मैसूर-वाराणसीनां हस्तलिखितग्रन्थागारेषु समुपलभ्यन्ते ।

## नारायणस्वामी

*कविपरिचयः*—नारायणस्वामी मण्डोरुनारायणपण्डितस्य तनय आसीत् । नारायणस्वामिनो गुरुर्नृसिंहसूरिर्मैसूरराज्यस्य सर्वाधिकारिणो नञ्जराजस्य ( १७३६-५६ ई० ) आश्रयं सम्प्राप्तवान् । नारायणस्वामी दार्शनिकः सरसः कविश्चासीत् ।

*कृतिः*—( १ ) कैतवकलाचन्द्रभाणः ।

### कैतवकलाचन्द्रभाणः

अस्य भाणस्य प्रथमोऽभिनयः श्रीरङ्गपत्तने वसन्तोत्सवे बभूव ।

## शेषगिरिकविः

कविपरिचयः—शेषगिरिकवेरेकोऽण्णयसुधीनामा पूर्वजो मैसूर-राज्यस्य विश्वासपात्रं मन्त्र्यासीत् । भागीरथीशेषगिरीन्द्रौ कवेः पितरा-वास्ताम् । आन्ध्रप्रदेशस्य श्रीरामपल्लीग्रामोऽस्य वसतिर्बभूव ।

*कृतिः*—( १ ) शारदातिलकभाणः । ( २ ) कल्पनाकल्पकनाटकम् ।

### शारदातिलकभाणः

अस्य भाणस्य प्रथमाभिनयः श्रीरङ्गपत्तने बभूव । भाणोऽयमप्र-काशितः । अस्यैका प्रतिः 'ओरिएण्टल—रिसर्च-इन्स्टीट्यूट-मैसूरे' प्राप्यते ।

### कल्पनाकल्पकनाटकम्

इदं नाटकं सर्वप्रथमं भगवतः श्रीरङ्गनायकस्य चैत्रयात्रामहोत्सवे-ऽभिनीतम् । इदमप्रकाशितम् । अस्यैका प्रतिः 'ओरिएण्टलरिसर्च-इन्स्टीट्सूट—मैसूरे' लभ्यते ।

## रामचन्द्रवेल्लालः

*कविपरिचयः*—रामचन्द्रवेल्लालश्चन्द्रशेखरवेल्लालस्य तनूजो बभूव ।

रामचन्द्रेण मैसूरनरेशस्य कृष्णरावद्वितीयस्य ( १७३४-६६ ई० ) सेनापतेर्मन्त्रिणश्च देवराजस्याश्रयः सम्प्राप्तः।

*कृतिः*—(१) कृष्णविजयव्यायोगः। (२) सरसकविकुलानन्दभाणः।

## कृष्णविजयव्यायोगः

अस्य व्यायोगस्य कथावस्तु प्रसिद्धं रुक्मिणीहरणस्य पौराणिकमुपाख्यानं वर्तते। कृष्णविजयव्यायोगस्य प्रथमोऽभिनयः श्रीरङ्गनगरपरिवृढस्य भगवतः श्रीरङ्गनाथस्य शरदुत्सवे बभूव।

व्यायोगोऽयं मैसूरात् कन्नड़लिपावन्यासु चान्ध्रप्रदेशप्रवर्तनीषु लिपिषु च प्रकाशितः।

## सरसकविकुलानन्दभाणः

अस्मिन् भाणे विटस्य भुजङ्गशेखरस्य स्वप्रेयस्या कमलया सह समागमस्य वर्णनं वर्तते। अयं भाणः सर्वप्रथमं वसन्ततौ श्रीपुरनायकस्य शिवस्य चैत्रयात्रामहोत्सवेऽभिनीतः। भाणोऽयं मैसूरादान्ध्रलिपौ प्रकाशितः।

# भारतचन्द्ररायगुणाकरः

*कविपरिचयः*—भारतचन्द्ररायगुणाकरस्य पिता नारायणराय आसीत्। भारतचन्द्रस्य जन्म १७२२ ईसवीयवत्सरे बंगप्रदेशस्य हुगलीजनपदे 'पेरोंवसन्तपुर'-नाम्निग्रामे बभूव। अयं संस्कृतं फारसीभाषां बङ्गभाषाञ्चाधीतवान्। अनेन नवद्वीपनृपतेः कृष्णचन्द्ररायस्य ( १७२८-८२ ई० ) सभापण्डितपदं प्राप्तम्। राज्ञा चन्द्ररायेनायं 'गुणाकर' इत्युपाधिना विभूषितः।

*कृतिः*—( १ ) चण्डीनाटकम्।

## चण्डीनाटकम्

अस्मिन् नाटके संस्कृत–फारसी–बंगला–भाषाणां प्रयोगः कृतः। नाटकेऽस्मिन् सूत्रधारो संस्कृतेन भाषते, नटी च बंगलया। अस्मिन् प्राकृतभाषायाः स्थानं बंगलाभाषा गृह्णाति।

चण्डीनाटके त्रीण्येव पात्राणि सन्ति चण्डी, महिषासुरः प्रजा च। अस्मिन् यत्र तत्र बंगलागीतानि निविष्टानि। अस्य प्रकाशनं कलकत्तातः सञ्जातम्।

## विद्यावागीशः

*कविपरिचयः*—विद्यावागीशस्य जनयिताचार्यः पञ्चानन आसीत्। अनेनासमप्रदेशस्य 'आहोम'—राज्ञः प्रमत्तसिंहस्य ( ७४१-५१ ई० ) मन्त्रिणो गङ्गाधर-बड़फुकनस्याश्रयः समुपलब्धः।

*कृतिः*—(१) श्रीकृष्णप्रयाणनाटकम्।

### श्रीकृष्णप्रयाणनाटकम्

अस्य नाटकस्य कथावस्तु महाभारतस्योद्योगपर्वणो गृहीतमस्ति। अस्मिन् श्रीकृष्णः पाण्डवानां दूतो भूत्वा हस्तिनापुरं गत्वा दुर्योधनं युधिष्ठिरादीनां पाण्डवानां दायभागं तेभ्यः प्रदातुं प्रबोधयति।

अस्मिन्नपि नाटकेऽसमगीतानां निवेशनं वर्तते। नाटकमिदमप्रकाशितम्। अस्यैका हस्तलिखिता प्रतिः 'उपेन्द्रचन्द्रलेखारु-वैष्णव-इन्स्टीट्यूट'-वृन्दावने संप्राप्यते।

## ईश्वरशर्मा

*कविपरिचयः*—ईश्वरशर्मा केरलस्य नम्बूतरीब्राह्मणो विम्बलीग्राममध्युवास। कविरयं गोत्री ( कोचीन )-नृपतेरभिरामवर्मण आश्रयं लब्धवान्।

*कृतिः*—(१) शृङ्गारशृङ्गभाणः।

### शृङ्गारशृङ्गभाणः

अस्मिन् भाणेऽभिरामनामा विटः स्वमित्रं भ्रमरकं तस्य प्रेयस्या केशरमालिन्या सह संघटयति। अस्य प्रथमोऽभिनयो वसन्ततौ कोचीने बभूव। अयं भाणः त्रिवेन्द्रमात् प्रकाशितः।

## श्रीकान्तो 'गणकः'

*कविपरिचयः*—श्रीकान्तस्यापरं नाम 'श्रीमड्डुला' इत्यासीत्। 'गणक' इत्यस्योपाधिः। अयं मिथिलायां निवसति स्म।

*कृतिः*—(१) श्रीकृष्णजन्मरहस्यम् ।

## श्रीकृष्णजन्मरहस्यम्

अस्य नटकस्य कथावस्तु विष्णुपुराणाद् गृहीतमस्ति । इदमपि 'कीर्तनिया-परम्पराया' नाटकमस्ति । अस्मिन् मैथिलीभाषाया गीतानि सन्निविष्टानि । अस्य प्रकाशनमिलाहाबादात् संवृत्तम् ।

## कर्णजयानन्दः

*कविपरिचयः*—कर्णजयानन्दो मिथिलायां निवसति स्म । अयं कर्णकायस्थ आसीत् । कर्णजयानन्दस्यैकया कवितया ज्ञायते यदयं मिथिलानृपस्य माधवसिंहस्य ( १७७६-१८०८ ई० ) समये वर्तमान आसीत् ।

*कृतिः*—(१) रुक्माङ्गदनाटकम् ।

### रुक्माङ्गदनाटकम्

नाटकेऽस्मिन् रुक्माङ्गदस्य वर्णनमस्ति । इदमपि नाटकं कीर्तनिया-नाटकपरम्पराया आस्ते । अस्मिन्नपि मैथिलीभाषायाः क्वचित्-क्वचित् प्रयोगो विहितः । नाटकमिदमप्रकाशितम् । अस्यैका हस्तलिखिता प्रतिर्दरभङ्गाजनपदस्य कलान-बलहरग्रामस्य निवासिनोऽनन्तलाल-पाठकस्य पार्श्वेऽस्ति ।

## धर्मदेवगोस्वामी

*कविपरिचयः*—धर्मदेवगोस्वामी असमप्रदेशस्य कैहतीसत्रे न्युवास । धर्मदेवगोस्वामिना होमराज्ञो लक्ष्मणसिंहस्य ( १७६९-८० ई० ) आश्रयः प्राप्तः ।

*कृतयः*—(१) धर्मोदयनाटकम् । (२) धर्मोदयकाव्यम् ।
(३) नरकासुरविजयकाव्यम् ।

### धर्मोदयनाटकम्

इदं नाटकं प्रतीकात्मकं रूपकं वर्तते । इदं नाटकं कविना १७७० तमे ईसवीयवर्षे व्यरचि । अस्य प्रथमाभिनयः आहोमराज्ञां राजधान्यां रङ्गपुरे

बभूव । नाटकमिदप्रकाशितम् । अस्यैका हस्तलिखिता सञ्जीविनीसभा-नाहलवाड़ी-असमे' सम्प्राप्यते ।

## नरसिंहमित्रः

*कविपरिचयः*—नरसिंहमित्र उत्कले निवसति स्म । नरसिंहमित्रेणोत्कलप्रदेशस्य, मयूरभञ्जं निकषा केओंझरराज्ञो बलभद्रभञ्जस्य ( १७६४-६२ ई० ) आश्रयः सम्प्राप्तः ।

*कृति* :—(१) शिवनारायणभञ्जमहोदयनाटिका ।

### शिवनारायणभञ्जमहोदयनाटिका

अस्यां नाटिकायां केओंझरनृपस्य शिवनारायणभञ्जस्योपदेशानां वर्णनमस्ति । नाटिकेयमुत्कलप्रदेशे पुरुषोत्तमक्षेत्रे ( जगन्नाथपुर्यां ) वसन्ततौं सर्वप्रथममभिनीता ।

अस्यां नाटिकायां पञ्चाङ्काः सन्ति । नाट्यनिमानुसारमनया नाटकेन भवितव्यं, न तु नाटिकया । अस्या ( अस्य वा ) एका हस्तलिखिता प्रतिरुत्कलप्रदेशस्य पुरीजनपदस्थदामोदरपुरस्य पण्डितगोपीनाथमिश्रस्य पार्श्वे वर्तते ।

## वेङ्कटाचार्यो द्वितीयः

*कविपरिचयः*—वेङ्कटाचार्यद्वितीयो वेङ्कटाम्बा श्रीनिवासतातार्ययोरात्मज आसीत् । अयमान्ध्रप्रदेशस्थसुरपुरग्रामस्य बुक्कपट्टणब्राह्मणपरिवारे शठमर्षणगोत्रो सम्बभूव । अस्य समयोऽष्टादशशतकस्योत्तरार्धो वर्तते ।

*कृतय* :—(१) अमृतमन्थननाटकम् । (२) सिद्धान्तवैजयन्ती ।
(३) देशिकाष्टोत्तरशतनामस्तोत्रम् ।
(४) सिद्धान्तरत्नावली । (५) जगन्मिथ्यात्वखण्डनम् ।
(६) आनन्दतारतम्यखण्डनम् ।

### अमृतमन्थनम्

अस्य नाटकस्य कथावस्तु समुद्रमन्थनस्य प्रसिद्धपौराणिकं

कथानकं वर्तते । अस्मिन् पञ्चाङ्काः सन्ति । इदमप्रकाशितम् । अस्यैका हस्तलिखिता प्रतिः 'ओरिएण्टल-रिसर्च-इन्स्टीट्यूट-मैसूरे' प्राप्यते ।

## अण्णयाचार्यो द्वितीयः

*कविपरिचयः*—अण्णयाचार्यो द्वितीयो वेङ्कटाचार्यद्वितीयस्यानुज आसीत् । वेङ्कटाम्बा श्रीनिवासतातार्यावस्य पितरावभूताम् ।

*कृतिः*—(१) रसोदारोऽथवा सरसोदारभाणः ।
(२) मुक्तेरानन्दतारतम्यखण्डनम् । (३) तत्त्वगुणादर्शचम्पूः ।
(४) व्यावहारिकत्वखण्डनम् । (५) आचार्यविंशतिः ।
(६) अभिनवकर्णामृतम् । (७) षष्ठ्यर्थदर्पणः ।

## श्रीनिवासाचार्यो द्वितीयः

*कविपरिचयः*— श्रीनिवासाचार्यद्वितीयोऽण्णयाचार्यद्वितीयस्यानुज आसीत् । अयं सुरपुरस्य कौशलवंशीयराज्ञो राघवतनूजस्य वेङ्कटस्य ( १७७३-१८०२ ई० ) गुरुर्बभूव ।

*कृतयः*—(१) कल्याणराघवनाटकम् । (२) तत्त्वमार्तण्डः ।
(३) अणाधिकरणमञ्जरी, अणाधिकरण-सरणि विवरणी वा ।
(४) ओङ्कारवादार्थो, नयमणिकलिका वा ।
(५) जिज्ञासादर्पणः । (६) ज्ञानरत्नप्रकाशिका ।
(७) नाट्यदर्पणः । (८) पञ्चब्रह्मवादिनीयासः ।
(९) प्रणवदर्पणः । (१०) भेददर्पणः ।
(११) विरोध-निरोधो, भाष्यपादुका वा ।
(१२) विरोधवरूथिनी-प्रमथिनी ।
(१३) नयद्युमणिः तद्दीपिकयासमेतः ।
(१४) दर्पणः । (१५) प्रधान-प्रतितन्त्रदर्पणः ।
(१६) सिद्धान्तचिन्तामणिः । (१७) दत्तरत्नप्रदीपिका ।
(१८) मुक्तिदीपिका, ग्रहणमुक्तिदीपिका वा ।
(१९) नीतिशतकम् । (२०) सुभाषितसंग्रहः ।
(२१) हरिमणिदर्पणः ।

### कल्याणराघवनाटकम्

अस्य नाटकस्य कथावस्तु रामायणाद् गृहीतमस्ति। अस्मिन् सीतारामयोः परिणयस्य वर्णनं वर्तते। नाटकमिदमप्रकाशितमस्ति। अस्यैका हस्तलिखिता प्रतिः 'ओरिएण्टल-रिसर्च-इन्स्टीट्यूट-मैसूरे' प्राप्यते।

## बुचिवेङ्कटाचार्यो ऽथवा वेङ्कटाचार्यचतुर्थः

*कविपरिचयः*—बुचिवेङ्कटाचार्यस्य पिताऽण्णयाचार्यो द्वितीय आसीत्। अस्य समयोऽष्टादशशतकस्योत्तरार्धे विद्यते।

*कृतयः*—(१) कल्याणपुरञ्जननाटकम्। (२) वेदान्तकारिकावली। (३) विष्णुसप्तविभक्तिस्तोत्रम्।

### कल्याणपुरञ्जननाटकम्

अस्मिन् नाटके पुरञ्जनपरिणयस्य वर्णनमस्ति। अस्य नाटकस्य प्रणयनं कविना राज्ञः तिरुमलरायस्य पुत्राय सोमाय कृतम्।

## कौण्डिन्यवेङ्कटः

*कविपरिचयः*—कौण्डिन्यवेङ्कटोऽक्काम्बा-वेदान्तयोः सूनुरासीत्। अस्य गुरुः श्रीनिवासाध्वरी बभूव।

*कृतिः*—(१) रसिकजनरसोल्लासभाणः।

### रसिकजनरसोल्लासभाणः

अस्य भाणस्य प्रथमाभिनयो वेङ्कटाद्रिनगरे भगवतः श्रीनिवासस्य समक्षमभवत्। भाणोऽयमप्रकाशितः। अस्य हस्तलिखिताः प्रतयो गवर्नमेण्ट, – ओरिएण्टल-मेनुस्क्रिप्ट्स-लाइब्रेरी-मद्रासे', 'ओरिएण्टल-रिसर्च-इन्स्टीट्यूट, मैसूरे', सरस्वती भण्डार-मैसूरे चोपलभ्यन्ते।

## अहोबिलनृसिंहः

*कविपरिचयः*—अहोबिलनृसिंहस्य पिता रामकृष्णो बभूव। अयं मैसूरराज्ञः कृष्णराववोडेयार द्वितीयस्य (१७३२–६० ई०) तथा चामराजवोडेयारस्य (१७६०–७६ ई०) आश्रयं प्राप्तवान्।

*कृती*—( १ ) नलविलासनाटकम् ।
( २ ) अभिनवकादम्बरी, त्रिमूर्तिकल्याणं वा ।

## नलविलासनाटकम्

अस्मिन् नाटके दमयन्तीनलयोः प्रणयस्य वर्णनमस्ति । अस्मिन् षडङ्का विलसन्ति । अस्य प्रथमाभिनयो मैसूरनृपतेश्चामराजवोडियारस्य शासनकाले नवरात्रमहोत्सवे सम्पन्नः ।

नलविलासनाटकमप्रकाशितमस्ति । अस्यैका हस्तलिखिता प्रतिः 'ओरिएण्टल-रिसर्च-इन्स्टीट्यूट-मैसूरे' प्राप्यते ।

### रघुनाथसूरिः

*कविपरिचयः*–रघुनाथसूरिर्मैसूरमधिवसति स्म । श्रीशैलनाथसूरिरस्य जनयिता बभूव । अयं कौशिकगोत्रोद्भवो वैष्णवब्राह्मण आसीत् । रघुनाथसूरिः तन्त्रे साहित्ये च परमं नैपुण्यं प्राप ।

*कृती*—(१) प्राभावतनाटकम् । (२) इन्दिराभ्युदयचम्पूः ।

## प्रभावतनाटकम्

अस्मिन् नाटके सप्ताङ्काः सन्ति । इदं रङ्गनाथस्य महोत्सवयात्रायां सर्वप्रथममभिनीतम् । नाटकमिदमप्रकाशितं वर्तते । अस्य द्वे हस्त-लिखिते प्रती समुपलभ्येते । तयोरेका 'ओरिएण्टल-रिसर्च-इन्स्टीट्यूट-मैसूरे' प्राप्यतेऽपरा 'सरस्वतीभण्डार-मैसूरे' लभ्यते ।

### रामकृष्णः

*कविपरिचयः*—तिरुमलभट्टारकस्य पुत्रो रामकृष्णो वत्सगोत्रोद्भवो ब्राह्मण आसीत् । अयमभिनवभवभूतिरित्यप्यभिधीयते ।

*कृतिः*—उत्तरचरितनाटकम् ।

## उत्तरचिरतनाटकम्

इदं नाटकं रामस्य राज्याभिषेकानन्तरस्य जीवनस्य घटना उप-जीवति ।

उत्तरचरितनाटकस्य हस्तलिखितप्रतेरुल्लेखो हुल्सेन स्वकीय-ग्रन्थसूच्यां कृतः ।

## नन्दीपतिः

*कविपरिचयः*—नन्दीपतेर्जन्म मिथिलायां 'बढ़िया'—ग्रामे पुंगौली-वंशे बभूव । अस्य पिता कृष्णपतिरासीत् । नन्दीपतिर्नाटककारो गीति-कारश्चासीत् । अस्य समयोऽष्टादशशतकस्योत्तरार्धे मन्यते ।

*कृतयः*—( १ ) कृष्णकेलिलीला । ( २ ) कदम्बकेलिमाला ।
( ३ ) रुक्मिणीस्वयम्वरो, रुक्मिणीहरणं वा ।

### कृष्णकेलिमाला

अस्यां मालायां भगवतः कृष्णस्य जन्मनो बालक्रीडानाञ्च वर्णन-मुपलभ्यते । कृष्णकेलिमाला प्रकाशिता विद्यते । अस्यां चत्वारोऽङ्का विलसन्ति ।

## कृष्णदासः

*कविपरिचयः*—कृष्णदासः केरलनिवासी वैष्णव आसीत् । एम० कृष्णमाचार्येण कृष्णदासस्य समयोऽष्टादशशतकस्यान्तिमे भागे निरूपितः ।

*कृतिः*—( १ ) कलावतीकामरूपनाटकम् ।

### कलावतीकामरूपनाटकम्

अस्मिन् नाटके चत्वारोऽङ्काः सुसम्पूर्णाः सन्ति । पञ्चमोऽङ्कोऽसम्पूर्णो विद्यते । नाटकेऽस्मिन् कलावती-कामरूपयोः प्रणयस्य परिणयस्य च वर्णनमस्ति ।

अस्य प्रथमोऽभिनयो भगवतो विट्ठलस्य वसन्तोत्सवे संवृत्तः । अस्यैका हस्तलिखिता प्रतिः 'गवर्नमेण्ट-ओरिएण्टल-मेनुस्क्रिप्ट्स-लाइब्रेरी-मद्रासे, प्राप्यते ।

## रङ्गनाथः

*कविपरिचयः*—रङ्गनाथो द्रविडप्रदेशे तमिलब्राह्मणपरिवारे ताम्र-पर्णीनद्याः सविधे कस्मिंश्चिद् ग्रामे जन्म लेभे । अयं वेद-शास्त्रेषु निष्णात आसीत् ।

*कृतिः*—( १ ) दमयन्तीकल्याणनाटकम् ।

**दमयन्तीकल्याणनाटकम्**

अस्मिन् नाटके दमयन्तीनलयोः पारस्परिकानुरागस्य परिणयस्य च वर्णनमस्ति । अस्य प्रथमाभिनयः केरलप्रदेशस्य शुचीन्द्रस्य शिवमन्दिरे शिवस्य वसन्तोत्सवे सञ्जातः । नाटकमिदमप्रकाशितं वर्तते।

दमयन्तीकल्याणनाटकस्यैका प्रतिः 'गवर्नमेण्ट-ओरिएण्टल-मेनुस्क्रिप्ट्स-लाइब्रेरी-मद्रासे' प्राप्यते । अपरा प्रतिः 'युनिवर्सिटी-मेनुस्क्रिप्ट्स-लाइब्रेरी-त्रिवन्द्रमे' समुपलभ्यते ।

## गोपीनाथचक्रवर्ती

*कविपरिचयः*— गोपीनाथचक्रवर्ती बंगदेशीयो ब्राह्मण आसीत् । अस्य समयोऽष्टदशशतकस्योत्तरार्धे निश्चीयते ।

*कृतिः*—( १ ) कौतुकसर्वस्वप्रहसनम् ।

**कौतुकसर्वस्वप्रहसनम्**

अस्य प्रहसनस्य प्रथमोऽभिनयो बंगे शारदीयनवरात्रमहोत्सवे श्रीदुर्गापूजायाः समये सुसम्पन्नः

अस्मिन् प्रहसने धर्मनाशपुरशासकस्य राज्ञः कलिवत्सलस्य, मन्त्रिणः शिष्टान्तकस्य, पुरोहितस्य धर्मानलस्य, अनुयायिनोऽनृतसर्वस्वस्य, पण्डितस्य पीडाविशारदस्य, सभासदः कुकर्मपञ्चाननस्य, सेनापते रणजम्बुकस्य हास्यास्पदचरितानामुद्घाटनं विद्यते ॥[1]



१. 'अष्टादशशतकस्य रूपकाणां परिचयः' इतिलेखद्वयं डा० विहारीलालनागार्चस्य तद्विषयकशोधनिबन्धमनुसृत्य निबद्धम् ।

# भाषावैज्ञानिकगुरुः महर्षियास्कः

डॉ. गजाननशास्त्री मुसलगाँवकरः

इदं हि किमप्युज्ज्वलतरं रत्नं भारतीयविद्याभाण्डारस्य, अपार्थिवं यशो यास्काचार्यस्य, कोऽपि दर्पणो वैदिकविज्ञानस्य, छायग्राहियन्त्रं ज्ञान-विज्ञानयोः। इदं हि भाषाविज्ञानशास्त्रमिति षडङ्गेषु श्रोत्रात्मना विनिर्दिष्टम्।

यदा हि पूर्वे महर्षयस्तपसा मन्त्रान् ददृशुः, तदा तदर्थविज्ञाने नासीत् कस्यापि लेशतोऽपि सन्देहः। तदा निखिला मन्त्राः सुबोधा आसन्। परमन्तर्हितेषु महर्षिषु क्रमशो वेदाध्ययनाध्यापनादीनां विरल-प्रचारतया त एव मन्त्रा दुर्बोधार्थाः संवृत्ताः। पुरा येषां मन्त्राणामर्था विनैव श्रममवबुध्यन्तेस्म, साम्प्रतं तेषामेवार्था बहुपरिश्रम्यताऽवगन्तुं शक्या इति। यत्कृतं मन्त्राणां दुर्बोध्यार्थत्वमासीत्. ते शब्दाः पृथक् सङ्गृहीताः पूर्वैर्महर्षिभिः। कियन्तः शब्दाः पृथिवीवाचकाः, कियन्तश्च-जलबोधका इत्येकार्थबोधकाः शब्दा एकत्रीकृताः। एते शब्दाः पृथिवीं बोधयन्ति, एते च जलमित्येवंरुपेण तेषामर्था निर्दिष्टाः। इत्थं राशीकृतानां शब्दानां निघण्टुनाम्ना व्यवहारः प्रावर्तत। तस्यैव निघण्टु-नामकस्य ग्रन्थस्य मुनिना यास्काचार्येण व्याख्या निबद्धा। शब्दार्थ-निर्वचनमिषान्महामुनिना यास्काचार्येण ते मन्त्रा अपि व्याख्याताः, येषु निर्वचनीयदुर्बोधार्थाः शब्दाः सन्ति। इत्थं शब्दानां निर्वचनं, वेदमन्त्राणां व्याख्यानं निरुक्तग्रन्थेन बोध्यते।

इदं हि निरुक्तं वेदभगवतः षडङ्गेषु श्रोत्रात्मना निर्दिष्टम्। श्रोत्रं हि शाब्दज्ञानोपयोगि भवति। श्रोत्रेणैव शाब्दं ज्ञानं भवति। भगवान् वेदः शब्दात्मकः। शब्दात्मकस्य भगवतो वेदस्य ज्ञानं श्रोत्रेणैव भवति, एतेन वेदार्थावबोधाय निरुक्तस्य माहात्म्यमवगन्तुं शक्यम्। अस्य ग्रन्थस्य परि-चयो निर्दिश्यते किञ्चित्।

ग्रन्थारम्भे महामुनिना यास्काचार्येण शब्दाश्चतुर्धा[1] विभक्ताः। केचिन्नामशब्दाः, केचिदाख्यातशब्दाः, केचिदुपसर्गशब्दाः, केचिन्नि-

---

1. "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च"—(निरु० अ. १,)

पातशब्दाश्चेति । तत्र नामाभिधानैः शब्दैः पदानामर्था बोध्यन्ते। आख्यातेन क्रिया बोधिता भवति । अयं विषयो यास्काचार्येणोदाहरणैः परिष्कृतो विनोदयति मनांसि शाब्दिकानाम् । अत्रात्मनः पुराभवेन औदुम्बरायणाभिधानेन केनापि महर्षिणा कृतं संशयमित्थं समाहितवान् यास्काचार्यः। तस्यायमभिप्रायः—नहि पदार्थानां विभागो भवितुं शक्यः, अचिरस्थायित्वात् तेषाम् । नहि युगपत् सर्वे वर्णा उच्चारयितुं शक्याः । क्रमेणैव तेषामुच्चारणं भवति । उच्चारिताश्च वर्णा विनश्यन्ति, वर्णानां त्रिक्षणस्थायित्वात् । अतः कथं शब्दाश्चतुर्धा विभक्ता इति ।

किञ्च वर्णानां सम्बन्धज्ञानमपि भवितुमशक्यम्, पूर्वपूर्ववर्णविनाशपूर्वकमुत्तरोत्तरवर्णानां जायमानत्वात् । "रामो गच्छति" इतिवाक्ये राकारोच्चारणकाले मकारोऽनुत्पन्न एव, मकारोच्चारणकाले हि "रा" ,व विनष्ट इति नोभयोः सम्बन्धज्ञानं सुबोधम् ।

अत्रेदं समाधानं यास्काचार्यस्य—

"व्याप्तिमत्त्वात्तु शब्दस्य" ( निरु. अ. १ पा. १ )—व्यापकाः शब्दाः, मकारोच्चारणकालेऽपि न भवति विनाशः पूर्ववर्णस्य। व्याप्तिमन्तः शब्दाः, अपरैः शब्दैः सम्बद्धा अर्थं बोधयन्ति । इत्थं समादधन् भाषाविज्ञानस्य किमपि तत्त्वमाविष्कृतवान् महर्षियास्कः । भावक्रिययोः कथं भवति परस्परं भेदः ? उपसर्गा अर्थवन्तोऽनर्थका वा ? निपातैः कस्याभिधानं भवति ? इत्येवमाद्या विषयाः सुस्पष्टैरुदाहरणादिभिः सम्यक् परिष्कृता महर्षिणा। उदाहरणानि च वेदमन्त्रा एव। इत्थं द्वावर्थौ सिद्धौ भवतः। व्याख्यायमानस्य शब्दस्यार्थः परिज्ञातो भवति, उदाहृतस्य मन्त्रस्यार्थश्च परिज्ञातो भवति। यत उदाहृता मन्त्रा अपि व्याख्याताः श्रीमता यास्काचार्येण । निपातेषु एकः 'त्वं' शब्दो विद्यते, महर्षियास्को वदति केचन एकार्थवाची 'त्व' शब्द इति वदन्तीति । ऋग्वेदीयो मन्त्रोऽपि तेनोदाहृतः।[1] तेन मन्त्रेण ऋत्विजां कर्म परि-

---

१. ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥
—( निरु. अ. १ )

चीयते। एषामेको होता ऋचं पठेत्, अपरश्चोद्गाता तदाश्रयेण गायेत्, अन्यः सर्वविद्यो ब्रह्मा स्खलितेषु सर्वान् ऋत्विजः बोधयेत्, अध्वर्युश्च आहुतिमात्रां निर्धारयेत्। मन्त्रेण तेनैतद् विज्ञायते यत् पुरा नासीदथर्ववेदस्य क्रतुषूपयोगः। पुरा ऋग्यजुःसाम्नां त्रयीशब्देनाभिधानं भवतिस्म। उदाहृते मंत्रे त्रिवेदानामेव परिचयो लभ्यते। ऋग्वेदज्ञो होता, सामवेदज्ञ उद्गाता, यजुर्वेदज्ञोऽध्वर्युः, त्रिवेदज्ञश्च ब्रह्मेति मन्त्रेण सूच्यते। चतुर्भिरेभिरेव ऋत्विग्भिर्यज्ञः सम्पादनीय इति। एकार्थवाची च 'त्व' शब्द इति यास्कोदाहृतेनानेन मन्त्रेण पूर्वोक्ता विषया अवगम्यन्ते। एतेन यास्काचार्यस्य अपूर्वा व्याख्यानशैली विज्ञायते।

## निरुक्तम्

शाब्दिकः शाकटायनो ह्यपरे च निरुक्तकारा आख्यातेन नाम्नामुत्पत्तिं वर्णयन्ति। नैरुक्तो गार्ग्यः शाब्दिकप्रधानाश्चान्ये नाम्नामेवोत्पत्तिराख्यातेनेति सिद्धान्तमिममङ्गीकर्तुं नेहन्ते। विषयोऽयं चारुनिरूपितो यास्काचार्येण। अतो निरुक्तं भाषाविज्ञानग्रन्थ इति सूक्तं भवति।

नामाख्यातोपसर्गनिपातान् विवेचयन् यास्काचार्यो वेदपाठस्य फलमित्थं निर्दिशति—"पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे" (निरु. अ. १ पा. १)। मनुष्याणां ज्ञानमनित्यमिति तेषां कर्मसम्पादनाय नित्यं ज्ञानमपेक्षितं भवति। वेदमन्त्रा अपौरुषेया इति नित्याः। मानवीयं ज्ञानमनित्यं भ्रमात्मकञ्चेति सत्यं वैदिकं ज्ञानं मानवानां कल्याणाय अपेक्षते।

किं फलं निरुक्तग्रन्थस्येति यास्काचार्यो निर्दिशति—अथापि इदमन्तरेण मन्त्रेण अर्थप्रत्ययो न विद्यते। निरुक्ताध्ययनमन्तरा मन्त्रार्थो नावगन्तुं शक्याः।

साम्प्रतं हि वेदमन्त्रा यत्र तत्र व्याख्यायन्ते। बहवो व्याख्यातारो निरुक्तं दूरमुत्सार्य मन्त्रार्थव्याख्याने बद्धपरिकारा दृश्यन्ते, परं नैतत् सम्यक्। यस्य ग्रन्थस्य व्याख्याने या रीतिः प्रसिद्धा, सैव रीतिराश्रयणीया अपरैरपि, तां रीतिमपहाय मनःकल्पितेन पथा प्रवृत्तौ न कस्याप्यस्ति अधिकारः।

एकस्मिन् मन्त्रे[1] प्रयुक्तो 'घृत' शब्दः साम्प्रतं प्रसिद्धे घृतरूपेऽर्थे गृहीतः साम्प्रतिकैः। यास्काचार्येण सायणाचार्येण च उदकरूप एवार्थो गृहीतो घृतशब्दस्य।

साम्प्रतिकैरयं मन्त्रः इत्थं व्याख्यातः—ते आगत्य अत्र यज्ञे घृताहुतीः प्रदद्युरिति।

परमस्य यथार्थोऽयमर्थः—पूतदक्षं मित्रं, शत्रुनाशकं वरुणञ्चात्र यज्ञे निमन्त्रयामः। यतस्तौ उदकप्रेरणरूपं कर्म सम्पादयतः। अतः सूक्तं महर्षिणा यास्केन—"अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते" (निरु. १।५) इति।

अन्यच्च निरुक्तफलं निर्दिशति[2] यास्काचार्यः, यत् निरुक्तज्ञानमन्तरा पदविभागः कर्तुं न शक्यः। "दूतो निर्ऋत्या इदमाजगाम" (निरु. अ. १ पा. ६ ऋ. १०।१६५।१।)। अत्र निर्ऋत्या इति पञ्चम्यन्तं षष्ठ्यन्तं वेति भवति संशयः। "परो निर्ऋत्या आचक्ष्व" (नि. अ १ पा. ६) अत्र 'निर्ऋत्यै' इत्यस्य 'निर्ऋत्या' इति विकृतं रूपं जातम्। "इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति" (निरु. १ अ. पा. ६ ऋ. ४।५।) अस्य मन्त्रस्य इन्द्रो वा वायुर्वा देवता? इति भवति सन्देहः। एते सर्वे विषया निरुक्ते मीमांसिताः। अतोऽर्थज्ञानार्थं निरुक्तमध्येयम्। अर्थज्ञानमन्तरा न कस्यापि कर्मणः सिद्धिराशंसनीया प्रेक्षावद्भिः। वेदेऽपि अर्थज्ञाः प्रशंसितास्तच्छून्याश्च तिरस्कृताः।[3] एते विषया निरुक्तस्य प्रथमाध्याये यास्काचार्येण सम्यगालोचिताः।

## निघण्टुः

द्वितीयाध्याये च पदानां निर्वचनं विहितम्। द्वितीयाध्यायत एव 'निघण्टु'ग्रन्थस्य व्याख्यानमारभ्यते।

---

१ "मित्रं हुवे पूतदक्षं वरुणं च रिशादसं, धियं घृताचीं साधन्ता।"

२ अथापीदमन्तरेण पदविभागो न विद्यते।—(निरु० अ. १ पा. ६)

३ "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥
—(निरु. अ. १ पा. ६)

निघन्टुनामकस्य ग्रन्थस्य प्रथमाध्याये पृथिवीवाचका एकविंशति-शब्दाः सन्निवेशिताः। तत्र प्रथमो 'गो" शब्दः। व्याख्यातः किल एष शब्दो यास्काचार्येण। ततः परं गोशब्देन केषामर्थानामभिधानं भवतीत्यपि निरुपितं महर्षिणा। 'आदित्यवाचको गोशब्द इत्यभिधाय यास्काचार्यो वदति—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रतिदीप्यते, आदित्यतोऽस्य दीप्तिर्भवति।"—( निरु. अ. २ पा. २ )।

साम्प्रतिका विद्वांसो—महर्षयो हि अज्ञा इति निर्धारयन्ति नासीत् तदा विज्ञानप्रचार इति च।

किन्तु यास्कोक्त्या तेषां महर्षीणां विज्ञानपाटवं सम्यक् परिचीयते। सूर्यरश्मयश्चन्द्रमनुधावन्ति, चन्द्रश्च तैरेव दीप्यते। पुनरमुमर्थं प्रमाणयति—"चन्द्रस्य अपरं नाम गन्धर्व इति, सूर्यरश्मिभिरयं दीप्यते इति सुषुम्नपदेनापि तस्याभिधानं भवति, "सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति" ( यजु. १८।४० )। रश्मिवाचकोऽपि 'गो' शब्दः, तद्यथा—"यत्र गावो भूरि शृङ्गा अयासः ( ऋ. ११५४।६ अ. २ पा. २ )। अस्याऽर्थः—तद्गृहं वासयोग्यं, यत्र सूर्यरश्मयः प्रचुरं प्रतिफलन्ति।

"होत्रमृषिर्निषीदन्" ( ऋ. १०।६८।५; निरु. अ. २ पा. ३ ) इति ऋक्खण्डव्याख्यानावसरे यास्कः पूर्वाचार्यस्य औपमन्यवस्य मतमुट्टङ्क्य लिखति—"ऋषिर्दर्शनात्" स्तोमान् ददर्श इत्यौपमन्यवः, तद् यदेनांस्तपस्यमानान् स्वयम्भ्वभ्यानर्षत् ऋषयोऽभवन् तदृषीणामृषित्वमिति विज्ञायते। 'दृश्' धातोरेवायमृषि शब्द उत्पन्न इत्यौपमन्यवः। ऋषिभिर्मन्त्रा दृष्टा इति। तपसा प्राप्तश्रुतिप्रसादा एव ऋषयः।

### 'वृत्रासुर' शब्दस्य निरुक्तिः

"वृत्रस्य निण्यं विचरन्त्यापः" ( ऋ. ११३२।१०; निरु. अ. २ पा. ५ ) इत्येतद्व्याख्यानावसरे यास्कः प्रोवाच—"तत् को वृत्रः? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः" ( निरु. अ. २ पा. ५ ), रूपकृद्देवतायास्त्वष्टा इति नामान्तरम्। यया शक्तिभूतया देवतया पदार्थानां रूपाणि प्रकाशन्तेतस्या एव त्वष्टृपदेनाभिधानम्। सूर्य एव रूपप्रकाशक इति तस्य त्वष्टा इति अपरं नाम। पृश्निरिति सूर्यस्य अपरं

नाम वेदेषु दृश्यते। पृश्निशब्दस्य यास्ककृतोऽयमर्थः—"पृश्निरादित्यो भवति, प्राश्नुते एनं वर्ण इति नैरुक्ताः" ( निरु. अ. २ पा. ४ )। सूर्यतो मेघा उत्पद्यन्ते। अतस्तेषां त्वाष्ट्रपदेनाभिधानं भवति। असुरा मेघा असुं जलं राति आदत्त इतिव्युत्पत्त्या।

इत्थमैतिहासिका अपि वृत्रपदेन मेघानेव परिचिन्वन्तीति फलितम्। साम्प्रतं वेदवर्णितस्य वृत्रासुरयुद्धस्य का गतिः? कथमसत्यं वृत्रासुर-युद्धवर्णनं वेदे सन्निविष्टम्? इति।

यास्काचार्यः समादधति—"अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णना भवति। अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च" ( निरु. अ. २ पा. ५ ) इति।

'अहन्' शब्दस्य दिनवाचित्वं समुल्लिखितम्[1]। दिनं रात्रिश्च सततं परिभ्रमति, सूर्यो ज्योतिषां श्रेष्ठः, स हि किरणैरपनयत्यन्धकारम्, तदा सूर्य उदयतीति प्रतीयते। परं स स्थिरः, पृथिवी एव सदा परिभ्रमति। अत एव पृथिव्या अर्धो भागः कृष्णः अर्धश्च शुक्लः प्रतीयते। यदा पृथिव्या यो भागः सूर्यसम्मुखीनो भवति, तत्र सूर्य उदयन्निव लक्ष्यते अतएव "जायमान इव" इति मन्त्रवर्णः सङ्गच्छते। पृथिवीपरिभ्रमण-सिद्धान्तः पाश्चात्यैरेव विद्वद्भिः स्थिरीकृत इति साम्प्रतिका विद्वांसो मन्यन्ते, किन्तु एतेन प्रदर्शितेन पथा तैर्व्यवस्थापितः सिद्धान्त इति दूरं निरस्यते।

तृतीयाध्यायस्य प्रारम्भे अपत्यवाचकाः शब्दा व्याख्याता यास्का-चार्येण। तत्रैव प्रसङ्गतः पुत्रो वा दायाधिकारी, कन्यावेति विचारितोऽयं विषयो महर्षिणा। पुत्र एव अंशभाक्, न कन्या। अत एव कन्या परेभ्यः प्रदीयते। यथा कन्याः प्रदीयन्ते, विक्रीयन्ते, त्यज्यन्ते च न तथा पुत्राः।

अपरे पुत्रा अपि विक्रीयन्त इति वदन्ति, उदाहरन्ति च शुनःशेप-पितुर्निर्घृणमपत्यविक्रयम्।

---

१ अहश्चकृष्णमहरर्जुनञ्च विवर्तेते रजसी वेद्याभिः। वैश्वानरो जायमानो न राजा वातिरज्ज्योतिषाग्निस्तमांसि।

—ऋ. ६।९।१ निरु. अ. २ )।

केचन वदन्ति अभ्रातृमती कन्या दायमर्हतीति। एतत्प्रसङ्गेन अभ्रातृमती कन्या परिणेया न वेति संशयः।

तत्र समाहितं यास्काचार्येण—'न परिणेया सोदरहीना कन्येति। तेन व्यवस्थापिते सिद्धान्ते अथर्ववेदीयो मन्त्रोऽप्युदाहृतः[1]। अभ्रातृका इव योषास्तिष्ठन्ति, सन्तानकर्मणे पिण्डदानाय हतवर्त्मन इति अभ्रातृकाया निर्वाह औपमिकः। स्मृतिभिरपि एष सिद्धान्तः स्थिरीकृतः।

## 'आर्य' शब्दस्य निरुक्तिः

पुरा भारतवासिनो वैदिका आर्या इत्युच्यन्ते स्म। साम्प्रतिका विद्वांसः आर्यशब्दस्य कृषकरूपोऽर्थ इति वर्णयन्ति। 'ऋ' धातोरयं निष्पन्नः शब्दः। संस्कृतधातुपाठे कर्षणमिति अर्थो 'ऋ' धातोर्न दृष्टः। य शब्दो यस्या भाषायास्तस्य शब्दस्य अर्थनिर्णये सैव भाषा क्षमते। संस्कृतभाषायां न आर्यशब्दस्य कृषकरूपोऽर्थो दृष्टः श्रुतो वा। यास्काचार्यो हि आर्यशब्दमित्थं व्याख्यातवान्—"उरुज्योतिश्चक्रथुरार्याय" इत्येतन्मन्त्रखण्डस्थार्यपदव्याख्यानावसरे "आर्य ईश्वरपुत्र" इति निरुक्तकारः प्रोवाच।

मन्त्राणां ऋषिर्देवताछन्दश्चेति विज्ञाय वैदिकाः कस्मिन्नपि कर्मणि प्रवर्तन्ते। मन्त्रप्रयोक्तुरेषां ज्ञानमावश्यकम्। मन्त्रद्रष्टारो ऋषय इत्युक्तपूर्वम्। कस्य मन्त्रस्य का देवता? इत्यस्य विज्ञानोपायं निर्दिशति महर्षियास्कः—"सैषा देवतोपपरीक्षा यत्कामऋषिर्यस्यां देवतायामर्थापत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति।" अतो बह्व्यो देवताः समभवन् मन्त्राणाम्।

## 'अग्नि' शब्दस्य निरुक्तिः

एकैव देवता कर्मभेदात् त्रिधा[1] विभिन्ना। पुनरेतास्तिस्र एव देवता ब्राह्मणग्रन्थेषु पुराणेषु च बहुधा भिन्ना दृश्यन्ते। परमासां मूलीभूता देवता एकैव या हि अग्निरित्युच्यते। विश्वानर इति वैश्वानर इत्यग्नेरपरं

---

१ "अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः" (अथर्व० १।१७।१ निरु. अ. ३)।

नाम। त्रिविधोऽग्निरिति वैदिका विदन्त्येव। कीदृशोऽग्निर्विश्वानरः, कीदृशो वा वैश्वानर इति विचारितं यास्काचार्येण। विद्युतः सूर्यस्य च विश्वानर इति नाम। पार्थिवोऽग्निर्विद्युता सूर्येण चोत्पद्यते। अतः स वैश्वानर इत्याख्यायते।

इत्थमेव वैदिकाः शब्दा यस्काचार्येण व्याख्याताः। अयं तावत् प्रतिशब्दं मूलमन्वेषयति। आधुनिका भाषावैज्ञानिका अपि एतत्प्रदर्शितं पन्थानमनुकुर्वन्ति। इमेऽपि शब्दमूलान्वेषणे प्रयतन्ते। आधुनिकानामियं मूलान्वेषणप्रवृत्तिः श्रीमतो यास्काचार्यादेवाधिगता।

अतो महर्षियास्क एव आधुनिकानां भाषावैज्ञानिकानां भाषा-पथ-प्रदर्शकः परमोगुरुः, श्रीमद्यास्कविरचितं निरुक्तं भूमण्डले प्रथमं भाषाशास्त्रम्। अयं यास्को मुनिः पारस्करदेशनिवासी आसीदिति प्रतीयते। "पारस्करप्रभृतीनि च संज्ञायाम्—" एतत्सूत्रभाष्ये श्रीमत्पतञ्जलिना 'पारस्करो देशः' इत्युल्लिखितमस्ति। कालविपर्यासादस्य विरचितस्य ग्रन्थस्य निरुक्ताख्यस्य पठन-पाठनव्यवहारो लुप्तप्राय इति दृष्ट्वा चेखिद्यते चेतः। पुनरस्य पठनपाठनप्रचारः प्रचलत्विति भगवन्तम्प्रार्थये। इति शम्।



---

१ तिस्रो देवता इति नैरुक्ताः, अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः— ( निरु. अ ७ पा. २ )।

# मुक्तितत्त्वविमर्शः

*सुधांशुशेखरशास्त्री*

सर्वेषामेव दर्शनाचार्याणां प्रायः स्वाभिमतदर्शने मोक्षोद्देश्येनैव प्रवृत्तिर्जायमाना दृश्यते. अतः मोक्षसामान्ये केषामपि विप्रतिपत्ति-र्नास्तीति सत्यम्। मोक्षविशेषस्वरूपन्तु स्वस्वाभिमतप्रमाणैर्यस्य यत्साधयितुं शक्यमात्मैक्यमात्मनानात्वं वाऽत्मानात्मनोरैक्यं भेदो वाऽऽत्मन स्वाभाविकं भोक्तृत्वं वा तदनुसारेण तेनाङ्गीक्रियते। तत्र कस्य दर्शनकारस्य कीदृशं मोक्षस्वरूपमभिमतं तत्संक्षेपतोऽत्र वर्णयामः।

*चार्वाकमते*—तत्र प्रथमं प्राप्तमतिस्थूलमतिमद्भिरप्यवगम्यमानतया चार्वाकसिद्धान्तन्तावदवलोकयामः। चार्वाकसिद्धान्ते प्रत्यक्षमेवैकं प्रमाणं, तेन प्रमाणेन सिद्धं यद्वस्तु तदेव सत्यम्। अत एव जन्मान्तरं तै र्न स्वीक्रियते। परित्यक्त एतस्मिन् शरीरे जन्मान्तराभावे च मोक्ष एवावशिष्यते। अतस्तन्मते मरणमेव मोक्षः, "देहस्य नाशो मुक्ति-" रित्युक्तेः।

*बौद्धमते*—बौद्धाः किल सर्वं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति भगवद्बुद्धोपदिष्टचतुर्विधभावनयैव परमपुमर्थमुप-गच्छन्तश्चत्वारो माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकसंज्ञाभिः प्रसिद्धिं नयन्तः सन्ति। योगाचारसौत्रान्तिकवैभाषिकसंज्ञकानां त्रयाणामस्ति यद्यपि किञ्चिन्मतभेदः। स च—"योगाचारस्य मते बाह्यं नास्ति वस्तु सदपि तु—अनाद्यविद्यावासनासमारोपितमलीकमेव। आन्तरज्ञानस्यैव बहिः समारोपः। सौत्रान्तिकवैभाषिकयोर्मते बाह्यं भूतं भौतिकमान्तरञ्च सुखदुःखादिकमस्ति सर्वं सत्। एतयो-र्मध्येऽपि सौत्रान्तिकैर्ज्ञाने स्वाकारसमर्पकत्वेन सर्वो विषयोऽनुमेय आस्थीयते। वैभाषिकैस्तु यथायोग्यं प्रात्यक्षिक आनुमानिकश्च विषयोऽभ्युपेयते" इत्यात्मकः। तथापि मुक्तिविषये त्रयाणां प्राय ऐक-मत्यम्। एते खलु तत्त्वज्ञानानन्तरं जायमानो विमलविज्ञानप्रवाहा-

परपर्यायो निर्मलज्ञानोदय एव मोक्षः इति प्रतिपेदिरे। तदुक्तं विवेक-विलासे—"दुःखमायतनं चैव ततः समुदयो मत" इति। समुदयो मोक्षः।

माध्यमिकस्तु सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्वं स्वीकृतवान्। तन्मते सर्वशून्यतायां पर्यवसानात्मक आत्मोच्छेद एव मोक्षः। तदुक्तम्—"प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतस" इति।

इदं वस्तुबलायातं यद् वदन्ति विपश्चितः।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा॥ इति च।

*जैनमते*—कर्मकृतस्य देहस्वरूपावरणस्याभावे जीवस्य सततोर्ध्वगमनं मोक्ष इति जैनाः। तदुक्तं तत्त्वार्थाधिगमसूत्रे—

"बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्षः"। (१०।२)
"तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात्"। (१०।५) इति।
संसारबीजभूतानां कर्मणां जरणादिह
निर्जरा सम्मता द्वेधा सकामकामनिर्जरा
स्मृता सकामा यमिनामकामा त्वन्यदेहिनाम्। इति च।

*रामानुजमते*—कर्मकर्तृत्वव्यतिरिक्तानां सर्वज्ञत्वादीनां परमात्मगुणानां प्राप्तिः याथात्म्येन भगवतस्वरूपानुभवश्च मोक्ष इति रामानुजीयाः। एते खलु कर्मसमुच्चितज्ञानस्य मोक्षसाधनत्वं स्वीकृतवन्तः। तत्र च "अन्धंतमः प्रविशन्ति" इत्यादि (बृ. ४।४।१०, ईशा० ६,) श्रुतिप्रमाणभूतामुपपादयन्ति। पञ्चरात्ररहस्ये एतेषां सिद्धान्तः प्रतिपादितस्तत्र मोक्षस्वरूपविषये इत्थं जगाद—

"ततः स्वाभाविकाः पुंसां ते संसारतिरोहिताः।
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः।
एवं गुणाः समानाः स्यु र्मुक्तानामीश्वरस्य च।
सर्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते॥ इति।

*माध्ववेदान्ते*—जगत्कर्तृत्वलक्ष्मीपतित्वश्रीवत्सप्राप्तिरहितं दुःखामिश्रितं पूर्णं सुखं मोक्ष इति माध्ववेदान्तिनः। सच विष्णुप्रसादादेवेति तेषां सिद्धान्तः। तदुक्तं विष्णुपुराणे—

तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ।
समाश्रिताद् ब्रह्मतरोरनन्तात् निःसंशयं मुक्तिफलं प्रयान्ति ॥
(१।७।६१) इति ।

मुक्तिर्निजसुखानुभूतिरमला भक्तिश्च तत्साधनमित्यपि ।

*पाशुपतमते*—परमैश्वर्यप्राप्तिर्मोक्ष इति नकुलीशपाशुपताः। एतेषां समये यथावत्तत्त्वनिश्चय एव मोक्षसाधनम् । स च पाशुपतशास्त्रादेव न चान्यथा । तदुक्तम्—

ज्ञानमात्रे वृथा शास्त्रं साक्षाद्दृष्टिस्तु दुर्लभाः ।
पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः ॥

पञ्चार्थात् = पञ्चार्थप्रतिपादनपरकपाशुपतशास्त्रादित्यर्थः ।

*शैवमते*—शिवत्वप्राप्तिरेव मोक्ष इति शैवाः। शिवशब्देन च शिवत्वयोगिनां मन्त्रमन्त्रेश्वरमहेश्वरमुक्तात्मादयो गृह्यन्ते। शिवत्वप्राप्तिसाधनीयभूताश्च दीक्षादय उपाया इति शैवदर्शनादौ स्पष्टीकृतम् ।

*शाक्तमते*—पूर्णात्मतालाभ एव मोक्ष इति शाक्ताः। स च प्रत्यभिज्ञामात्रादेव। प्रत्यभिज्ञा च परमेश्वरविषयकं प्रति अभिमुख्येन ज्ञानम्। स्वातन्त्र्यशक्तिविशिष्टस्य परमेश्वरस्याहंतया "परिपूर्णोऽहमित्याकारकं ज्ञानमितियावत्। संकोचभाव एव जीवत्वम्। पूर्वोक्तपरिपूर्णताज्ञानेन जीवत्वनिवृत्तौ मुक्तत्वव्यवहारः। स्वातन्त्र्यशक्तिश्चैतेषां सिद्धान्ते चितः स्वात्मभूतैव स्वीकृता। स्वातन्त्र्यशक्ते स्फार एव जगत्। तदुक्तम्—

तत्स्वातन्त्र्याधिकमधुना नोत्तरं बंभणीम इति ।

*रसेश्वरवादिनां मते*—पारदरसेन देहस्थैर्ये जीवन्मुक्तिरेव मोक्षं इति रसेश्वरवादिनः। पारदशिवलिङ्गार्चनेन जीवोऽपि शिवरूपतां प्राप्नोति। तदुक्तम्—

पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् ।
यो यजेत्पारदं लिङ्गं स एव शम्भुरव्ययः ॥

अन्यच्च—

आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम्
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् । इति ।

तत्करणञ्च रसराजः । तदुक्तम्—

एकोऽसौ रसराजः शरीरमजरामरं कुरुते । इति ।

*वैशेषिकमते*—अशेषविशेषगुणोच्छेदो मोक्ष इति वैशेषिकाः । तदाह वैशेषिकसूत्रकारः—

आत्मकर्मसु मोक्षो व्याख्यातः ( ६।२।१६ ) । इति ।

आत्मकर्मसु शब्दादिविषयकेषु समाप्तेषु सत्सु मोक्षो भवतीति सूत्रार्थः । भाष्यकाराश्चाप्याहुः—तदानिरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धानानलवदुपशमो मोक्ष इति । एतेषां सिद्धान्ते द्रव्यादिपदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमेव मोक्ष-साधनम् । अत्राह सूत्रकारः— धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्य-विशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निश्रेयसम् ( १।१।४ ) इति ।

*नैयायिकमते*—आत्यन्तिकी दुःखनिवृत्तिरेव मोक्ष इति नैयायिकाः । तदत्यन्तविमोक्षोऽपवर्ग (१।१।२२) इतिसूत्रकारवचनं तत्र प्रमाणम् । सूत्र-घटकतच्छब्देन दुःखस्य परामर्शः । मिथ्याज्ञानादयः दुःखान्ता धर्माः अवि-च्छेदेन वर्तमाना एव संसारः । एतादृशसंसारस्य निवृत्तिरेव मोक्षोपायः। तादृशसंसारनिवृत्तिश्च पदार्थतत्त्वज्ञानादेव । यदा तत्त्वज्ञानान्मिथ्याज्ञान-मपैति तदा मिथ्याज्ञानापाये दोषा अपयान्ति। दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमपैति, दुःखापाये चात्यन्तिकोऽ-पवर्गो भवतीति न्यायसिद्धान्तः । तदाह सूत्रकारः—दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग (१।१।२) इति ।

वस्तुतस्तु न्यायवैशेषिकयोर्न परस्परं विरोधो मोक्षविषये । आत्मन अशेषविशेषगुणानामुच्छेदस्यात्यन्तिकदुःखनिवृत्त्युपायतया न्यायमतेऽपि स्वीकृतत्वात् । तदुक्तं जयन्तभट्टेन न्यायमञ्जर्याम्—

यदात्मगुणाः सर्वे नोच्छिन्नाः वासनादयः ।
तावदात्यन्तिकी दुःखव्यावृत्तिर्नोविकल्पते ।
धर्माधर्मनिमित्तो हि सम्भवः सुखदुःखयो ।
मूलभूतौ च तावेव स्तम्भाः संसारसद्मनः ।
तदुच्छेदे तु तत्कार्यशरीराद्यनुपप्लवात् ।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्ययते ।। इति ।

केचिन्नैयायिकैकदेशिन भट्टसर्वज्ञादयस्तु—न केवला दुःख-निवृत्तिर्मोक्ष अपितु नित्यनिरतिशयसुखाभिव्यक्तिरपि मोक्षस्वरूपे प्रविष्टेति वदन्ति। तच्च न्यायदर्शनदृष्ट्या न प्रमाणपद्धतिमध्यास्तेऽत उपेक्ष्यम्।

*मीमांसकमते*—स्वर्गादिप्राप्तिर्मोक्ष इति मीमांसकाः। एतेषांसिद्धान्ते धर्मः एव परमपुरुषार्थः। धर्मश्च प्रयोजनमुद्दिश्य वेदेन विधीयमानोऽर्थः। तस्य यागरूपस्य धर्मस्यानुष्ठानेन स्वर्गरूपनिश्रेयसं जन्यते। तदुक्तम्—

'चोदनालक्षणोऽर्थो धर्मः (१।१।२) इति।

प्रभाकरास्तु—आत्यन्तिदुःखप्रागभावो मुक्तिः। आत्यन्तिकत्वञ्च स्व-समानाधिकरणयावद्धर्मनाशविशिष्टत्वम्। तेन संसारितादशायां नाति-प्रसङ्ग इति वदन्ति।

*वैयाकणमते*—मूलचक्रस्थायाः परानामिकायाः ब्रह्मरूपायाः वाचो दर्शनं मोक्ष इति पाणिनीयाः। सच व्याकरणशास्त्राध्ययनजन्यशब्दशास्त्र-नैपुण्येन जायते। तदुक्तम् भर्तृहरिणा—

"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति।

*सांख्यमते*—प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मोक्ष इति सांख्याः। प्रकृतिश्च तेषां सिद्धान्ते सत्त्वरजस्तमोगुणानां साम्यावस्था। साम्यावस्थया प्रच्युतिश्च संसारदशा। अत एव प्रकृते परिणामः प्रपञ्चः। प्रकृतेरुपरमः मोक्षः। सांख्यकारिकायामित्थं प्रतिपादितः—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥ का० ५९



# वेदानां सामवेदोऽस्मि

*परड्डी मल्लिकार्जुनः*

गीतामहाभारतयोः संबन्धे गीताचार्यविषये धृतराष्ट्रसन्निधौ सञ्जयस्य सदैवोपस्थितेर्विषये चाभिप्रायभेदः स्वाभाविक एव। संस्कृत-वाङ्मयः समस्यागारमिति कथ्यते कैश्चित्।

कवीनां चरितं प्रायः स्पष्टरीत्या न शक्यते।
वक्तुं गीतादितात्पर्यं मर्वं तमसि मज्जते॥

भगवद्गीताया दशमाध्याये द्वाविंशतितमे श्लोके यदुक्तं तत्तु चर्चास्पदं भवति। आत्मनो विभूतिं वर्णयन् भगवान् श्रीकृष्णोऽर्जुनं प्रति वक्ति—

"वेदानां सामवेदोऽस्मीति।"

तेन प्रथममेवोक्तं यत् वेदास्त्रय इति—

"त्रैविद्याः सोमपाः पूतपापाः।"
"एवं त्रयीमार्गमनुप्रपन्नाः
गतागतं कामकामा लभन्ते।"

तत्संदर्भे ऋग्वेदस्य प्रथमस्थानं तेनैव निर्दिष्टम्—

ऋक् साम यजुरेव च। (भ. गी. १०, १७)

अमरकोषोऽपि वेदत्रयमेवांगी करोति—

"वेदास्त्रयस्त्रयी" इति।

"सत्येवं यदा गीतायां" वेदानां सामवेदोऽस्मीति सामवेदश्रेष्ठतां दर्शयति, कस्य नाश्चर्यकारकमेतत्? समस्यानेन सहजमेवाविर्भवति।

सामान्यतया चतुर्णां वेदानामुल्लेख इत्थं क्रियते—

ऋग्वेदः सामवेदश्च यजुराथर्वणं ततः।
वेदाश्चत्वार उच्यन्ते चतुराननिर्गताः॥

तेषां ऋग्वेदो विश्वसाहित्ये प्रथमोपलब्धः ग्रन्थ इति कीर्ति-भागस्ति। एवं—

महत्ताकालयोगेन ऋग्वेदश्रेष्ठता यदा।
सामवेदः पुनः श्रेष्ठः, समस्या गुरुतरा तदा॥

"ऋग्वेदः श्रेष्ठो वेद"[1] इति विदुषामभिप्रायः। यदा मनुस्मृतौ पठामः यत्—

ऋग्वेदो दैवदैवत्यो यजुर्वेदो तु मानुषः।
सामवेदः स्मृतः पित्र्यस्तस्मात्तस्या शुचिर्ध्वनिः॥

तदेयं समस्या गुरुतरा भवति[2]।

अवस्थायामस्यां सामवेदश्रेष्ठता कथमङ्गीकार्या ? सामवेदस्था ऋचः प्रायः ऋग्वेदादेवोद्धृता भवन्ति। सामवेदस्य पृथगस्तित्वं नापि सम्भवति। श्लोकमेनं पठित्वा कति विद्वांसो वदन्ति यत् गीताचार्यः सामवेदी ब्राह्मण आसीत्। यतस्तेनात्मनः सामवेदं प्रति पक्षपातः दर्शितः तेषामभिमते—

साम्नां च पक्षपातेन सामवेदी द्विजोत्तमः।
देवकीपुत्रतामाप्तः कृष्णो भागवतोत्तमः॥

किन्तु येन ब्रह्मज्ञानं विना वेदज्ञानमपूर्णं, वेदोक्तयज्ञक्रिया निष्फलास्थिराचेति मन्यते, येनोपनिषदां सारं वेदान्तहृदयमेव गीतायां निक्षिप्तवान् स भगवान् कथं सामवेदी द्विजो भवति। यदुकुलोत्पन्नः क्षत्रियो वासुदेवः देवकीनन्दनः विष्णोरवतार एव गीताचार्य इति हिन्दूनां प्रायो मतैक्यम्। अतो गीताचार्यस्य कृष्णस्य सामवेदित्वकल्पनाऽसंगता भवति। कृष्णो गीताकर्ता नास्ति, व्यास एवास्ति, इति मन्यते चेत्, तस्य व्यासस्यापि सामवेदित्वं न सिद्ध्यति। चतुर्वेदान् विन्यासेति कथनात्।

महाभारतस्यानुशासनपर्वणि सामवेदमाहात्म्यं गीयते—

सामवेदश्च वेदानां यजुषां शतरुद्रियम्।

---

1. John Davis, Bhagavadgita, 1954, P. 66.

2. It is curious to notice that in Manu IV 124. the Sound of the Saman is said to convey a notion of impurity owing to their connection with the Pitṛs.

W. Douglas. p. Hi 4. The Bhagavadgīta, P 157.

ऋग्वेदस्य तात्त्विकी श्रेष्ठतां गणयन् मनुः सामवेदस्य व्यावहारिक-महत्त्वं न गणितवानिति मतिरस्माकम् । यथा—

तात्त्विकी श्रेष्ठता नास्ति सामवेदस्य यद्यपि ।
महत्त्वं व्यवहारे यत् अपाकर्तुं न शक्यते ॥

कति प्राचीनोपनिषदः गीताया अपि पूर्वमेव रचिता इति मन्यते चेत्, सामवेदश्रेष्ठताकल्पना पुरातनैव भाति । यतः शतपथब्राह्मणे[3] छान्दोग्योपनिषदि च सामवेदस्य माहात्म्यं वर्णितमस्ति[4] । अतः सामवेदमाहात्म्यगणनातीव पुरातना भाति ।

किन्तु ऋग्वेदे सत्यपि सामवेदश्रेष्ठता किमर्थं गण्यते ? ऋग्वेदस्य ऋचः सामवेदसंगीतशास्त्रदृशा निबद्धा गीतयोग्या सन्ति[5] । अत्राव-गन्तव्यं यद् भक्तियोगं संगीतस्य प्रमुखस्थानं भवतीति । सामान्यतया संगीतं सर्वेभ्यो अपि रोचते ।

शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं पशुः । इति न्यायात् ।
ये केऽप्यौरंगजेबस्य भ्रातरो गीतवैरिणः ।

शिशुभ्यश्च पशुभ्यश्च तरुभ्यश्चापि तेऽवराः । अत एव कालिदासीय-शाकुन्तलप्रस्तावनायामुक्तं यत्—

"तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।"

---

3. शतपथब्राह्मण XII, 8, 3, 23.
4. This Veda receives special honour in chāndogya upaniṣad i I, as being the essence of the Ṛgveda, from which nearly all its verses are derived.

   W. Douglas. P. Hi 4, Bhagavadgīta P. 159.
5. The fact that its verses were chanted also gave it special value.

   W. Douglas. P. Hi 4, Bhagawadgīta & also.

   The Sāmaveda was especially honoured by some of the Brahmins because its hymns were arranged for chanting in religious rites.

   John. Davis, Bhagavadgīta P. 66.

तेनैव कविगुरुणोक्तं रघुवंशे लवकुशगानप्रसंगे यत्—

"तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।
हिमनिस्यन्दिनी प्रातः निर्वातेव वनस्थली ॥"

गीतश्रवणेन मनःशुद्धिः संपद्यते। भक्तिरसैका भावना स्थिरा भवति।

भक्तस्य मानसं प्रायः देवलीनं भविष्यति।
श्रूयन्ते च यदा गीता देवदेवस्य कीर्तयः ॥

"मद्भक्ता यत्र तिष्ठन्ति तत्र तिष्ठामि पार्वति।" इत्युक्त्वा महादेवेनापि संगीतप्रियता व्यक्तीकृता। नारायणीयधर्मे नारदेन विष्णोः संगीतलोलुपता दर्शिता—

"वेदेषु च पुराणेषु सांगोपांगेषु गीयते"।

स्थिरभक्तियोगसुलभः शङ्कर इति कालिदासेन यदुक्तं तेनेदमेव सुव्यक्तं भवति। ईश्वरं प्रीणातुं संगीतमेव सुलभसाधनम्। संगीतश्रवणेन यदा कदापि कामोद्रेकमपि भवति। तेन मानवः पशुरेव भवति। किन्तु तदेव मोक्षदायकं ईश्वरसाक्षात्कारकारणं भवति यदा ईश्वरं प्रति युज्यते।

भक्तिगीतपठनं साधनैव, यतोऽनया साधनया देवदेवः प्रसन्नो भवति।

"प्रणवः सर्ववेदेषु"[१], "वेदानां सामवेदोऽस्मि" इति वाक्ये विरुद्धे इति न ज्ञायतां यतः प्रणवनामको वेदो नास्ति।

"ईश्वरो वेदप्रियो नास्ति, नादप्रियो नास्ति" इति उक्तवता श्रीबसवेश्वरेण शिवशरण्यवरेण भक्तिप्रामुख्यं दर्शितम्। यथ—

"वेदानां सामवेदोऽहं इतीयं वाक् कदाचन।
नाभिप्रायान्तरं नूनं जनयेद् गीतशंसिनी ॥"



---

१. ओंकारः सर्ववेदानामिति अनुगीतायामपि तदेव सूचितम्।

# प्राकृते नाटकचर्चा नट्धातुश्च

कपिलदेवगिरिः

दैवी मायया भाषाविकासक्रमेण वा अस्मिन् भारतदेशे कदाचित् संस्कृतभाषा, कदाचित् पालिभाषा, कदाचित् प्राकृतभाषा प्रचलिता आसीत्। प्राकृतस्य अन्तिमा अवस्था एव अपभ्रंशभाषा अस्ति। अपभ्रंशादेव आधुनिकीं भारतीया आर्यभाषा यथा—व्रजभाषा, अवधी, भोजपुरी, हिन्दीत्यादयः विकसिता परिवर्धिता सन्ति।

यद्यपि संस्कृतसाहित्ये नाट्यसाहित्यम् मनोरंजन-साहित्येषु परिगण्यते तथापि ब्रह्मणा विरचितोऽयं 'नाट्यवेदः' चतुर्षु वेदेषु पञ्चमवेद इव अस्ति, आभाति। अर्थात् ब्रह्मा ऋग्वेदात् पाठ्यं, सामवेदात् गीतं, यजुर्वेदात् अभिनयं तथैव आथर्ववेदात् रसमादाय पञ्चमवेदस्वरूपं नाट्यवेदं व्यरचयत्। यथा उक्तञ्च नाट्यशास्त्रे भरतमुनिना—

जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥

—नाट्यशास्त्र १, १७

उपर्युक्तप्रमाणेन नाटकोत्पत्तिविषये अतीव स्वस्थपरम्परा हस्तगता दृश्यते, या सर्वोत्कृष्टा सर्वतो भावेन प्राचीना परम्परा अस्ति। अस्या परम्पराया अत्रैव भारतवर्षे सर्वप्रथमं उत्पत्तिः संजाता सर्वोच्चपदं च प्राप्ता। अतः नाट्यसाहित्यम् वेदादाविर्भूतमस्तीत्यत्र नास्ति कश्चिद् संदेहस्यावसरः। भारतीयनाटकस्य व्यापकता प्रभावोत्पादकता च सर्वत्रैव स्वीकृताऽस्ति। नाटयस्य उत्पत्तिविषये भरतमुनिना स्वकीयनाट्यशास्त्रे यत् रोचकं हृदयग्राहीवर्णनं कृतं तेनैव इदं निश्चितं स्पष्टं च भवति यत् नाटकस्य किंवा नाट्यस्य उत्पत्तिः धर्मद्रोहिना दैत्येन सह सम्बद्धा अस्ति। अतः इदमपि स्वीक्रीयते यत् भारतीयनाटकविकासे वैष्णधर्मानुयायिनां विशेषयोगदानमस्ति[1]। यतोहि महर्षिपतञ्जलिना येषां नाट्यप्रयोगाणां

---

१. द्रष्टव्यम्—बलदेव उपाध्यायः—संस्कृतसाहित्य का इतिहास, पृ० ४१५.
तथैव 'हिन्दी नाट्यशास्त्रम्—चौखम्बा प्रकाशनम्', पृ० ६.

उल्लेखः कृतः स विष्णुचरितेन सम्बध्यते। अपरंच भारतीयसंस्कृत-नाटकेषु गद्यखण्डे पद्यांशे वा शौरसेनीप्राकृतस्य प्राधान्यं वर्तते। एतेनापि इदमेव सूचितं भवति यत् नाटकविकासे शूरसेनदेशः ( मथुरा-मण्डलः ) एव अग्रेसर अस्ति, यतः तत्रैव कृष्णभक्तिगंगाया पावनधारा प्रथमं प्रवाहिता आसीत्। अतः कृष्णभक्तेः कृष्णभक्तानां वा विशेषः प्रभावोऽस्ति नाटकपरम्पराविकासे।

भरतनाट्यशास्त्रेण इदमपि ज्ञायते यत् संस्कृतेन सह प्राकृतभाषा देशभाषापि च प्रचलिता आसीत् बाहुल्येन। तेषु प्राकृतादिषु एकं शौरसेनी-प्राकृतमपि अस्ति। यस्योत्पतिस्थानं शुरसेनप्रदेशोऽस्ति। रसिकशिरोमणिश्रीकृष्णस्य जन्मस्थानसम्बन्धेन एतस्या शौरसेन्या महत्त्वं चतुर्गुणितं जातम्। अत एव शौरसेनीप्राकृतस्य प्रभावं हृदयेन स्वीकृतवन्तः भास-कालिदासप्रमुखाभारतीयनाटककाराः स्व-स्वरचना-विशेषेषु नाटकेषु शौरसेनीप्राकृतमेव आश्रितवन्तः प्रयुक्तवन्तश्च। भरत-नाट्यशास्त्रे शौसेनीप्राकृतस्योल्लेखः अस्त्येव। तत्रैव महर्षिणा भरतेन नायिकानां सखीनांच कृते शौरसेनीप्राकृतस्य प्रयोगोऽपि प्रदर्शितः—

नायिकानां सखीनां च शूरसेनाविरोधिनी।

—ना० शा० १७, ५१.

एवमेव शौरसेनीमधिकृत्य बहुविधो ग्रन्थः कल्पितः। अतः इयं शौरसेनी तत्र जैनशौरसेनी नाम्ना कथ्यते जैनपरम्परायां परवर्ति-रचनासु। एवमेव नट्यशास्त्रस्य विंशतितमे अध्याये ध्रुवानामकोऽध्यायः अस्ति। ध्रुवागीतिप्रयोगे शौरसेनीप्राकृतस्यैव प्रयोगः निश्चितः। वररुचि–हेमचन्द्र–क्रमदीश्वर–लक्ष्मीधर–मार्कण्डेयादिरचितप्राकृत–व्या–करणग्रन्थेषु शौरसेनीप्राकृतस्य लक्षणानि उदाहरणानि च समुपलभ्यन्ते। भरतनाट्यशास्त्रे विदुषकादीनां कृते प्राच्या भाषा कथिता। यथा—

प्राच्या विदुषकादीनाम्।

—नाट्यशास्त्र. १७, ५१.

अश्वघोषस्य नाटकेऽपि शौरसेनीभाषाया उदाहरणं मिलति। अतः संस्कृतवत् प्राकृतस्यापि वैशिष्ट्यं सुतरामेव सिद्धयति।

## प्राकृते नट्धातुचर्चा

संस्कृते यथा विभिन्नविषयेषु विपुलं साहित्यम् अस्ति तथैव प्राकृतेऽपि व्याकरण – साहित्य-दर्शन – गणितादिविषयकं साहित्यम् प्रचुरतया उपलभ्यते। अतः भारतीयार्यजातेः सांस्कृतिकधाराप्रवाहे जैन-बौद्धसांस्कृतिकधाराया महत्त्वपूर्णमवदानमस्ति। यथा संस्कृते नट्धातु अस्ति तथैव प्राकृतेऽपि नट धातु अस्ति। अपितु प्राकृत-नियमानुसारेण संस्कृत नट् धातु तत्र गत्वा द्वित्वव्यञ्जनान्तं रूपं गृह्णाति एवं नस्थाने णत्वं च भजति। अतः प्राकृते नट् धातु 'णट्ट' इति रूपं धारयति। हेमचन्द्रव्याकरणानुसारेण 'णट्ट' धातोः 'णट्टइ'[1] रूपं भवति। तथैव सं० 'नर्तकः', 'नाट्यम्', 'नृत्यम्' स्थाने प्राकृतभाषायां 'णट्ट'[2] इत्येव रूपं प्रचलति मिलति च। एवमेव संस्कृते व्यवहृतस्य 'नर्तकस्य' शब्दस्य स्थाने प्राकृते 'णट्टग' इति रूपं अस्ति तथा 'नर्त्तिका' स्थाने प्राकृतभाषायां 'णट्टिया' इति रूपं प्रचलति। अनेनैव प्रकारेण संस्कृते प्रचलितस्य 'नाटकस्य' स्थाने प्राकृते 'णाडक'[3]इत्येवं रूपं मिलति। अतः प्राकृते णाड (नाट) धातुरपि प्रयोगे अस्ति।

अतः संस्कृते व्यवहृतो नृत् धातुः प्राकृतमार्गेण 'णट्ट' इति प्राकृती-करणया 'नाट्य' अथवा 'नाटक' रूपं भजति चेत् तर्हि न काचित् विप्रतिप्रतिः। अनेनैव प्रकारेण अत्र इदमपि ध्यातव्यमस्ति यत् संस्कृते व्यवहृतो नृत् धातु प्राकृते 'णच्च' इति रूपं लभते तथैव संस्कृते 'नृत्य' शब्दः प्राकृते 'णच्च' इति रूपं धारयति। 'णच्च' इत्यनेनैव 'नाच' इति रूपं विकसितमस्ति यत् हिन्दी तथा भोजपुरीभाषायां अद्यापि प्रचलति। 'नाट्यं', 'नृत्यं' तथा 'नृत्तं' च नाट्यशास्त्रे पृथक्त्वेन प्रतिपादितमस्ति परन्तु प्राकृते सर्वसामान्ये प्रयोगाभावन् एतत् सर्वं पृथकृत्वं विलुप्तं जातम्। केवलं 'नृत्यनाट्य' व्यञ्जकः 'नट्ट' धातुरेव अवशिष्टः महाकाल-

---

१. हेम० प्रा० ४, २३० ( पी. एल. वैद्य. सम्पादितः )।

२-३. पाकृतशब्दमहार्णवः ( पाइय सद्दमहण्णवो )।

मुखात्। य अधुनापि संगीतपरंपरायां 'बृहन्नाट्ट', नटनारयण' आदि रागेषु अस्तित्वं ख्यापयति। अतः नाट्यनाटकयोरुत्पपत्तिविकासक्रमे प्राकृतस्य कियत् योगदानमस्ति इति विचारयन्तु साहित्यरसिकाः। अतः नृत् धातोः 'नाट्यं, नाटकं' वा उत्पन्नं संशयमवगाहते लक्ष्ये लक्षणस्याघटितत्वात् यथा–'अवस्थानुकृतिर्नाट्यम्, नृत्तं ताललयाश्रितमि,-ति तथैव प्राकृते 'नट्' धातुर्नास्ति इतिकथनं न युक्तिसंगतमितिदिक्।



# कामिनीषु कालिदासस्य कोमलानुरागः

*आचार्य-रमाशंकरो मिश्रः*

अथातो ललना-मार्दवानुशासनं कालिदास-दृष्टौ। तस्यै नम उज्जयिन्यै निखिल-लोकललाम-ललना-लावण्य-जयिन्यै, यत्र मन्ये गिरिजालिंगितार्धदेहं परमेश्वरं पूजयितु-कामानां कांची-कंकण-मंजीर-मंजु-शिंजित-रंजित-जनकामानां वामानां वामाक्षि-कटाक्ष-पातैर्वर्धित-रस-विलासः कालिदासः स्व-काव्येषु वितताव ललना-मार्दवं नु! निपीयतामेकमपरमपि 'कादम्बरी-पानकं विद्वत्तल्लजैः, 'अन्ताराष्ट्रिय-महिला-वर्षं' सहर्षं मानयद्भिः। यद्यपि जागतिक-प्रपंच-मंचमंचति वैरिंच-पाणि-पद्म-परागानुराग-रञ्जितेऽस्मिन् देव-दानव-मानव-निकरे ललनानां ललित-लालित्य-लालितं मधुर-माधुर्य-मेदुरितं च मृदुल-मार्दवं सनातन-कालत एव समपेक्ष्यते स्म सादरमेव, तथापि नव-नवपल्लवोल्ललित-कल्पपादप-बल्लरी-सन्निभ-कल्पना-प्रकल्पनैक-शिल्पिनो ललना-मार्दवैक-पक्षपातिनो महाकवि-कालिदासस्य विविधान् वाग्वैभव-विलासान् तदीय-काव्य-कुसुमाकरे दिदृक्षतेऽयं विचक्षण-चय-चरण-धूली-धवलित-भाल-भागः।

## १. ऋतु-संहारे

कवि-कुल-कुमुद-कलाधरेण कालिदासेन ऋतु-संहाराभिधे प्रथम-खण्डकाव्ये योग्यं योग्येन योजयेदिति लोक-नीतिमाकलयता ललनानां मार्दवानुरूपमेव क्वचन (ग्रीष्म-काले) प्रसरच्चन्द्रिका-चमत्कृत-विभावरी-विभावनं, विचित्रं जलयंत्र-मंदिरं, पाणि-कदम्बकं, 'सरसं चन्दनं' 'मदन-दीपनं' वीणा-गुणानुरणन्-समुपलालितं गीतम् 'उच्छ्वास-विकम्पितं मधु', सौरभाकुलं 'मनोहरं हर्म्यतलं' समुपायनीकृतम्। प्रस्तुतेषु तेषु मार्दव-सम्भार-भारेषु :—

'नितम्ब-बिम्बैः सदुकूल-मेखलैः, स्तनैः सहाराभरणैः सचन्दनैः।
शिरोरुहैः स्नान-कषाय-वासितैः, स्त्रियो निदाघं शमयन्ति कामिनाम्।

क्वचन च लाक्षारस-रागानुरंजितैः 'हंसरुतानुकारिभिः सनूपुरैः चरणैस्तथाऽसुकानिलैर्मन्मथो वीज्यते । क्वचिच्च 'सितेषु हर्म्येषु' सुख-प्रसुप्तानि वनिता-वदनारविन्दानि विलोक्य लज्जा-पाण्डुतामिव समा टीकते शीतदीधितिः । क्वचित्तु विलासिनीनां विलास-विलसितं सस्मित-कुटिल-कटाक्ष-पक्ष-निक्षेपणं विभातितराम् । अहो ! प्रावृषि प्रवासिनामपि बियोग-रोग-दूना विलासिन्यो न विजहति मार्दवं नाम । तथाहि—

'विलोचनेन्दविर-वारि-विन्दुभि–
निषिक्त-बिम्बाधर-चारु-पल्लवाः' । ( २, १२ )

क्वचन कटितटावलम्बितः केशजालाः कुसुम-सज्जिताः सहाराः पयोधराः, मधुमद-मण्डितानि मुख-नलिनानि रतिं जनेषु जनयन्ति । क्वचन च कालागुरू-चन्दन-चर्चिताः, कदम्ब-केसर-केतकी-कुन्द-ककुभ-कुमुद-कुसुममाला-शालिन्यो लसन्ति नार्यः । क्वचिच्च जलदकालः कान्त इव कामिनीनां केश-पाशे मालती-परिचुम्बितां बकुल-कुल-मालां' रचयति, विरचयति च कर्णयोर्विकच-कदम्ब-रचितं कर्णपूरम् । अथ सद्यः एव लोचन-गोचरतामुपैति सहृदयानाम्--

'काशांशुका विकच–पद्म–मनोज्ञ–वक्त्रा
सोन्माद–हंस–नवनूपुर–नाद–रम्या ।
आपक्व–शालि–रुचिरा तनु–गात्र–यष्टिः
प्राप्ता शरन्नववधूरिव रूप–रम्या' ॥ (३, १)

हेमन्ते न केवलं रति-समारम्भे, रतावसानेऽपि ललनासु मार्दवं नरीनर्ति सकौतुकम् :--

'काचिद् विभूषयति दर्पण–सक्त–हस्ता,
बालातपेषु वनिता वदनारविन्दम् ।
दन्तच्छदं प्रियतमेन निपीत–सारं,
दन्ताग्रभिन्नमवकृष्य निरीक्षते च ।।' (४.१४)

'अन्या प्रियेण परिभुक्तमवेक्ष्य गात्रं
हर्षान्विता विरचिताधर–चारु–शोभा ।
कूर्पासकं परिदधाति नख–क्षतांगी,
व्यालम्बि–नील–ललितालक–कुंचिताक्षी ॥ (४-१६)

शिशिरतौं च दुस्सह-शैत्य-प्रभाव-कम्पमानाधर-पल्लवानां सुन्दरीणां पुनरपि निपीयतां मार्दव-मद्यम्—

'अगुरु-कुसुम-धूमामोदितं केश-पाशं,
गलित-कुसुम-मालं तन्वती कुञ्चिताग्रम् ।
त्यजति गुरु-नितम्बा भिन्न-मध्यावसाना
उषसि शयनमन्या कामिनी चारु-शोभा ॥' (५-१२)

अथ च कामिनीजन-सर्वस्वभूते मधुमासे तु किमु सूचनीयं ललनानां मार्दवविषयमधिकृत्य, यत्र मधु-सखो मदन एव प्रमदासु निवेशयति लालित्यम् :—

'अंगानि निद्रालस-विभ्रमाणि, वाक्यानि किंचिन्मद-लालसानि ।
भ्रूक्षेप-जिह्मानि च वीक्षितानि, चकार कामः प्रमदाजनानाम् ॥'
(६-११)

इत्थं च ऋतु-संहारे कवि-गुरूर्ललनासु न मार्दवादन्यद् द्रष्टुमीहते । साम्प्रतं समास्वाद्यतां मेघदूताख्ये खण्डकाव्ये रस-निर्भर-भर-विजृम्भितो वनिता-म्रदिमा परिगत-महिमा ।

## २ मेघदूते

न केवलं ललनानां शारीरमेव (बाह्यमेव) मार्दवम्, अपि तु मानसमपि कुसुम-कोमलत्वं निदर्शयन्नाह कवि-शेखरः । तथाहि

"आशाबन्धः कुसुम-सदृशं प्रायशो ह्यंगनानां,
सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥' (पू०-१०)

कवि-परिष्कृतायाम् उज्जयिन्यामपि पौरांगनानां विद्युदाम-स्फुरित-चकितेषु लोलापांगेषु लालित्यं मार्दवानुगतं प्रसिद्धमेव । अतएव मृदुलांगनानां सुरत-ग्लानेरपनोदनाय अंगानुकूलं शिप्रा-वातं प्रेरयति कवीन्द्रः । वनिता-पाद-रागांकितेषु उज्जयिनी-हर्म्येषु मेघं सोत्कण्ठीकुर्वताऽपि कविना कृतमेव मार्दव-रक्षणम् । विलास-विकम्पितैः पादन्यासैः क्वणित-मेखलानां चामरान्दोलिनीनां वेश्यानामपि क्लान्त-

हस्तीकरणं नूनं कवि–कौतुकमेव। एवमेव कान्त–सदनं गच्छन्तीनां विलासिनीनां कृते सौदामिनी–लेखया भू-वर्त्म दर्शय, न तु वर्षण–गर्जन–तर्जनैस्ता भाययेरिति मेघं प्रति यक्षस्य सन्देश–वचनेऽपि मार्दवानुमोदनमेव निश्चीयते—

"गच्छन्तीनां रमण-वसतिं योषितां यत्र नक्तं
रुद्धालोके नरपति-पथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनन-निकष-स्निग्धया दर्शयोर्वी
तोयोत्सर्ग-स्तनित-मुखरो मा स्म भूर्विक्लवास्ताः॥" पू० ३७

खण्डितनायिकोपमानां कमलिनीनामपि प्रालेयरूपाश्रुप्रोञ्छनं प्राभातिकदिनकर-कर-निकरैः प्रसाधितं तेन।" नार्यो हि प्रकृति-मृदुला भवन्ति, अतश्च तासां कदापि उपेक्षा, प्रार्थना-निरसनम्, अपमानादिकं च नो विधेयम्, इतीमं भावमाकलय्य चेतसि, गम्भीरामधिकृत्य यक्षः सन्दिशति यत् 'हे मेघा न त्वया गम्भीरायाः कुमुद-विषदानि चपल-शफरोद्वर्तन-प्रेक्षणानि उपेक्षणीयानि, न वा जल-रूपेण नील-वसनेन विहीनस्तदीय-तट-नितम्बो यथेच्छं परित्याज्यः। तथापि अग्रमार्ग-गमनाय यथा कथंचन गम्भीरां प्रति मानसं सरस-सहानुभूतिप्रणयांजलिमुपनीय पुरः पद-न्यासो विधेयः।' इत्थं निश्चेतन-प्रकृतिमपि ललनोचित-लालित्य-निवेशनेन सचेतयन् विजृम्भते भाव-राशिरनेकधा।

मेघदूतस्योत्तर-भागे तु विरह-विशीर्णां यक्षांगनां चित्रयता तेन वियोगवेलोचित-नारीजन-हृदयसौकुमार्य-सागर एव समुद्वेलितः अलकापुर्यां देवांगनानां देव-कन्यानां च निसर्गजं मौग्ध्यं सौकुमार्यं च मन्दाकिनी-कूल-गतासु कनक-सिकतासु 'गुप्तमणि'-संज्ञक क्रीडावसरे, रात्रौ च नीवी-बन्धन-शैथिल्य-पतित-क्षौम-वसनाभिर्लग्ना-मूढाभिर्वनिताभी रत्न-प्रदीपं प्रति विफलं प्रेरिताभिश्चूर्ण-मुष्टिभिः प्रकामं बुद्धि-गोचरी भवति।"

अधोनिर्दिष्टे पद्ये तु तैस्तैर्निर्दिष्ट-मण्डनैर्मण्डितानां यक्ष-सीमन्तिनीनां निश्छला एवच्छा छविर्मूर्तायते —

"हस्ते लीला-कमलमलकं बालकुन्दानुविद्धं
नीता लीला-प्रसव-रजसा पाण्डुतामानने श्रीः" । इत्यादौ (उ० २)

इत्थं मेघदूते न कुत्रापि नारीणां शारीरं मानसं वा कार्कश्यं दृक्-पथमारोहतितराम् । सर्वत्रापि चेतनाचेतने चराचरात्मके नारी-जगति माधुर्य-धुर्यं मार्दवमेव ध्रुवमालिलेख स वनिताजन-सौकुमार्य-रक्षणैक-पक्षाग्रह-ग्रहण-ग्रहिलः कवीन्दुः ।

## ३. कुमारसंभवे

नगेन्द्र-नन्दिनीं गौरीं बाल्ये मृदुलोपकरणां क्रीडाव्यापृतां निभालयन्तु सुधियः—

"मन्दाकिनी-सैकत-वेदिकाभिः सकन्दुकैः कृत्रिम-पुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडा-रसं निर्विशतीव बाल्ये' ॥ (१-२९)

एवमेव सर्वत्रापि पार्वती-सर्वांग-वर्णन-प्रसंगे नारी-सौकुमार्य-राशिरेव प्रवहतितराम् । दृश्यताम्, गौरी बाहुद्वयं शिरीष-कुसुम-जित्वरम् :—

शिरीष-पुष्पाधिक-सौकुमार्यौ बाहू तदीयाविति मे वितर्कः' ।
(१-४१)

तृतीय-सर्गे तु मानवेतर-प्राणिवर्गीय-स्त्रीजातिष्वपि मधुकरी-मृगी-हस्तिनी-चक्रवाकी-प्रभृतिष्वपि सौकुमार्यं परिलक्ष्यते । तपो-वेषधारिणी अपि मेनका-नन्दवर्धिनी उमा मृदुतां न विजहौ। तथा हि,

'यथा प्रसिद्धैर्मधुरं शिरोरूहैर्जटाभिरप्येवमभूत् तदाननम् ।
न षट्पद-श्रेणिभिरेव पंकजं, सशैवलासंगमपि प्रकाशते ।' (५-९)

अहो ! दृश्यतां पार्वत्या इतीष्यतिशायिता सुकुमारता, यस्याः सुकोमलं शरीरं तल्प-पतितः केश-कुसुमैरपि विदूयते स्म । तथा हि,

'महार्घ-शय्या-परिवर्तन-च्युतैः
स्वकेश-पुष्पैरपि या स्म दूयते ।' (५-१२)

अलमनल्प-जल्पनोपकल्पनैः। सर्वमपि काव्यं मार्दव-रसायन-परि पोषितमिव प्रतिभासतेतराम् ।

## ४ रघुवंशे

स्थालीपुलाक-न्यायेन रघुवंशाख्य-महाकाव्येपि कालिदास-कर-किसलयांकितां नारीजन-सुकुमारतां विभावयन्तु सूरय :—

'तासां मुखैरासव-गन्ध-गर्भैर्व्याप्तान्तराः सान्द्र-कुतूहलानाम् ।
विलोल-नेत्र-भ्रमरैर्गवाक्षाः सहस्र-पत्राभरणा इवासन् ॥' (७-११)

इत्थम् अजेन्दुमती-परिवीक्षण-सक्षणाक्षीणां सुन्दरीणां वर्णन-चणेषु पद्य-पुटकेषु सौकुमार्य-करम्बितो मौग्ध्य-रसो निर्गलति । अहो ! एकेनैव मृदुलतम-दिव्य-कुसुममाल्येन कोमलांग्या इन्दुमत्या निधनावस्थामा-कथयन् कवि-कुलकोकिलो नूनं नारीषु कामपि सीमातीतां मृदुतां एष समीहते नु । तथा हि

'क्षणमात्र-सखीं सुजातयोः, स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तम-प्रिया हृत-चन्द्रा तमसेव कौमुदी ॥' (८-३७)

हन्त ! अज विलाप-प्रलपितेषु पुनरपि इन्दुमती-मार्दवं रसिकजन-नयन-पथारोहणाय कल्पते । तथा हि,

'नव-पल्लव-संस्तरेपि ते मृदु दूयेत यदंगमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु ! चिताधिरोहणम् ॥' (८-५७)

इन्दुमती न केवलं शारीर-कान्त्यैव मृद्वी आसीत्, प्रत्युत सुकोमल-वचना पेलव-नयन-कटाक्ष-पात-रचना मृदु-मन्थर-गमना मोहक-विलास-बन्धुराप्यासीत् :—

'कलमन्यभृतासु भाषितं, कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं, पवनाधूत-लतासु विभ्रमाः ॥' (८-५९)

इत्थमनेनेदमनुमीयते यत् कवि-कुल-गुरुः विधि-सचेतन-पाणि-पल्लव-प्रसाधितासु तासु तासु वनितासु न केवलं कालेवरं सौन्दर्य-गुम्फितं मार्दवमेवापेक्षते; प्रत्युत आहारे, व्यवहारे, श्रुति-स्मृति-सदाचार-शोधित-मधुर-वचन-कलापे, खिन्नजनोद्वेगापनोदन-निपुण-नयन-विलासे, परि-लज्जित-मातंग-गमने, वार्तालापे सर्वत्रापि शिष्ट-कुलोचितं मानवता-निकेतनीभूतं किंचिदलौकिकमपि लौकिकं, विलोलमप्यलोलं मार्दवं समुल्लालयति । मन्ये, तस्यापि मनः शिक्षयति स्म लोकान् यत् :—

'दृष्टि-पूतं न्यसेत् पादं, मनः पूतं समाचरेत्' इति ।

## ५. मालविकाग्निमित्रे

अत्र प्रथमं मालविका-गतं माधुर्य-रसं पिबन्तु —

'दीर्घाक्षं शरदिन्दु-कान्ति वदनं, बाहू नतावंसयोः' इत्यादि। (२-३)

अग्रे तु वासन्तिक-कुन्दलतया उपमीयमाना सैषा मालविका नयनतटेषु मृदुता-ततिमातनोतीव। तथा हि

'शर-काण्ड-पाण्डु-गण्डस्थलेयमाभाति परिमिताभरणा।
माधव-परिणत-पत्रा कतिपय-कुसुमेव कुन्दलता॥ (३-८)

पुनरपि प्रत्यय-पल्लव-पेलव-चरण-तलां तां पश्यामः—

'नव-किसलय-रागेणाग्रपादेन बाला
स्फुरित-नख-रुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमित-शिरसं वा कान्तमार्द्रापराधम्॥' (३-१२)

बकुलावलिकया तु मालविकां प्रति प्रस्फुटं व्याहृतमेव 'सखि, अरुण-शतपत्रमिव शोभते ते चरणम्' (३) इति। तृतीयाङ्के राजा पुनरपि मालविका-माधुर्यमुपस्थापयति—

'किसलय-मृदोर्विलासिनि! कठिने निहितस्य पादपस्कन्धे।
चरणस्य न ते बाधा सम्प्रति वामोरु! वामस्य॥ (३-१८)

एवमेव पदेपदेऽस्मिन् नाट्ये नार्यो मृदुलायन्ते निर्विचिकित्सम्।

## ६. विक्रमोर्वशीये

अस्मिन्नपि नाटके सहृदय-हृदय-चक्रवर्तिना कविकुल-गुरुणा नारी-सौकुमार्यं पल्लवितमेव। वीक्ष्यताम्, मूर्च्छितापि उर्वशी कीदृशी परिभाति पुरूरवसः कृते—

'मुंचति न तावदस्याः कम्पं कुसुम-सम-बन्धनं हृदयम्।
पश्य हरिचन्दनेन स्तन-मध्योच्छ्वासिना कथितम्॥ (१-६)

अहो ! उर्वश्यां यादृङ् माधुर्यं मार्दवं च परिलक्ष्यते, तादृङ् न कुसुमितासु सौरभावृतासु शाखा-नतासु लतासु कथमपि किंचनापि :—

मम कुसुमितास्वपि सखे ! नोपवन-लतासु नम्र-विटपासु ।
चक्षुर्बध्नाति धृतं तद्रूपालोकन-दुर्ललितम् ॥ ( २-८ )

राजा स्वकीयायां पाणि-गृहीत्याम् औशीनरी-देव्यामपि मृणाल-गुण-माधुरीमनुबध्नाति:—

अनेन कल्याणि । मृणाल-कोमलं व्रतेन गात्रं ग्लपयस्यकारणम् ।
( ३-१३ )

किं बहुना, सम्पूर्णेपि नाटकेत्र मृदुलांगना—सौकुमार्यामोदः प्रसृमरः ।

## ७. अभिज्ञान-शाकुन्तले

शकुन्तलाया अनितर-साधारणं मार्दवं पदे पदे दुष्यन्त-मुखेन विकीर्यमाणमासाद्यतेत्र नाटक-मणौ । प्रथम-दर्शन एव दुष्यन्त-नयनासेचनकं शकुन्तला-लावण्यं नूनमेव मृदुता-तरंग-रंग-करम्बितं स्वरूपं सम्प्रस्तावयति । तथा हि,

'अधरः किसलय-रागः कोमल-विटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमंगेषु सन्नद्धम् ॥ ( १-२२ )

पुनरपि विदूषकं प्रति शकुन्तला-सौन्दर्य-पीयूष-धारामापातयन् दुष्यन्तः कांचनापि सहृदय-हृदय-समर्चनीयामनिर्वचनीयां मृदुतां समुश्चिनोति :—

'अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै—
अनाविद्धं रत्नं, मधु नवमनास्वादित-रसम् ' इत्यादि । ( २-११ )

कोमलांगीषु नारीषु कोमलान्येव मनोरमाणि भवन्त्याहार्य-वस्तून्यपि:-
'ईषदीषच्चुम्बितानि भ्रमरैः सुकुमार-केसर-शिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीष-कुसुमानि ॥' ( १-४ )

इयं च ललनाजन-विलासिता सहज-मृदुलता-लता सर्वैरपि भव्यावदात-हृदयः करुणारुण-भाव - भावितान्तःकरणं सन्ततमेव सेवनीया, नावहेलनीया, भूषणीया, न दूषणीया कदाचनापि। अतएव सामन्त-मौलि-मुकुट-मणि-विगलित-मृदुल-मंदारमाल्य-निपतत्-पुष्प-पराग-राग-रंजित-पादतलोपि आसमुद्र-क्षितीशो दुष्यन्तः शकुन्तला-चरणाब्ज-सेवनमेव आनन्दानन्द-सन्दोहदमामनुते :—

अंके निधाय चरणावुत पद्म-ताम्रो,

संवाहयामि करभोरु ! यथासुखं ते'। इत्यादि ( ३-२५ )



# श्रुतिस्मृत्यनेकान्तवादः

डॉ० हर्षनारायणः

हिन्दुधर्मः श्रौतो धर्मः, श्रुतिप्रमाणको धर्मः। 'श्रुति' शब्दः 'प्रमाण'-शब्दश्च व्याख्यासापेक्षौ। श्रुतिप्रमाणकत्वं तु सामान्यं धर्मलक्षणम्। अन्येऽपि धर्मा इस्लामादयस् तत्तच्छ्रुत्यनुसारिणः। तथा हि–यहूदीयानां श्रुतिरेका, 'ओल्ड-टेस्टामेन्ट' इति ख्याता, ख्रीष्टीयानां श्रुतिरेका, 'बाइबिल' इति ख्याता; इस्लामस्यापि श्रुतिरेका, 'क़ुर्आन' इति ख्याता। ते सर्वे श्रुत्येकान्तवादिनः। हिन्दवस् तु श्रुत्यनेकान्तवादिनः। हिन्दूनां श्रुतिरनेकसङ्ख्याका। हिन्दुधर्मो 'बह्वाश्रयो बहुमुखो धर्मः' (महाभारतम्, शान्तिपर्व २८०·२६)। तथा—

'अनेकान्तं बहुद्वारं धर्ममाहुर् मनीषिणः॥'

(तत्रैव, अनुशासन-पर्व, २२.२८)

'बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः॥'
'तस्मान् न वाच्यो ह्येकेन बहुज्ञेनापि संशये॥'

(बौधायन-धर्मसूत्राणि १.१.१३; बौधायन-स्मृतिः १.१३)

'शाखानां विप्रकीर्णत्वात्, पुरुषाणां प्रमादतः,
'नानाप्रकरणस्थत्वात् सूक्ष्मा दुरनुगा गतिः॥'

(तट्टीकायामुदाहृतं वचनम्)

सत्यं यच् चत्वारो वेदा हिन्दूनां श्रुतित्वेन प्रसिद्धाः, किं तु 'वेद'-शब्दोऽपि विशेषव्याख्यासापेक्ष इति सद्य एव स्फुटीभविष्यति।

श्रुतीनामनैक्यं महाभारतादौ सुस्फुटमेवोररीकृतम्। तद् यथा—

'तर्कोऽप्रतिष्ठः, श्रुतयो विभिन्ना, नैको ऋषिर् यस्य मतं प्रमाणम्।
'धर्मस्य तत्त्वं निहितं गुहायां, महाजनो येन गतः स पन्थाः॥'

(वनपर्व ३१३.११७)

तैत्तिरीयब्राह्मणानुसारेण (३.१०.११.) 'अनन्ता वै वेदाः।' महाभारतस्य कुम्भकोणसंस्करणानुसारेण यत्किञ्चिज् ज्ञानविज्ञानं भुवि

प्रवृत्तमस्ति तद् 'वेद एव तु सर्वशः' । अत्रावैदिकानामागमोऽपि वेदाख्यां भजते । तद् यथा—

भूयः स भगवान् ध्यात्वा चिरं शूलधरः प्रभुः ।
असृजत् सर्वशास्त्राणि महादेवो महेश्वरः ॥
दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः ।
विद्याश् चतस्रः कूटस्थास् तासां भेदविकल्पनाः ॥
अङ्गानि, वेदाश्चत्वारो, मीमांसा, न्यायविस्तरः ।
'पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो, गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥
दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ।
एतासामेव विद्यानां व्यासमाह महेश्वरः ॥
शतानि त्रीणि शास्त्राणां महातन्त्राणि सप्ततिः ।
व्यास एव तु विद्यानां महादेवेन कीर्तितः ॥
तन्त्रं पाशुपतं नाम, पाञ्चरात्रं तु विश्रुतम् ।
योगशास्त्रं च साङ्ख्यं च तन्त्रं लोकायतं तथा ॥
तन्त्रं ब्रह्मतुला नाम, तर्कविद्या दिवौकसाम् ।
सुखदुःखार्थजिज्ञासा, कारणं चेति विश्रुतम् ॥
तर्कविद्यास् तथा चाष्टौ, स चोक्तो न्यायविस्तरः ।
दश चाष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः ॥
पुराणाश्च प्रतणीतास्तावदेवेह संहिताः ।
धर्मशास्त्राणि , तद्वच्चैकार्थानि च नान्यथा '।
एकार्थानि पुराणानि, वेदाश्चैकार्थसंहिताः ।
नानार्थानि च सर्वाणि ततः शास्त्राणि शङ्करः ॥
प्रोवाच भगवान् देवः कलाज्ञानानि यानि च ।
चतुःषष्ठिप्रमाणानि आयुर्वेदं च सोत्तरम् ॥
अष्टादशविकल्पां तां दण्डनीतिं च शाश्वतीम् ।
गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ॥
इत्येताः शङ्करप्रोक्ता विद्याः शब्दार्थसंहिताः ।
पुनर् भेदसहस्रं तु तासामेव तु विस्तरः ॥

ऋषिभिर् देवगन्धर्वैः सविकल्पः सविस्तरः।
शश्वदभ्यस्यते लोके वेद एव तु सर्वशः।
( अध्यायः १२२; दाक्षिणात्य सं., म. ११३ )

हारीत-मते श्रुतिर्द्विविधा—'वैदिकी तान्त्रिकी च' ( मन्वर्थ-मुक्तावली २·१ )। देवीभागवतमते ११.१२.६–१२ ) तथैव। पद्मपुराणे ( ४.००. १, ३ ) भागवते ( ११.२७.७ ) च सा त्रिविधा—वैदिकी, तान्त्रिकी, मिश्रा च। बृहद्धर्मपुराणानुसारेण ( मध्यखण्डः ५.१३८ ) तन्त्रं वेदात् प्रबलतरः। देवीभागवतमते ( ७.३६.२८–३२ ) वराहपुराणमते ( ६६.११ ) च वेदाधिकारहीन एव तन्त्रेऽधिकारवान् भवेत्।

ईश्वरसंहितानुसारेण कश्चिदेकायनवेदः सर्वेषामपि वेदानां मूलभूतमासीत्। प्रचलिताश्चत्वारो वेदा एकायनवेदापेक्षया विकारवेदाख्यां भजन्ते। तद् यथा—

शृणुध्वं मुनयः सर्वे वेदमेकायनाभिधम्। ( ईश्वर-संहिता १.१८ )

मूलभूतस्तु महतो वेदवृक्षस्य यो महान्। ( १.२० )

एष प्रकृतिधर्माख्यो वासुदेवैकगोचरः। ( १.२२ )

'प्रवर्त्यते कृतयुगे, ततस्त्रेतायुगादिषु
'विकारवेदास्सर्वत्र देवतान्तरगोचरः।
'महतो वेदवृक्षस्य मूलभूतो महानयम्,
स्कन्धभूता ऋगाद्यास्ते शाखाभूताश्च योगिनः ! ॥ (१.२३–२४)

जयन्तस्तु 'द्विविधो वेदः—श्रूयमाणोऽनुमीयमानश्च। श्रूयमाणश्च श्रुतिरित्युच्यते, अनुमीयमानश्च स्मृतिरिति। द्वावपि चैतावनादी।' ( न्यायमञ्जरी, प्रमाण-प्रकरणम्, पृ. २४० ) पुनरपि—'आप्तप्रत्यक्षमूलत्वेन वेदानामिव धर्मशास्त्राणां हि पञ्चमं वेदमाहुः।' ( तत्रैव, पृ. २४१ ) 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति छान्दोग्योपनिषद्वचनम्। ( ७.१.४ ) शास्त्रेषु इतस्ततः पुराणवेदः, इतिहासवेदः' (आश्वलायन-श्रौतसूत्रम् १०.७; गोपथ-ब्राह्मणम् १.१.१०; शतपथ-ब्राह्मणम् १३.४.३.६–१४· 'सर्पवेदः, पिशाचवेदः,' 'असुरवेदः' ( गोपथ ब्राह्मणम् १.११० ) अपि वेदत्वेन गृह्यन्ते। तद् यथा—'स दिशोऽन्वै-

क्षत-प्राचीं, दक्षिणामुदीचीं, ध्रुवामूर्ध्वामिति। तास् तत्रैवाश्राम्यद्-भ्यतपत् समतपत्। ताभ्यः श्रान्ताभ्यः सन्तप्ताभ्यः पञ्चवेदान् निरमिमत—सर्पवेदं, पिशाचवेदमसुरवेदमितिहासवेदं, पुराणवेदमिति। स खलु प्राच्या एव दिशः सर्पवेदं निरमिमत, दक्षिणस्याः पिशाचवेदं, प्रतीच्या असुरवेदमुदीच्या इतिहासवेदं ध्रुवायाश्चोर्ध्वायाश्च पुराणवेदम्' इति। ( तत्रैव ) गोपथ एवान्यत्र ( १.२.२१;१.५.१० ) चतुर्थमथर्ववेदं शान्तमाथर्वणं घोरमाङ्गिरसं चेति रूपेण द्विधा कृत्वा वेदपञ्चकत्वमुररीकृतं दृश्यते। तद् यथा—'तां पञ्चस्वपश्यद्—ऋचि, यजुषि, साम्नि, शान्तेऽथघोरे…।' ( १.२.२१ ); 'या वेदे व्यष्टिरासीत् तां पञ्चस्वपश्यन्नृचि, यजुषि, साम्नि, शान्तेऽथ घोरे…।' ( १.५.१० ) महाभारतं पञ्चमं वेदं ( महाभारतम्, आदिपर्व ६४. १३०–१३१ ) कार्ष्णं वेदं ( १.२६८ ) च मन्यन्ते अहिर्बुध्न्यसंहितायाम् ( १२. १४ ) इतिहासपुराणं उपवेदत्वेन गृहीतम् तद् यथा—

इतिहासपुराणाख्य उपवेदः प्रकीर्तितः।'

अपि च सायणः—'अस्य [ अथर्व ] वेदस्य सर्पवेदादय = पञ्चोपवेदा अङ्गत्वेन समनन्तरं ब्रह्मणा सृष्टाः।' ( अथर्ववेदभाष्यभूमिका, पृ. २२ ) शौनकीये चरणव्यूहे आयुर्वेदादय उपवेदत्वेन मताः। तद् यथा—'तत्र वेदानामुपवेदाश् चत्वारो भवन्ति—ऋग्वेदस्यायुर्वेद उपवेदो, यजुर्वेदस्य धनुर्वेद उपवेदः सामवेदस्य गान्धर्ववेदो, ऽथर्ववेदस्यार्थशास्त्रं च इत्याह भगवान् व्यासः स्कन्दो वा।' ( चतुर्थः अथर्वखण्डः. पृ. ४७ )

सामान्यविशेष भेदेन 'वेद–पदस्य द्वावर्थौ प्रत्येतव्यौ। तस्य सामान्या 'अनन्ता वै वेदाः,' वेद एव तु सर्वशः, इत्यादिनोदाहृतं प्राक्। विशिष्टार्थस् त्वस्य महाविवादपरः सम्प्रदायोऽस्ति।

'आद्यो वेदश् चतुष्पादः शतसाहस्रसंमितः।'

( विष्णुपुराणम् ३.४१; वायुपुराणम् ६०.६; अग्निपुराणम् १५०.२३ ) प्रायः पञ्चमांश एवास्योपलभ्यतेऽधुना। आदिमो वेदः प्रणव आसीदिति भागवतवचनम्—

'एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ।

'देवो नारायणो नान्यः, एकोऽग्निर्, वर्ण एव च ।' (भा. ६.१४.४८)
वैदिकवाङ्मये 'वेद' पदमेकवचनान्तं बहुवचनान्तं च दृश्यते। तद् यथा—

'यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये ।
'यो नमसा स्वध्वरः ।। (ऋ. ८.१६.५)
'यस्मिन् वेदा विहिता विश्वरूपास् तेनौदनेनाति तराणि मृत्युम्' ।
(अथर्व. ४.३५.६)

'ब्रह्म प्रजापतिर् धाता, लोका, वेदाः, सप्त ऋषयो, ऽग्नयः ।'
(अथर्व. १६.६.१२)

'वेदेभ्यः स्वाहा ।' (तैत्तिरीयसंहिता ७.५.११.२; काठकसंहिता ५.२)
मूलभूतो वेदः प्राजापत्यैः श्रुतिरप्यभिधीयते । स एव कालान्तरे चतुर्धा कृतः—ऋग्वेदो यजुर्वेद सामवेदो,ऽथर्ववेद इति कृत्वा । एवं चतुर्धा विभक्तो वेदः शाखाशतैर् विभागं गच्छतीति पुराणवचनम्—

'वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर् विभुः । ('वि. पु. ३.२.५७)
कालक्रमेण तच्छाखाभेदाः सहस्रशोऽभूवन्

'वेदद्रुमस्य मैत्रेय ! शाखाभेदास् सहस्रशः ।' (वि. पु. ३.३.४)
'एकविंशतिसाहस्रमृग्वेदं मां प्रचक्षते ।

'सहस्रशाखं यत् साम ये वै वेदविदो जनाः ।।' (म. भा.
शान्तिपर्व ३४२.६७)

प्रायस् त्रिंशदधिक-शताधिक-सहस्रस्यैव परिगणनं सम्प्रत्युपलभ्यते। तथा च पतञ्जलिः. '...चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः—एकशत मध्वर्युशाखाः, सहस्रवर्त्मा सामवेद, एकविंशतिधा बाह्वृच्यं, नवधाऽथर्वणो वेदः...।' (महाभाष्यम्, पस्पशाह्निकम्, पृ. ५४)
मुक्तिकोपनिषदि (१.१२.१३) शाखाभेदा एवं वर्गीकृताः—

ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसङ्ख्यकाः,
नवाधिकशतं शाखा यजुषो मारुतात्मज !

सहस्रसङ्ख्यया जाताः शाखाः साम्नः परन्तप !
अथर्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे !

महिर्बुधन्यसंहितायां ( १२.८-६ ) च—

एकविंशतिशाखावान् ऋग्वेदः परिगीयते ॥
शतं चैका च शाखाः स्युर् यजुषामेकवर्त्मनाम् ।
साम्नां शाखासहस्रं स्युः, पञ्चशाखा अथर्वणाम् ॥'

अन्यत्रापि शाखासङ्ख्यविषये बहवो विप्रतिपत्तयो दृश्यन्ते । तत्र पतञ्जलेरेव विवरणं प्रामाणिकतया ग्रहीतव्यम् । वल्लभाचार्य-युगे त्वेकादशैव शाखाः प्रचरन्ति स्म । तद् यथा—'...एकादश-शाखा साम्प्रतं प्रचरन्ति...।' ( तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणम्, ८२, पृ. २७७ )

प्रत्येका वेदशाखा चतुर्धा विभक्ता—

१. वेदसंहिता । उपवेदसंहिता

२. ब्राह्मणमनुब्राह्मणं च ( अष्टाध्यायी ४.२.६२ )

३. आरण्यकम्

४. उपनिषद् (महाभारतम् शान्तिपर्व ४७.२६; सेश्वरमीमांसा १.१.२, पृ. ३८ ), उपनिषच्चाद्य तावत् तासु त्रिंशदधिकैकादशशतशाखानां वेदः संहितासु प्रायोऽधोऽङ्किता द्वादशैवेदानीं समुपलभ्यन्ते—

| वेदः | शाखा-सङ्ख्या | | लब्ध-संहिता-सङ्ख्या | लब्ध-संहिता-नामानि |
|---|---|---|---|---|
| ऋग्वेदः | २१ | | १ | शाकला-तैत्तिरीया संहिता |
| यजुर्वेदः | १०० | ( शुक्लयजुर्वेद-संहिने ) | २ | वाजसनेयी-माध्यन्दिन संहिता |
| | | | | काण्व-संहिता |
| | | ( कृष्णयजुर्वेद-संहिताः ) | ४ | तैत्तिरीय-संहिता |
| | | | | मैत्रायणी संहिता |
| | | | | कठ-संहिता |
| | | | | कपिष्ठलकठ-संहिता |
| सामवेदः | १०० | | ३ | कौथुम-संहिता |
| | | | | राणायनीय-संहिता |
| | | | | जैमिनीय-संहिता |
| अथर्ववेदः | ६ | | २ | शौनक-संहिता |
| | | | | पैप्पलाद-संहिता |

वेदशाखा वेदपादपाद् वेदपादपानां वा भिन्ना प्रतिभान्ति। ताः प्राजापत्यश्रुतेर्विकल्पा इति स्मर्यते। तद्यथा—

'प्राजापत्या श्रुतिर्नित्या. तद्विकल्पास्त्विमे स्मृताः।'

( वायुपुराणम् १.६१.७४-७५ )

उपवेद-संहिताः त्वशेषेणैव लुप्ता इदानीम्।

विस्मृत्यैतत् सर्वं द्वादशास्वप्युपलब्धासु वेदसंहितासु शाकलतैत्तिरीय-संहितैव ऋग्वेदसंहितात्वेन, वाजसनेयीमाध्यन्दिनसंहितैव यजुर्वेद-संहितात्वेन, कौथुमसंहितैव सामवेदसंहितात्वेन, शौनकसंहितैव चाथर्व-वेदसंहितात्वेनेदानीं प्रसिद्धिं गताः।

ब्राह्मणानामनुब्राह्मणानां च सङ्ख्या संहितानां सङ्ख्यावदासीत्। इदानीं तु 'ब्राह्मण'-पदभाजां ग्रन्थानां सङ्ख्योपलब्धानां वेदसंहितानां सङ्ख्यावदेव प्राप्यते प्रायशः। आर्षेय-सामविधान-देवताध्याय-वंश-संहितोपनिषद्ब्राह्मणानि सत्यव्रतसामश्रमिगुरोर् मतेऽनुब्राह्मणानीदानीं नष्टान्येव।

आरण्यकान्यपि पञ्चैव षडेव वोपलब्धानीदानीम्। निषन्नामधेयं वाङ्मयं साकल्येन नष्टमित्याभाति।

उपनिषदाख्य-ग्रन्थानां सङ्ख्या सपाद-शतद्वयमेव सम्प्रति, किं तु तेषु प्रामाणिकाः प्राचीना उपनिषदः प्रायो विंशति-पञ्चविंशती एवेति वक्तुं शक्यते।

शाखाः काश्चिदतीव विचित्राः स्मर्यन्ते। शान्तरक्षितः सूचयति यत् पुरा ब्राह्मणैरधीयमाना काचिद् बुद्धप्रशंसिनी निमित्त-शाखाऽऽसीत्। तद् यथा—

किं तु वेदप्रमाणत्वं यदि युष्माभिरिष्यते।
तत् किं भगवतो मूढैः सर्वज्ञत्वं न गम्यते?
निमित्तनाम्नि सर्वज्ञो भगवान् मुनिसत्तमः।
शाखान्तरे हि विस्पष्टं पठ्यते ब्राह्मणैर्बुधैः॥
योऽसौ षड्दन्तमात्मानमवदातद्विपात्मकम्।
स्वप्ने प्रदर्श्य सञ्जातो बोधिसत्त्वो गुणोदधिः॥

विघुष्टशब्दः सर्वज्ञः कृपात्मा स भविष्यति ।
प्राप्तामृतपदः शुद्धः सर्वलोकपितेति च ॥'

( तत्त्वसंग्रहः ३५१०-३५१३ )

निमित्तशाखायाः शाखात्वं दर्शयन्नाह—

अथ शाखान्तरं वेदं वेदान्तर्गतमिष्यते ।
तदत्रन निमित्तं वो द्वेषं मुक्त्वाऽवधार्यते ॥
स्वरादयश्च ते धर्माः प्रसिद्धाः श्रुतिभाविनः ।
कर्तुमत्रापि शक्यास्ते नरेच्छामात्रसम्भवात् ॥'

( तत्रैव ३५१४–३५१५ )

रत्नकीर्तिनाऽप्युच्यते-'प्रत्युत निमित्तनाम्नि शाखान्तरे स्फुटतरमेव सर्वज्ञः प्रतिपादितः ।' ( रत्नकीर्तिः, 'सर्वज्ञसिद्धिः', रत्नकीर्तिनिबन्धावली, पृ० २५ ) ।

प्रपञ्चहृदयाख्य-ग्रन्थादवगम्यते यत् कदाचित् काचित् तुरुष्कशाखाऽपि भूतले प्रवृत्ता '···यजुर्वेदस्य···तुरुष्क···शाखा ।' ( प्रपञ्चहृदयम्, पृ० १६ ) के ते तुरुष्का येषां शाखाऽत्र विवक्षिता ? तत्र तर्कताण्डवे ( पृ. २५५ ) तुरुष्कागमस्य नामसङ्कीर्तनं प्राप्यते । गुणरत्नश्च तुरुष्काणां सृष्टिविषयं मतमुदाहरन् भणति--'अथवा लोकस्वरूपेऽप्यनेके वादिनोऽनेकधा विप्रवदन्ते । तद् यथा—केचिन् नारीश्वरजं जगन् निगदन्ति; परे, सोमाग्निसम्भवम्...; तुरुष्का, गोस्वामिनामैकदिव्यपुरुषप्रभवम् ।' ( तर्करहस्यदीपिका, पृ. २० ) बाशाममतानुसारेण गुणरत्नस्य 'तुरुष्क'-शब्देन ख्रीष्टीया आख्यायन्ते, न तु मुस्लिमाः; तथा चात्र 'दिव्यपुरुषः' ख्रीष्टो, न तु 'अल्लाहो' मुहम्मदो वा ।[1] अस्मन्मते तु बाशामस्य कल्पना क्लिष्टा कल्पना । अत्र 'गोस्वामिपदेन मुस्लिमानां 'रसूल' इत्युपाख्या धर्मप्रवर्तका धर्मसंस्कर्तारो वा

1. 'Guṇaratna seems to refer to the Christians....and the passage sugests Christ rather than Allah or Muhammad.' A. L. Basham, *History and Doctrines of the Ājīvikas* ( London: Luzac & Co., 1951 ) पृ. ८२, टि १

विवक्षिताः प्रतीयन्ते। 'दिव्यपुरुष'-पदेन च ज्योतिर्मयो मुहम्मद इति वक्तुं शक्यते। सूफीनये मुहम्मदः आदिज्योतिः ('नूर') परमेश्वरस्य, मुहम्मदायैव तज्ज्योतिःप्रभवा वा सर्वा सृष्टिरियम्। अतस् 'तुरुष्क'-शब्देन 'मुस्लिमोऽभिप्रेतो गुणरत्नकृता। इस्लामस्योदयात् प्रागपि कनिष्कादयस् 'तुरुष्काः' इति स्मर्यन्ते आर्यमञ्जुश्रीमूलकल्पादौ। अतः केषां तुरुष्काणां शाखा चर्चिता प्रपञ्चहृदये इति वक्तुं न शक्यतेऽद्य सम्यक्। अकबरयुगे प्रणीता संस्कृतार्थसमन्विताल्लोपनिषन्नाम्न्युपनिषदत्र बलाद् विचारपथे आयाति।

अपूर्वः कश्चिद् विचारः सहसा प्रादुर्भवति। श्रीमद्भागवतादि-पुराणेषु शङ्कर-भगवत्पादस्य दशावतारस्तोत्रेऽपि च भगवान् बुद्धो भगवद्वतारेषु परिगणितः, शङ्कराचार्येण तु स बहुशः स्तुतोऽपि दृश्यते। तद् यथा शङ्करस्य दशावतारस्तोत्रे नवमं पद्यम्--

'धराबद्धपद्मासनस्थाङ्घ्रियष्टिर्नियम्यानिलं न्यस्तनासाग्रदृष्टिः,
'य आस्ते कलौ योगिनां चक्रवर्ती स बुद्धः प्रबुद्धोऽस्तु मच्चित्तवर्ती॥'

बुद्धस्यैतादृशमाहात्म्यस्य मूल-प्रणष्टा निमित्त-शाखैवाभाति। अत्रेदमपि ध्येयं यत् स्कन्दपुराणान्तर्गतायां सूतसंहितायां (यज्ञवैभव-खण्डे अ० २०, श्लो० १६) बुद्धागमस्य वेदमूलत्वं स्पष्टमेवोररीकृतं प्राप्यते। तद् यथा--

'समूलेषु च धर्मेषु बुद्धागम-समन्वितः।
धर्मः श्रेष्ठ इति प्रोक्तो मया वेदार्थपारगाः!'

'बुद्ध-प्रोक्ता आगमा बुद्धागमाः' इति सायणाचार्यः तत्र। बुद्धो वैदिकलोकव्यवस्थायां वर्णव्यवस्थायां श्रद्धालुर्दृश्यते। खुद्दकनिकाय-दीघनिकाय-मज्झिमनिकायगतेषु बहुषु सुत्तेषु सङ्कलितेषु बुद्धवचनेषु वर्णव्यवस्थाया आर्षपरम्परानुसारि-समुज्ज्वलरूपस्य माहात्म्यं कण्ठतः स्वीकृतं गम्यते। बुद्धेनेतस्ततः प्रत्नर्षीणां प्रशंसाऽपि भूरिशः कृता। तद्देशनासु श्रमणानां ब्राह्मणानां च तुल्यमादरार्हत्वमपि ध्वन्यते। बोधिसत्त्वाः क्षत्रिय-ब्राह्मण-कुलयोरेवा जायन्त इति बुद्धवचनं ललितविस्तर (अ. ३)। इति निमित्तशाखा-प्रसङ्गात् सर्वमपि युज्यते, सर्वमपि

हृदयङ्गमो भवति । अनया दृष्टिभङ्ग्या विचारितो मूलबौद्धसमयोऽनवैदिक एवेत्यवधारितव्यः ।

श्रौत-स्मार्त-धर्मस्तु शाखानैकान्तवादी । तत्तत्कुलेन ततच्छाखैवाध्येतव्या, न ताः सर्वाः शाखाः सर्वैरध्येतव्याः । 'स्वाध्यायोऽध्येतव्यः' इति शतपथब्राह्मणवचनस्य ( ११. ३. ८. ३ ) व्याख्यानावसरेऽभियुक्ता व्यवस्थापयन्ति यत् स्वसम्प्रदायानुसारिणीं कामपि शाखामधीयीत । ( तन्त्रवार्तिकम् २. ४. ६, पृ. २२३ ) मनुपरिशिष्टे ( पृ. ४ ) इदमपि धृतं यत् परशाखोक्तं कर्म नैवानुष्ठेयम्—

'आत्मशाखां परित्यज्य परशाखासु वर्तते,<br>
'न जातु परशाखोक्तं बुधः कर्म समाचरेत् ॥<br>
अत एव सर्वा एव शखाः सर्वत्र न प्रचरन्ति ।<br>
भूयसी शाखा-राशिस्तु प्रनष्टैवेदानीम् ॥

न च सर्वे वेदाः सर्वैः समादृताः । चतुर्णामपि वेदानां माहात्म्यसाम्यं तु कैश्चिन् नैवाङ्गीक्रियते । तथा हि—क्वचित् क्वचित् सामवेदमाहात्म्यपराणि क्वचित् क्वचित् च तद्विगानपराण्यपि वचनान्युपलभ्यन्ते । तद् यथा—छान्दोग्योपनिषदनुसारेण 'ऋचः साम रसः' ( १. १. २ ), श्रीकृष्णवाक्यं च—'वेदानां सामवेदोऽस्मि' ( गीता १६.२२ ) इति । मनुः तु सामवेदस्याशुचित्वं दर्शयन्नाह—

सामध्वनावृग्यजुषी नाधीयीत कदाचन<br>
'वेदस्याधीत्य वाऽप्यन्तमारण्यकमधीत्य च ।<br>
'ऋग्वेदो देवदैवत्यो, यजुर्वेदस् तु मानुषः,<br>
'सामवेदः स्मृतः पित्र्यस्; तस्मात् तस्याशुचिर्ध्वनिः ॥

( मनुस्मृतिः ४. १२३-१२४ )

तथा च विष्णुपुराणम्—

'सर्गादौ ऋङ्मयो ब्रह्मा, स्थितौ विष्णुर् यजुर्मयः,<br>
'रुद्रः साममयोऽन्ताय; तस्मात् तस्याशुचिर्ध्वनिः ॥

( वि. पु. २. ११. १३. )

ऋग्वेदेऽप्यशुच्यंशा वर्तन्त एव। तस्मिन् वसिष्ठद्वेषिण्योऽभिशापरूपाश् चतस्र ऋचो ( ऋ. ३. ५३. २१–२४ ), याभिर्विश्वामित्रो वसिष्ठमशपत्। तत्र शौनकः—

'परश् चतस्रो यास् तत्र वसिष्ठद्वेषिणो विदुः।
'विश्वामित्रेण ताः प्रोक्ता अभिशापा इति स्मृताः॥
'द्वेषद्वेषास् तु ताः प्रोक्ता विद्याच्चैवाभिचारिकाः।
'वशिष्ठास् तु न शृण्वन्ति तदाचार्यकसंमतम्॥
'कीर्तनाच् छ्रवणाद्वाऽपि महान् दोषः प्रजायते।
'शतधा भिद्यते मूर्द्धा कीर्तितेन श्रुतेन वा॥

'तेषां बालाः प्रमीयन्ते, तस्मात् तास् तु न कीर्तयेत्।' ( बृहद्देवता ४-२३ ) हन्त! वेदमन्त्रोच्चारणाच्छ्रवणाद् वा पापं जीवनहानिश्च! नेयं लोकायतिवाचोयुक्तिः, इयं तु वैदिकानामेव घोषणा। निरुक्तवृत्तिकृद् दुर्गाचार्यः कापिष्ठलो वसिष्ठ आसीत्, अतः स काचिदुपर्युलिखितां ऋचं न निरब्रवीत् विलिखति सः—'यस्मिन् निगमे एष शब्दो (लोधम्) सा वसिष्ठद्वेषिणी ऋक्। अहं च कपिष्ठलो वासिष्ठः, अतः तां न निर्ब्रवीमि।' (निरुक्त वृत्तिः, ४-१४, खण्डः १ पृ.३२३ )

क्वचित् कदाचिच् च शास्त्रेषु वेदसंहितास्वपि च गाथानाराशंस्योरविगानमपि प्राप्यते। 'अनृतं हि गाथा, अनृतं नाराशंसी' इति काठकसंहिता ( स्थानकम् १४, अनुवाकः ५ )। केषांचित् मते प्रचलितानां वेदसंहितानां केचिद्वमानामेव गाथा-नाराशंसी-संज्ञे।

श्रौतस्मार्त-परम्परायां श्रुतिमूलकानि स्मृतयः पुराणानि चापि सात्त्व-राजस-तामस-भेदात् त्रिविधानीति गम्यते। तत्र सात्त्विकानि मोक्षादानि, राजसानि स्वर्गदानि, तामसानि च निरयदानीत्यपि स्मर्यते। तथा च पद्मपुराणम् ( उत्तरखण्डः, अध्यायः २६३, श्लोकाः ८६-९० )—

तथैव स्मृतयः प्रोक्ता ऋषिभिस् त्रिगुणान्विताः।
सात्त्विका, राजसाश् चैव तामसाः शुभदर्शने!॥
वासिष्ठं चैव, हारीतं, व्यासं पाराशरं तथा।
भारद्वाजं, काश्यपं च सात्त्विका मुक्तिदाः शुभाः॥

याज्ञवल्क्यं, तथाऽऽत्रेयं, तैत्तिरं, दाक्षमेव च।
कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः॥
गौतमं बार्हस्पत्यं च, संवर्तं च, यमं स्मृतम्।
साङ्ख्यं चौशनसं देवि! तामसा निरयप्रदा;॥
किमत्र बहुनोक्तेन? पुराणेषु स्मृतिष्वपि।
तामसा नरकायैव, वर्जयेत् तान् विचक्षणः॥

तत्रैव (२६३.८१-८५) पुराणान्यपि त्रिविधानीति दर्शितम्—

मात्स्यं, कौर्मं, तथा लैङ्गं, शैवं, स्कान्दं तथैव च।
'आग्नेयं च—षडेतानि तामसानि निबोध मे।
'वैष्णवं, नारदीयं च, तथा भागवतं शुभम्,
'गारुडं च, तथा पाद्मं, वाराहं शुभदर्शने!
'सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै।
'ब्रह्माण्डं, ब्रह्मवैवर्तं, मार्कण्डेयं तथैव च,
'भविष्यं, वामनं, ब्राह्मं राजसानि निबोध मे।
'सात्त्विकाः मोक्षदाः प्रोक्ता, राजसाः स्वर्गदाः शुभाः,
'तथैव तामसा देवि! निरयप्राप्ति हेतवः॥'

मत्स्यपुराणे (५३-६७-६८) तत्त्रिविधविभागानुसारी देवविभागोऽपि प्राप्यते। तद् यथा—

'सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेः,
'राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः,
'तद्वदग्नेश् च माहात्म्यं तामसेषु शिवस्य च,
'सङ्कीर्णेषु सरस्वत्याः पितृणां च निगद्यते।'

देवीभागवते (१. १. १४) तत्त्रिविधविभागानुसारी श्रौतानां दर्शनानामपि विभागः परिकीर्तितः—

'सात्त्विकं तत्र वेदान्तं, मीमांसा राजसं मतम्,
'तामसं न्यायशास्त्रं च हेतुवादाभियन्त्रितम्।'

विश्वेष्वपि विश्वधर्मेषु विश्वमपि शास्त्रं विश्वमपि लोकं पुण्यमार्गे प्रवर्तयितुं प्रवृत्तमिति स्थितिः। श्रौतस्मार्तधर्मावलम्बिनां त्वयं विशेषो

यत् तेषां मते कानिचित् शास्त्राणि लोकं पापमार्गे प्रवर्तयितुं प्रवृत्तानी-त्यपि वक्तुं शक्यते। तत्र कूर्मपुराणानुसारेण गौतमर्षेः शापाद् वेद-बाह्यत्वं गतानां रक्षणार्थाय विष्णुनेरितः शिवः शिवेरितश् च विष्णुर-वैदिकशास्त्राणि प्रणिनाय। तद् यथा—

'तस्माद्धि वेदबाह्यानां रक्षणार्थाय पापिनाम्
'विमोहनात्र शास्त्राणि करिष्यावो वृषध्वज !
'एवं सम्बोधितो रुद्रो माधवेन मुरारिणा
'चकार मोहशास्त्राणि केशवोऽपि शिवेरितः।
'कापालं, नाकुलं, वामं भैरव पूर्व-पश्चिमम्,
'पाञ्चरात्रं, पाशुपतं, तथाऽन्यानि सहस्रशः
'सृष्ट्वा तानाह निर्वेदाः कुर्वाणाः शास्त्रचोदितम्
'पतन्तो नरके घोरे बहून् कल्पान् पुनः पुनः।
'एवं तु मानुषे लोके क्षीणपापचयास् ततः
'ईश्वराराधनबलाद् गच्छध्वं सुकृतां गतिम्।'

(कू. पु., पू. भा., १६-११५-११६)

तुलनीयमत्र कू. पु., भा. १२.२५७-२५६; उ. भा. ३७-१४७-१४८; शिवपुराणम्, रुद्रसंहिता, युद्धखण्डः, ३.१७-१८. 'मायी शास्ता' विष्णुः षोडशलक्षश्लोकात्मकं मायामयं शास्त्रमसृजच् छ्रुतिस्मृतिविरुद्धं वर्णा-श्रमधर्मशून्यं, परलोकापतापकं, उन्मार्गप्रेरकं चेति लिङ्गपुराण-वचनम् (१.७१.७२-८०)—

'विचार्यैवं ततस् तेषां भगवान् पुरुषोत्तमः
'कर्तुं व्यवसितश् चाभूद् धर्मविघ्नं सुरारिणाम्।
'असृजच्च महातेजाः पुरुषं चात्मसम्भवम्
'मायी मायामयं तेषां धर्मविघ्नार्थमच्युतः।
'शास्त्रं च शास्ता सर्वेषामकरोत् कामरूपधृक्
'सर्वसम्मोहनं मायी दृष्टप्रत्ययसंयुतम्।
'एतत् स्वाङ्गभवायैव पुरुषायोपदिश्य तु
'मायी मायामयं शास्त्रं ग्रन्थषोडशलक्षणम्,
'श्रौतस्मार्त – विरुद्धं च, वर्णाश्रमविवर्जितम्,

'इहैव स्वर्गनरकं प्रत्ययं नान्यथा पुनः।
'तच्छास्त्रमुपदिश्यैव पुरुषायाच्युतः स्वयम्
'पुरत्रयविनाशाय प्राहैनं पुरुषं हरिः।
'गन्तुमर्हसि नाशाय भो! तूर्णं पुरवासिनाम्।
धर्मास् तथा प्रणश्यन्तु श्रौतस्मार्ता न संशयः।
'ततः प्रणम्य तं मायी मायाशास्त्रविशारदः
'प्रविश्य तत् पुरं तूर्णं मुनिर्मायां तदाऽकरोत्।
'मायया तस्य वै दैत्याः पुरत्रयनिवासिनः
'श्रौतं स्मार्तं च संत्यज्य तस्य शिष्यास् तदाऽभवन्।'

अहिर्बुध्न्यसंहितायामपि—

'हिंस्राणां मोहनार्थाय सङ्कल्पा एव वैष्णवाः
'शास्त्राभासाः प्रवर्तन्ते देवब्रह्मर्षिवक्त्रतः।'

इति शास्त्राभासानां विष्णुप्रवर्तित्वमुररीकृतम्। अन्यत्रापि बहूनि **'मोहशास्त्राणि'** नारायणादिदेवाधिदेव—प्रवर्तितानीति प्रकीर्तितम्। **तद् यथा—**

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति।
'त्वं च रुद्र! महाबाहो! मोहशास्त्राणि कारय।'

(वराहपुराणम्, अ.७०)

'ये वेदमार्गनिर्मुक्तास् तेषां मोहार्थमेव च
'नयसिद्धान्तसंज्ञाभिर्मया शास्त्रं तु दर्शितम्।'

(तत्रैव ७०.४१)

तथा च यतीन्द्रमतदीपिका-प्रकाशे उदाहृतं कस्यचिद् वचनम्—

'पाञ्चरात्रं, भागवतं, तन्त्रं वैखानसाभिधम्
'वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान्'

क्वचित् क्वचित् तु वेदेभ्योऽपि गरीयस्त्वं पुराणानां प्रपञ्चितं दृश्यते। तद् यथा—

'वेदार्थादधिकं मन्ये पुराणार्थं वरानने।
'वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः।'

(नारदीयपुराणम् २.२४.१७)

महाभारतेऽपि निगदितं यत्—

'पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्ना प्रकाशिता।'

प्रासङ्गिक्यत्र वाचोयुक्तिर् यन् निखिलो वेदग्रन्थराशिरनित्य-स्तदात्मभूतं तत्त्वज्ञानं ब्रह्मापरं नाम च नित्यं यथोक्तं महाभारते ( शान्तिपर्वणि, २०६.१६-१८ ):

ऋचो, यजूंषि, सामानि, शरीराणि व्यपाश्रिताः
'जिह्वाग्रेषु प्रवर्तन्ते यत्नसाध्या विनाशिनः।
' न चैवमिष्यते ब्रह्म, नादिमध्यं, न चान्तवत्।
'ऋचामादिस्, तथा साम्नां, यजुषामादिरुच्यते।
'अन्तश् चादिमता दृष्टो, न त्वादिर्ब्रह्मणः स्मृतः।'

महाभाष्यकृन्मते या वेदवर्णानुपूर्वी साऽनित्या नित्यस्तु वेदार्थ एव—'यद्यप्यर्थो नित्यो, या त्वसौ वर्णानुपूर्वी साऽनित्या।' ( महाभाष्यम् ४.३.११, पृ. ४६० ) पूर्वमीमांसा-समये वेदानां शब्दराशिरपि नित्यः—न केवलं वर्णः शब्दश् च, प्रत्युत शब्दवर्णानुपूर्व्यावपि नित्ये। किं तु—

'तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे,
छन्दांसि जज्ञिरे तस्माद् यजुस् तस्मादजायत।
( ऋ. १०. ९०. ९ )

इति वेदवाक्यादेव ऋचामनित्यत्वमेवसिध्यति। वस्तुतस् त्वृषीणां कृतिर् वेदग्रन्थराशिरिति वेद एवोद्घोषयति। वेदेषु 'तक्ष'-'जन्'-'कृ'-'सृज्'-प्रभृतिधातूनां स्तोमावतारविषये प्रयोगो वेदशब्दानामनित्यत्वं स्फुटमेव दर्शयति। उदाहरणतः, एकस्यामृचि ( ऋ. १.६१.४ ) भणितं यत् कवयः 'रथं न तष्टेव' स्तोमं कृण्वन्ति।

वेदमन्त्रार्थस्यापौरुषेयत्वं तु अधस्तनर्चा ध्वन्यते—

इयं वामस्य मन्मन इन्द्राग्नी ! पूर्व्यस्तुतिः
अभ्राद् वृष्टिरिवाजनि। ( ऋ. ४.४८.६ )

श्रुतिस् तु प्रतिमन्वन्तरमन्या चान्या च भवतीति शास्त्रेष्वितस् ततः स्फुटमेवेङ्गितं प्राप्यते। तथा च वायुपुराणम् ( पूर्वभागः, ५९.५६ )—

'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते।'

स्मृतयोऽपि प्रतियुगं भिन्नैवेत्यवधारितं स्मृतिष्वेव, क्वचित् स्फुटं क्वचिदस्फुटं च। तद् यथा—

कृते तु मानवा धर्मास्, त्रेतायां गौतमाः स्मृताः।
'द्वापरे शङ्खलिखिताः, कलौ पाराशराः स्मृताः'॥

(पराशरस्मृतिः १.२४.२५)

सर्वास्वपि श्रुतिस्मृतिषु कलिवर्ज्यांशा अपि मन्यन्ते धर्मशास्त्र-निबन्धकाराः। तथा च श्रुतिप्रतिपादितमश्वालम्भगवालम्भादिकं स्मृति-प्रतिपादितं संन्यासादिकं ते कलौ कण्ठत एव वर्जयन्ति।

स्थितमेतदतो यत् श्रुतिस्मृत्येकान्तवादः श्रुतिस्मृतिभ्यामननु-मोदितः। श्रुतिस्मृतिप्रतिपाद्यराद्धान्तस्तु श्रुतिस्मृत्यनेकान्तवाद एव।



# कालिदासवर्णित-शुक्रावतार-शचीतीर्थ-स्थितिनिर्धारणम्

*डॉ० कैलाशनाथद्विवेदी*

## अभिज्ञानशाकुन्तले

विश्वस्याशेषवाङ्मये समृद्धतमस्य संस्कृतसाहित्यस्य मूर्धन्यमहाकविना कालिदासेन स्वकाव्यग्रन्थरत्नेषु देवोपममहिममयस्य भारतभूमेः पावनाश्रमतीर्थादि सांस्कृतिकाङ्गानां चारुवर्णना वर्ण्यविषयेण सह यथास्थानं कृतेति सुविदितमेव सुधीसाहित्यिकानाम्। कविकुलगुरुः कालिदासः स्वकीयामरनाट्यकृतावभिज्ञानशाकुन्तले महाराजदुष्यन्तस्य समक्षमेव राजसभायां तापसवृद्धया गौतम्या शुक्रावतार-शचीतीर्थयोरुल्लेखः कारयामास, तदनुसारं कण्वाश्रमात् हस्तिनापुरमागच्छन्ती सौभाग्यकांक्षिणी शकुन्तला न केवलमनयोः पावनतीर्थयोर्दर्शनं लेभेऽपितु श्रद्धावनता सा सामीप्येन तीर्थसलिलमप्यनयोर्ववन्दे[1]। कर्मणानेन शकुन्तलाया अज्ञाता एव दुष्यन्तप्रदत्ताऽभिज्ञानरूपिणी नामाङ्कितमुद्रिका तीर्थसलिले परिभ्रष्टासीत्। अतएव दुर्भाग्यवशाद्दुष्यन्तस्य समक्षं समये सा हतभागा तमङ्गुलीयकं प्रस्तोतुकामाऽपि प्रस्तोतुमसमर्था बभूव।

कालान्तरे (नाटकस्य षष्ठाङ्के) शक्रावताराभ्यन्तरालवासिना मत्स्यजीविना धीवरेण रोहितमत्स्योदरे लब्धा सैव मुद्रिका राजपुरुषैः राज्ञः दुष्यन्तस्य हस्तंगताभवत्। नाटकस्यास्मिन्नङ्के धीवरेण[2] समं दुष्यन्तेनापि[3] तदङ्गुलीयकसन्दर्भे शक्रावतार-शचीतीर्थयोरुल्लेखः कृतः।

---

१. अभिज्ञानशाकुन्तले, पञ्चमाङ्के गौतमी-कथनम्—"नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम्।"

२. अभि० शाकु०, षष्ठाङ्के, पुरुष (धीवर)—कथनम्—"शक्रावताराभ्यन्तरालवासी धीवरः"।

३. अभि० शाकु० षष्ठाङ्के—राज्ञः कथनम्—"शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद् गंगास्रोतसि परिभ्रष्टम्।"

अनेनोल्लेखेन स्पष्टमेव ज्ञायते यत् पावनशक्रावतारक्षेत्रे शचीतीर्थस्यावस्थितिरासीत्। शचीतीर्थस्य स्वरूपं सरोवरादभिन्नमासीत्। राज्ञः दुष्यन्तस्योक्त्या प्रतीयते यदिदं शचीतीर्थसरः गंगास्रोतसोऽदूरमासीत्। तीर्थसरसः समीपवर्तिक्षेत्रं शक्रावतारसंज्ञया सुप्रसिद्धमभवत्। रोहितमत्स्योदराल्लब्धाङ्गुलीयको धीवरोऽस्मिन् क्षेत्र एव निवसति स्म[1]। सम्भाव्यते, यदयं शचीतीर्थसरसः सलिलराशिः पावनगंगास्रोतसि एव अवरुद्धे सति पृथक्जलाशयरूपे निर्गत आसीत्। अतएव नौकर्मान्तरेण अस्य स्थिरजलतले बहुलतया मत्स्यादीनां जलजन्तूनां जालोपजीविभिर्मत्स्यजीविभिः संग्रहणमत्यन्तं स्वाभाविकमेवास्ति।

## तीर्थयोरवस्थितिविषयकाणि विदुषामभिमतानि—

अनयोः पावनतीर्थयोरवस्थितिविषयकाणि विदुषामभिमतानि विप्रतिपत्तिपूर्णानि विद्यन्ते। अस्मिन् विषयेऽधोलिखितानामनुसन्धानकानामभिमतान्युल्लेख्यानि सन्ति।

(१) डॉ० भगवतशरणोपाध्याय[2]-महोदयाः न शक्रावतारक्षेत्रं शचीतीर्थञ्च हस्तिनापुरस्य समीपं गंगातटेऽवस्थिते मन्यन्ते, किन्तु तैर्निश्चितं स्थानं न निर्धारितमस्ति।

(२) पं० गुरुप्रसादशास्त्रि[3]-महाभागैः सर्वप्रथमं शक्रावतारस्य समीकरणं एटा-जनपदस्य 'सोरो'-स्थानस्य सूकरतालेन समं कृतम्, किन्त्विदं समीकरणं सन्देहपूर्णं मत्वा पुनस्तैर्होपुड़स्थानस्यान्तिकेऽपि तीर्थरूपेऽस्यावस्थितिर्निदिष्टास्ति।

(३) श्री श्रीनिधिसिद्धान्तालङ्काराणां[4] मतानुसारं शक्रावतारशचीतीर्थे वर्तमान—मुजफ्फरनगरात् चतुष्क्रोशान्तरेऽद्यापि 'शकरतार' इति नाम्ना तीर्थरूपे गंगातटे ऽवस्थिते स्तः।

---

१. अभि० शाकु० षष्ठाङ्के पुरुष "अहं खलु शक्रावतारवासी धीवरः (हग्गे क्खु शक्कवदालवाशी धीवले), पृ० ३६१.

२. कालिदास का भारत, (हिन्दी संस्करणम्), काशी, १९६३ पृ० १२३।

३. अभिज्ञानशाकुन्तलम्—सं० गुरुप्रसाद शास्त्री, चौखम्भा संस्करणम् भूमिका।

४. मालिनी के वनों में, (हिन्दी संस्करणम्), दिल्ली १९६०, पृ० १९१।

शक्रावतार-शचीतीर्थयोरवस्थितिविषयकेपूर्पर्युक्ताभिमतेषु गुरुप्रसाद-शास्त्रिणामभिमतं तथ्यविपरीततया सन्दिग्धतया चामाननीयमस्ति। न केवलमस्माकमपितु तेषामपि दृष्ट्या तदीयावधारणा भ्रान्तिपूर्णा एव प्रतीयते। उभेऽपि स्थाने शक्रावतार-शचीतीर्थाभ्यां सर्वथाऽसम्बन्धिते स्तः, यतश्च मालिनीतटवर्ति-कण्वाश्रमात् हस्तिनापुरगामिनः प्राकृतमार्गान्निकटं न भूत्वेमे स्थाने (सोरों) स्थानस्य सूकरतात्, हापुडश्च विपरीतदिशोः दूरस्थे वर्तेते। यद्यप्येतयोस्थलयोर्गङ्गातटाद्धिकान्तरयुक्तावस्थितिर्नास्ति, तथापि कण्वाश्रमात् हस्तिनापुरं प्रति मार्गस्य ऋजुतां दृष्टिपथमादायानयोः समीकरणं शक्रावतारशचीतर्थाभ्यां समुचितं नास्ति।

प्रासङ्गिक्या दृष्ट्यानया डॉ० भगवतशरणोपाध्यायमहोदयानामभिमतं विचारणीयमस्ति; यस्मिन् स्थलविशेषस्यानिर्दिष्ट्याऽनिश्चितिः श्रीनिधिसिद्धान्तालंकाराणामभिमतेन सर्वथा दूरीभवति तथाहि मुजफ्फरनगरात् पंचक्रोशान्तरे गंगानटीयं "शकरतार"-नाम्नस्तीर्थसरः शक्रावतार-शचीतर्थाभ्यां समीकर्तुमव्याघातकदृष्टिकोणेन समीचीनं प्रतिभाति।

## तीर्थयोः प्राचीनता माहात्म्यञ्च—

तीर्थयोरनयोः प्राचीनताभिज्ञानशाकुन्तले वर्त्तमानैः प्रसंगैः सिद्ध्यति। कालिदासकालिके भारतेऽनयोः प्रसिद्धि-रसामान्या महत्त्वञ्च सर्वविदितमासीत्। इदं प्रतीयते, यत् कवि-कुल-गुरोः कालिदासस्य पूर्ववर्तिसमाजे साहित्ये चानयोस्तीर्थयोर्मान्यतासीत्। वृत्रासुरवधस्य पौराणिक[1]-कथाया आधारेण कथयितुमिदं शक्यते यत् युद्धे दुर्दान्तदानवैः पराभूतः पुरन्दरोऽन्ते, वज्रेण वृत्रं निहत्य ब्रह्महत्यापातकेन श्रीहीनो भूत्वा स्वर्गं त्यक्त्वा गुप्ताज्ञातस्थाने न्यवसत्। इदं स्थानं न शचीन्द्राणी न च मंत्रिवर्ग एव जानाति स्म; किन्त्वन्वेषणे विलुप्तस्त्रिदिवस्पतिः

१. महाभारते, वनपर्वणि, १०१।१६ तस्मिन्हते दैत्यवरे भयार्त्तः, शक्रः प्रदुद्राव सरः प्रवेष्टुम्। श्रीमद्भागवत पुराणे, ६।१३।२२ इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम् भक्त्युच्छ्रयं भक्तजनानुवर्णनं, महेन्द्रमोक्षं विजयं मरुत्वतः॥

वज्रायुधःशक्रोऽत्रैव निर्जने गंगातटे लब्धः, अतएवात्रैव शक्रस्याविर्भावादिदं स्थलं शक्रावतारसंज्ञया सत्यमेवाभिधीयते। इन्द्राणी शची अस्मिन्स्थले एव स्वविलुप्तपतिं शक्रं प्राप्य स्वकीयं सौभाग्यसुखं लब्धवती, अतएव कालान्तरे एतयोः ( शक्रशच्योः ) नाम्नोः शक्रावतार-शचीतीर्थेऽपि संज्ञिते प्रसिद्धिंगते। वृत्रवधाद् ब्रह्महत्याकारीन्द्रः यद्यत्रैवाज्ञातवासञ्चकार, तदस्याः पौराणिकगाथाया आधारेणानयोस्तीर्थयोः प्राचीनताऽसंदिग्धैव।

इदं प्रतीयते यत्सद्यो विवाहिताः सधवाः वा, किन्तु पतिवियुक्ताः स्त्रियो ऽत्रैव सिद्धकामा अभवन्। तीर्थयोरनयोः ( दर्शनात्, स्नानात् वन्दनाच्च ) प्रभावादासां पतिवियुक्तानां पति-समागमायेमे महत्त्वपूर्णे मंगलकारिप्रियतीर्थे मन्येते स्म। महाकविकालिदासयुगीनभारतेऽनयोस्तीर्थयोर्महत्त्वं जनसामान्यैः सुविदितमासीत्; अतएव कविकुलगुरुरपि पतिवियुक्तया शकुन्तलयानयोस्तीर्थयोर्न केवलं दर्शनमपितु सलिलवन्दनं कारयामास।

शकुन्तलायाः कण्वाश्रमात् हस्तिनापुरगामिनः सरल-स्वाभाविक-मार्गादपि "शकरतार" नाम स्थलमिदं दूरं नास्ति। कण्वाश्रमात् हस्तिनापुरस्य दक्षिण-पश्चिमाभिमुखमृजुं प्राकृतमार्गं विहाय वर्तमानकीरनपुरात् संभवतः 'रावली' नाम्नि स्थले गंगायाः पूर्विप्रतरेण[1] ( बिजनौरात् क्रोशत्रयमुत्तरेण ) कथमपि नौकया काष्ठखण्डैर्वा भागीरथीं तीर्त्वा गौतमी-शार्ङ्गरवशारद्वतसहिता सशंकिता शकुन्तला शक्रावतार-शचीतीर्थेऽगमिष्यत्। रावलीस्थानस्य जनश्रुतिरपि तथ्यमिदं प्रमाणीकरोति, यत् शकुन्तलाऽत्र रम्योपवने किञ्चित्कालं विश्रामाय यापितवती।

यद्यप्यनयोस्तीर्थयोः प्राचीनतासूचकः कोऽपि भग्नावशेषोऽत्र न प्राप्यते, तथापि कतिपयैस्तुङ्गकलशैर्मन्दिरैः शचीतीर्थमहिलाघाटस्थलेन च एतावत्तु कथयितुं शक्यते यन्महाकविकालिदासकालेऽवश्यमेवेमे तीर्थस्थले न केवलं सुप्रसिद्ध-पवित्रतीर्थरूपेऽपितु सांस्कृतिकोत्कर्ष-पूर्णे आवासयुक्तनगररूपेऽपि विश्रुतेऽभविष्यताम्।

---

१. लोकभाषायां 'घाट' इति शब्दः प्रयुज्यते, यस्याशयोऽस्ति 'नदी-संतरण-स्थलम्'।

अत्र समीपवर्तिस्थले ख्रीष्ट० १८-१६ तमशताब्द्याः प्राचीनदुर्गो विद्यते, यस्तत्कालिकइतिहासे 'शकरतार-दुर्ग' इति नाम्ना उल्लिखितोऽस्ति; यस्मिन्नवाबपदभाग् उद्दौला महाराष्ट्रशासकानां साहाय्येन राजमंत्रिणा गाज़ी-उद्दीनेन वन्दीकृतः। कालान्तरे स एव नवाबउद्दौला रुहेलखण्डीय-शासकसाहाय्येनेतो विमुक्तोऽभवत्।

## उपसंहारः

'शक्रावतार-शचीतीर्थयोरवस्थितिः रावलीस्थानस्य समीपे गङ्गायाः पारे ( पश्चिमी तटे ) वर्तमानमुजफ्फरनगरात् पंच-षट् क्रोश-दूरं पूर्वस्यां दिशि 'शकरतार' नाम्नः स्थानादभिन्नैव माननीया' इति उपर्युक्त सन्दर्भेण सम्भाव्यते।

कतिपयैरनुसन्धायकैर्भ्रान्तिवशादिदं 'शकरतार'—( 'शकरताल' वा ) स्थानं शुकताल[1] ( 'शुक्रताल' वा ) नाम्ना स्थलेन समीकृतमितिदृष्टिर-समीचीना प्रतिभाति अप्रासङ्गिकत्वात्।

अतएव अभिज्ञानशाकुन्तले कालिदासवर्णितयोः शक्रावतार-शचीतीर्थयोरवस्थितिः गंगाया दक्षिणे तटे मुजफ्फरनगरजनपदेऽव-गन्तव्या तथा शक्रावतारक्षेत्रस्य समीकरणं "शकरतार"—स्थलेन समं सर्वथा समीचीनमस्ति।

आशासेऽनुसन्धायका विद्वांसस्तीर्थयोरनयोः सांस्कृतिकैतिहासिक-पुरातात्त्विक-राजनैतिकधार्मिकक्षेत्रेष्वपि तत्परतापूर्वकं अनुसन्धानात्मका-ध्ययने रताः समुद्धारं करिष्यन्ति।



---

१. द्रष्टव्यम्-कल्याण-विशेषाङ्कः वर्ष ३१, अंकः १, गीताप्रेस गोरखपुरम्, पृ० ६५। पौराणिकगाथानुसारेण गंगातटीये 'शुकताल'— नाम्निस्थले महाराजः परीक्षितः महर्षिशुकदेवात् श्रीमद्भागवतं पुराणं श्रुत्वा तक्षकदंशात् सप्तदिवसेष्वेव मोक्षं लेभे। इदं स्थलमपि हस्तिनापुरात् १५ क्रोशमुत्तरस्यां, हरिद्वारात् २० क्रोशं दक्षिण-पूर्वे, बिजनौरात् च ५ क्रोशं दूरं वर्तते।

# शुद्धाद्वैतवेदान्ते प्रमेयपदार्थविचारः[1]

श्रीमती डा० राधारानी सुखवाला

सागरिकायाश्चतुर्दशवर्षस्य प्रथमाङ्के मया शुद्धाद्वैतवेदान्तविषयिणी निबन्धमाला समारब्धा। तत्र 'शुद्धाद्वैतवेदान्ते ज्ञानविमर्शः प्रमाण-मीमांसा च' (पृ. ७६–६२) इत्ययं प्राथमिकः निबन्धः प्राकाश्यमुपागात्। प्रस्तुतेऽस्मिन् निबन्धे सागरिका-पाठकानां वैष्णववेदान्तानुरागिणां च कृते द्वितीयोऽयं निबन्ध उपस्थाप्यते।

शुद्धाद्वैतवेदान्तसिद्धान्तं संस्थापयन्तः श्रीवल्लभाचार्या ब्रह्मैवैकमात्रं तत्त्वं स्वीचक्रिरे. विदितमेव समेषां वेदान्तविदां यत् श्रुतयः स्मृतयश्च सच्चिदानन्दस्वरूपात्मकमेव ब्रह्मणो लक्षणं प्रतिपादयन्ति। प्रस्थानरत्नाकरस्य लेखकाः श्रीपुरुषोत्तमाचार्याः स्वकीये शुद्धाद्वैतवेदान्तस्य मूर्धन्ये ग्रन्थे नैकविधश्रुतिस्मृतिप्रमाणमुद्धृत्य समेषां वस्तूनां ब्रह्मणोऽभेद-मङ्गीकुर्वन्तः ब्रह्मैव एकमात्रं प्रमेयम्, इति निर्णीतवन्तः। अतः खलु त्रिष्वपि भूतभविष्यवर्तमानकालेषु व्यवहारदशायामपि सर्वाण्यपि वस्तूनि ब्रह्मणः एव स्वरूपम्। अतः ब्रह्मैव एकमात्रं प्रमेयम्।[2]

सत्यं हि प्रपञ्चमात्रं जन्यमस्ति, तथापि प्रपञ्चोत्पत्तौ स्वीकृतायां सत्यां, प्रपञ्चस्यानित्यत्वेऽपि प्रपञ्चस्य अब्रह्मत्वं साधयितुं न शक्यते, यतो हि जगदुत्पत्तिविनाशयोः केवलमाविर्भावतिरोभावमात्रमेवार्थः। यदि घृते द्रवत्ववत् ब्रह्मणि प्रपञ्चमपि कश्चिदागन्तुको धर्मः स्वीक्रियेत तदापि ब्रह्मधर्मणो विनाशः कदापि न सम्भाव्यते। धर्मधर्मिणोस्ता-

---

१. शुद्धाद्वैतवेदान्तविचारपरम्परायां द्वितीयोऽयं लेखः। निबन्धोऽयं उदयपुरविश्वविद्यालयतः पीएच. डी. इत्युपाधिकृते १९७३ तमेऽब्दे स्वीकृतस्य शोधप्रबन्धस्यांशभूतः।

२. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ. १५७

दात्म्य एव सम्बन्धः ।[1] यथा शक्तिशक्तिमतोरभेदः, तथैव धर्मधर्मिणोरभेदः । इत्ययं नियमः । 'प्रपञ्चं मायाजन्यम्', इति बुद्ध्यापि प्रपञ्चस्य अनित्यताशङ्का सर्वथा निराधारा निर्मूला च । तत्रायं हेतुः, प्रथमं तु माया केवलं दर्शयित्री विद्यते न तु जनयित्री । अथ च पुनः, मायाऽपि ब्रह्मण एव शक्तिः । शक्तिशक्तिमतोश्चाभेदः सम्बन्धः । अतएव ब्रह्मैव एकमात्रं प्रमेयम्[2] ।

अयं सिद्धान्ततः श्रीमद्भागवतमहापुराणस्याध्ययनेनापि स्फुटीभवति यत् यथा प्राणिनां पञ्चभूतविरचितेषु सर्वेष्वपि उच्चावचेषु ह्रस्वदीर्घलघुविशालकलेवरेषु, आकाशादिपञ्चमहाभूतानि प्रविष्टानि-अप्रविष्टानि च विद्यन्ते, तथैव ब्रह्मस्वरूपेण भगवानेव तेषु सर्वेषु सम्यगनुप्रोतः । अशरीरिणां कार्यरूपेण निर्मितत्वेन हेतुना महान्ति भूतानि शरीरेषु प्रविशन्ति, कारणरूपेण पूर्वमेव तेषु विद्यमानत्वात् न प्रविशन्ति । तथैव ब्रह्म तेषु सर्वेषु आत्मरूपेण प्रविशति, आत्मदृष्ट्या च ब्रह्मातिरिक्तस्य कस्यापि पदार्थस्याभावात् न प्रविशति ।[3]

तत्रादौ वैष्णववेदान्तधिया सृष्टिप्रक्रियामवगन्तुं प्रसङ्गत एतत् प्रतिपादनं नानुपयुक्तं सम्पत्स्यते यत् सर्वप्रथमं निराकारैव ब्रह्म विद्यते । एतदेव सच्चिदानन्दमयं सर्वभवनसमर्थं ब्रह्म किञ्चिदपि निमित्तमन्तरैव प्रथमं स्वांशेन धर्मरूपेण, ततः क्रियारूपेण, ततश्च प्रपञ्चरूपेण प्रकटीभवति । अनेन सिद्ध्यति यत् वस्तुतः ब्रह्मैव मूलं, ब्रह्मैव एकमात्रं प्रमेयम् । मुख्यामुख्यलीलाभेदेन ब्रह्मणः स्वीकृतेऽपि प्रकारद्वये ब्रह्मातिरिक्तं प्रमेयं कथमपि न सिद्ध्यति ।

---

१. घृतद्रववत् प्रपञ्चस्यागन्तुकत्वेऽपि ब्रह्मधर्मत्वानपायाद्धर्मस्य धर्मितादात्म्याददोषात् ।—तत्रैव, पृ० १५८

२. मायाया अपि भगवच्छक्तित्वेन शक्तिमदभिन्नत्वात्तयात्वेऽपि भगवद्रूपत्वानपायात् ।—तत्रैव, पृ. १५९.

३. यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।

प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥—श्रीमद्भागवतम् २.९.३४

प्रथमं धर्मरूपेण ब्रह्मैव ज्ञानरूपेण, आनन्दरूपेण, कालरूपेण, इच्छारूपेण, मायारूपेण प्रकृतिरूपेण च तिष्ठति। किन्तु नेयं चिरन्तनी स्थितिः। ब्रह्मणो हेतुभूतः कोऽपि कालो नास्ति। कालस्योत्पन्नभूतपदार्थत्वात् ब्रह्मैव कालस्य नियामकः, न तु कालो ब्रह्मणो हेतुः। कालेन सह समुत्पन्नानामिच्छादिशक्तीनाञ्च सर्वदैकरूपतां भगवान् स्वयं स्थापयति। अतएव एतत् सर्वमपि नित्यम्। कालः केवलं क्रियाशक्तिरूपः।[1] इच्छा तावत् अभिधानस्वरूपा सङ्कल्पात्मिका वा। भगवतः सङ्कल्पात्मिक्या अस्या इच्छाया रूपद्वयं विद्यते। (१) 'बहु स्याम् प्रजायेय' इत्यस्याम् श्रुतौ 'बहु स्याम्' इति पदेन एकस्य अनेकत्वभावनैव इच्छा। (२) 'प्रजायेय' इति श्रुतिपदेन सृष्ट्योत्पत्तेरिच्छैव सदाशयः सूच्यते। अनयोर्द्वयोः एकस्मादनेकभवनात्मिका इच्छा भेदरूपिणी प्रमुखी च चकास्ति। अतएव यथा कालातिरिक्ते क्रियाज्ञाने स्तः, तथैव सच्चिदानन्दमया धर्माः स्वयं भिद्यन्तोऽपि स्वाश्रयं ब्रह्मापि विभेदयन्ति।[2] अयमाशयः, इमे धर्मा ब्रह्मापि क्रियावत्, ज्ञानवत्, आनन्दवच्च सम्पादयन्ति। एवं सति त्रिरूपोऽपि भगवान सर्वतः पाणिपादादिविन्यासयुक्तः सन्नपि (सर्वतः प्रदेशे पाणयः पादा अन्ता यस्य)[3] साकारतां गृह्णाति। अनेन प्रकारेण ब्रह्मणः सर्वव्यापकत्वेन कारणेन ब्रह्मणः पाणिपादादियुक्तत्वं सार्वत्रिकं युक्तिसङ्गतं सङ्गच्छते। अमुमेव श्रुतिसङ्गतं सिद्धान्तं श्रीमन्तो वल्लभाचार्यपादाः प्रतिपिपादयिषन्ति।[4] ब्रह्मैव स्वयं स्वस्मादेव

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तम, पृ. १५९-१६०

२. भगवान् के सत्, चित् और आनन्द ये तीन रूप ही वैष्णव दर्शन की परम्परा के अनुसार प्रस्तुत प्रसङ्ग में पुरुषोत्तम को अभिप्रेत हैं। महामहोपाध्याय डा० उमेश मिश्र ने अपनी 'भारतीय दर्शन' नामक पुस्तक में [पृ० ४५२] भगवान् के अन्तर्यामी, जड तथा जीव ये तीन रूप स्वीकार किए हैं, जो प्रस्तुत प्रसङ्ग में पुरुषोत्तम का आशय कदापि प्रतीत नहीं होता। यह दर्शनशास्त्र के पण्डितों द्वारा विचारणीय हैं।

३. तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणे, वल्लभाचार्यः, 'प्रकाशः', पृ० ९३

४. 'सर्वतः पाणिपादान्तम्'।—श्वेताश्वेतरोपनिषद्, ३, १६

स्वांशरूपेण निर्गच्छति। अस्य निर्गमनस्योपादानमधिकरणं कर्तृ च ब्रह्मैवास्ति। ब्रह्मणो व्यापकत्वेऽपि निर्गमनमिदं निरुपाधिकं, न त्वौपाधिकम्। ब्रह्मणो निःस्सरन्तः सर्वेप्यंशाः, निस्सृताश्च सर्वे प्रदेशाः निसृतिप्रभवभूतानि च तत्त्वानि, सर्वमिदं ब्रह्म। अतो भिन्नमपि ब्रह्म स्वकीयया अभिन्नत्वालोचनस्वरूपिष्टोच्छया अभिन्नवदखण्डं सम्पद्यते। एतदेव ब्रह्म एकमात्रं प्रमेयम्।[1]

वल्लभसम्प्रदायस्य सिद्धान्तोऽयं श्रीमद्भागवतमवलम्बते। यत्रैतत् सुस्पष्टमवभासते यत् भगवानेव जगत उपादानं निर्माता निर्माणोपकरणञ्च। द्वयोः प्रधानपुरुषयोः लीलार्थमेव जगतः निर्माणं बभूव। एतत् जगत् यस्मिन् समये येन रूपेण प्रतिभासते, येन रूपेण प्रतीतिविषयतामापद्यते, न तत्स्वरूपं तस्य वास्तविकं स्वरूपम्। अस्मिन् जगति भोग्यायाः प्रकृतेः, भोक्तुश्च पुरुषस्य परौनियामकः साक्षात् भगवानेव।[2]

शुद्धाद्वैतपरम्परायां माया ब्रह्मणोऽभिन्न ब्रह्मशक्तिरूपेण स्वीक्रियते। भगवतः सर्वभवनसामर्थ्यरूपा शक्तिरेव माया। इयं माया भगवति संस्थिता।[3] इयमेव ब्रह्मणो मायारूपिणीशक्तिर्ब्रह्मसदंशसंयुक्तत्वात् 'क्रियारूपा' कथ्यते, ब्रह्मचिदंशसंयुक्तत्वाच्च 'व्यामोहिकी' कथ्यते। त्रिगुणात्मिकीयं माया। इयमेव जगदुत्पादयित्री सती अंशभूता माया आनन्दरूपेण जगत उत्पत्तिकारणमास्ते। मायायाः सर्वाण्यपि रूपाणि केवलं भगवत्सम्बन्धमात्रेण प्रतीयन्ते। मायायां देशकालौ वस्तुरूपजगत् कर्तृत्वञ्च केवलं भगवदिच्छयैव सम्पद्यते। यतो मायायां मूलकर्तृत्वं वल्लभमतानुयायिनो नाङ्गीचिकीर्षन्ति।

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६०

२. यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः॥

—श्रीमद्भागवतम्, १०, ८५, ४

३. माया हि भगवतः शक्तिः सर्वभवनसामर्थ्यरूपा तत्रैव स्थिता।
तत्त्वार्थदीपनिबन्धः, शास्त्रार्थप्रकरणे, वल्लभाचार्यः, 'प्रकाशः', पृ० ७७

इयं शक्तिः स्वकीयेषु त्रिष्वपि रूपेषु सच्चिदानन्दवद्वाच्या। अत्र प्रथमं पूर्वाकारस्य कामसङ्कल्पस्य प्रपञ्चं विद्यते। द्वितीयं उत्कर्षापकर्षरूपेणास्ते। तृतीयमुत्कृष्टानन्दस्वरूपमस्ति।[1] आद्ययोर्द्वयोर्ज्ञानक्रियारूपा धर्मा भगवच्छक्तिरूपेणोत्पद्यन्ते। त्रिगुणात्मिकी माया स्वकीयैः सत्त्वरजस्तमोगुणैर्नानाविधा भेदवृत्तीः समुत्पादयति। यद्यपि मायाया असीमो विस्तारस्तथापि विकारमनुगतायाः सृष्टेस्त्रयोभागा विभज्यन्ते। यथा चक्षुरिन्द्रियमध्यात्मम्, तस्य विषयेऽधिभूतः, नेत्रगोलके च संस्थितः पुण्डरीकवनबन्धुर्मरीचिमाली भगवान् भास्करः अधिदैवः। इमानि त्रीणि पारस्परिकमाश्रयमवलम्बन्ते। अतएव परस्परं सापेक्षाणि कथ्यन्ते। किन्तु नभोमण्डले संस्थितं सूर्यमण्डलं त्रयाणामपेक्षया स्वतः सिद्धत्वान्मुक्त एव। एवमेव आत्मा उपरिनिर्दिष्टानां त्रयाणां भेदानां मूलकारणं, तेषां साक्षी, तेभ्यश्च परः। अयमेव स्वकीयस्य स्वयंसिद्धस्य प्रकाशस्य, सर्वेषां सिद्धपदार्थानाञ्च मूलसिद्धिः। अनेनैव सर्वं प्रकाशते, अनेनैव सर्वेषां प्रकाशः समन्तात् प्रसरति।[2] आनन्दस्वरूपं ब्रह्म ज्ञानशक्त्या क्रियाशक्त्या च संयुक्तं सम्पद्यते। अतएव शुद्धाद्वैतवेदान्ते भगवतः चिदंशशक्तिर्व्यामोहिका मायाशक्तिः कथ्यते। इयमेव व्यामोहिका माया अविद्यापरपर्याया। यदा चिदंशस्वरूपो ब्रह्मणो ज्ञानरूपको धर्मः पृथक् भवति तदा अज्ञानं सर्वतः समावृणोति।

यद्यपि भगवान् सर्वथा बोधरूपः, इति केन वा न ज्ञायते वेदान्तविदा, तथापि धर्मभूतज्ञानाभावे भगवान् विमुह्यति। अस्यामवस्थायां आनन्दात् पृथग्भूतेन हेतुना 'मायासम्बन्धेन आनन्दः संलप्स्यते' इति बुद्धया भगवान् मायया सम्बद्धः सञ्जायते। तदनन्तरं व्याकुलः सन् आनन्दोत्पन्नायां सृष्टौ सूत्रात्मानं समाश्रित्य दशविधप्राणरूपेण स्थितिं भजते। साम्प्रतं प्राणान् धारयितुं यत्नभूताया इच्छायाः कारणेन इदमेव चिदंशरूपं ब्रह्म 'जीव' इत्याख्यां लभते। ब्रह्मैव सदंशरूपिण्याः क्रिया-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६१

२. तत्त्वार्थदीपनिबन्धः, सर्वनिर्णयप्रकरणे, वल्लभाचार्यः, कारिका १२८, १३६।

शक्तेः पृथग्भूतं सदव्यक्तं जडात्मकं कथ्यते। ततश्च मूलभूतक्रियांशद्वारेण स्वस्वयोग्यताविशिष्टशरीरादिषु स्फुटामभिव्यक्ति सम्प्राप्नोति। यदा क्रिया विलयं गच्छति, यदा वा क्रिययोत्पन्ना धर्मा विलीयन्ते तदा ब्रह्मापि तिरोभवति। अनेन स्पष्टं सञ्जायते यत् ब्रह्मणः चिद्रूपमपि ज्ञानशक्तेरंशभूतेन ज्ञानेनाभिव्यक्तितिरोधानभाजनतामुपगच्छति। एवमानन्दरूपस्यापि विभागः परिलक्ष्यते। भगवानेव स्वकीयाभिः सिसृक्षापिपालयिषासञ्जिहीर्षादिभिः सच्चिदानन्दरूपेण क्रमशः चिदंशभूतजीवस्य जडप्राणादीनां बन्धसमूहभूतानां, सदंशभूतस्य जीवस्य चिदंशेन बन्धनीयानां तत्त्वानां, आनन्दांशभूतस्यान्तर्यामिनोऽन्तर्यामिनाञ्च नियामको भवति। एतेषां स्फुलिङ्गवत् व्युच्चरणं मन्यते। एवंविधा बद्धजीवा मोहिकां मायां प्रयत्नञ्च सर्वथा परित्यजन्ति, येषु जीवेषु भगवान् परिपूर्णां ज्ञानशक्तिमादधाति। एतादृशा बद्धजीवा ज्ञानिनो भूत्वा केवलं स्वकीये चिद्रूपस्वरूपे संस्थिताः सम्पद्यते। सर्वथा इमे अपराधीनाः कथ्यन्ते। केवलमयमेव भेदः प्रसङ्गेऽस्मिन स्मृतिपथमानेयः यत् एतादृशेषु जीवेषु जगत्कर्तृत्वं न प्रादुर्भवति, मायाशक्तिरपि सर्वथा तिरोभवति। एतादृशेषु जीवेषु आनन्द एव सर्वोत्कर्षेण वर्तते। आनन्दस्यापेक्षया नास्ति तेषु कस्याप्यन्यस्य भावस्योत्कर्षसमुन्मेषः। यद्यपि जीवेषु आपाततो हीनभावः परिलक्ष्यते। सोपाधिकत्वात् तेषां परिच्छिन्न आनन्दः, परिच्छिन्नं च ज्ञानम्। तथाप्ययं जीवः आनन्देन सहयोगेन हेतुना आनन्दमयः सम्पद्यते।[1]

श्रीपुरुषोत्तमाः द्विप्रकारिकीं सृष्टिमभिमन्यन्ते।

( १ ) *नामसृष्टिः*—नामसृष्टौ भगवान् सूत्ररूपेण सुषुम्नानाडीमार्गेणाभिव्यक्तः सन् घोषात्मकशब्दब्रह्मरूपेण प्रकाशते। एतदेव घोषात्मकशब्दब्रह्म कदाचित् नादात्मशब्देन कदाचित् वर्णपदनामाख्यया व्यवह्रियते।

( २ ) *रूपसृष्टिः*—रूपसृष्टेः कारणं पञ्चात्मको भगवानेवेति वाञ्छनीयाः। भगवतः पञ्चाङ्गानि तावदिमानि। ( अ ) द्रव्यम् ( आ ) कालः

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६१-१६२

( इ ) कर्म ( ई ) स्वभावः ( उ ) जीवः ।[1] एतदेव द्रव्यं मायाशब्देनाभिधीयते । अस्य द्रव्यस्य प्रकृतिरेवोपादानम् ।

अवान्तरसृष्टौ अधिष्ठानं शरीरं वा, कर्ता जीवो वा, करणमिन्द्रियं वा, प्राणस्य धर्मभूताश्चेष्टाः, दैवं भगवदिच्छावेति पञ्चतत्त्वानि स्वीकृतानि सन्ति ।

प्रमीयते इति प्रमेयम् । यत् प्रमाणेन प्रमीयते तत् प्रमेयम् । 'मानाधीना मेयसिद्धिः' इति वचनेन प्रमेयसिद्धिः प्रमाणाधीनेति कृत्वा मया स्वकीयायां निबन्धमालायां प्रथमे निबन्धे प्रमाणमीमांसा समुपस्थापिता । साम्प्रतं प्रमेयविचारः सम्पाद्यते । *अयमाशयः*—प्रमाणवचोभिर्यन्निष्पाद्यते तदेव प्रमेयम् । सर्वेषां प्रमाणानां परमतत्त्वमेवाभिधेयम् । अतः अद्वयज्ञानस्वरूपः परमतत्त्वात्मकः परमात्मा एव शुद्धाद्वैतवेदान्ते एकमात्रं प्रमेयम् । उपपत्तिदृष्ट्या उत्पत्तिदृष्ट्या च विचारवतां तत्त्ववेत्तॄणां दृष्ट्यापि परमतत्त्वं ब्रह्मैव प्रमेयं सिद्ध्यति । श्रीमन्तः वल्लभाचार्याः सुस्पष्टमुद्घोषयन् यत् केवलं भगवान् हरिरेव प्रमेयम् ।[2] प्रत्यक्षानुमानादिभिर्लौकिकैः प्रमाणैः प्रमेयोऽयं ज्ञातुं न शक्यते । भगवदात्मकोऽयं प्रमेयः केवलं शब्दप्रमाणवेद्यः । शब्दप्रमाणकोटौ च चत्वारो वेदाः, श्रीमद्भगवद्गीता, व्याससूत्राणि, श्रीमद्भागवतञ्चमहापुराणमित्येतानि चत्वार्येव प्रमुखाण्यभिमतानि सन्ति ।[3] एभिः प्रमाणैरेकस्या

---

१. द्रव्य, काल, कर्म, स्वभाव और जीव—ये वास्तव में भगवान् वासुदेव से भिन्न कोई वस्तु नहीं हैं ।

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
वासुदेवात् परो ब्रह्मन्न चाऽन्योऽर्थोऽस्ति तत्त्वतः ॥

—श्रीमद्भागवतम् २, ५, १४

२. 'प्रमेयं हरिरेवैकः' । तत्त्वार्थदीपनिबन्धः, सर्वनिर्णयप्रकरणे, वल्लभाचार्यः, कारिका ८४

३. वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥

—तत्रैव, शास्त्रार्थप्रकरणे, कारिका ७

एव परमसत्ताया ज्ञानमुपलभ्यते । परमात्मापरपर्यायं परमतत्त्वमिदं ब्रह्मैव प्रमेयमित्यस्माकं वल्लभमतानुयायिनां प्रमेयविचारप्रसङ्गे सुदृढः राद्धान्तः ।

यदा ब्रह्म साकारावस्थां प्रपद्यते तदा तस्य नानाविधानि रूपाणि सम्पद्यन्ते ।[1]

## १. स्वरूपकोटिनामकं प्रमेयम्

भगवान् स्वरूपकोटिनामके प्रमेये क्रियाभेदेन ज्ञानभेदेन क्रियाज्ञाने-त्युभयविशिष्टभेदेन च भगवान् त्रिविधा परिगण्यते ।

अत्र वेदादिभावापन्नस्य शब्दस्यैव परमप्रामाणिकतामङ्गीकृतवति वल्लभसम्प्रदाये—

( क ) वेदा एव सर्वोत्कर्षेण वर्तमानं प्रमाणम् । वेदानां पूर्वकाण्डे यज्ञविधीनां प्रतिपादनं विद्यते । 'विष्णुरेव यज्ञः' इत्यस्माद्धेतोः वेदा अपि भगवतः स्वरूपम् । तथापि यागानुष्ठानेन समारभ्य फलानुभवपर्यन्त-दशायां साधनरूपेण क्रियाया एव प्रतीतिः सञ्जायते । अतः पूर्वकाण्ड-स्यार्थो यज्ञक्रियायां प्रच्छन्नस्तिष्ठति ।

( ख ) वेदानां द्वितीयस्मिन् काण्डे सच्चिदानन्दात्मकस्यानन्तरूपस्य, अनन्तगुणस्य, अनन्तशक्तेश्च ब्रह्मणः प्रतिपादनं विद्यते तथापि गुरूप-सत्तेः समारभ्य चरमावस्थापर्यन्तं ज्ञानस्यैव प्रतीतिः सञ्जायते । अतः उत्तरकाण्डस्य प्रतिपाद्योऽर्थः ज्ञानेन्तर्हितः ।

( ग ) श्रीमद्भगवद्गीता श्रीमद्भागवतञ्च महापुराणं वेदानेवोपबृंहतः, अनयोः ज्ञानक्रियेत्युभयविशिष्टरूपेण प्रतिपाद्यो भक्तेः विषयः सन् साकारः सगुणश्च भगवाननन्तगुणैः परिपूर्णः प्रतिपादितोऽस्ति । परमया विशुद्धया सततनैलधारानुगामिन्या अव्यक्ताऽनभिचारिण्या भक्त्या

---

१. प्रमेयं त्रिविधं वर्ण्यते । स्वरूपकारणकार्यकोटिभेदात् ॥

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६४

भगवाननेनैवरूपेण साक्षात् भवति। एतदेव ब्रह्मणः ज्ञानक्रियाविशिष्टं तृतीयं रूपं स्वीकृतं विद्यते।

एवं स्वरूपकोटिनामके प्रमेये प्रमाणानुरोधिनः प्रमेयात्मनः ब्रह्मणः प्रतिपादनं विद्यते।

अक्षरं ब्रह्म ज्ञानात्मकत्वादुत्तरकाण्डार्थे, कर्म च पूर्वकाण्डार्थे समापतति। भगवानेव कालरूपेण उपलक्ष्यते। गुणाभिमानिषु ब्रह्मादिषु भयोत्पादकत्वेन हेतुना कालोऽपि स्वरूपकोटावेव निर्धार्यते। एवमेव स्वभावोऽपि। अतः कालः, कर्म, स्वभावो वा अक्षरस्यैव रूपान्तरम्।

यद्यपि स्वरूपभूत एवान्तर्यामी, तथापि जीवेन सह कार्ये क्षेत्रे प्रवेशनात् सत्स्वपि तेषामनन्तेषु भेदेषु कारणभूततत्त्वरूपशरीरं प्रविश्य तस्यैव साहाय्येन कारणकोटौ स्वीक्रियते न तु स्वरूपकोटौ। वस्तुतः स्वान्तर्यामी भगवानेकोऽद्वितीय एव। अक्षरं लक्षयन्तः श्रीवल्लभाचार्याः ब्रुवते यत् येन रूपेण भगवान् कार्यं चिकीर्षति तदेव रूपं धारयति यदा भगवान् ज्ञानमार्गेण मोक्षं दित्सति, तदा भगवान् पुरुषोत्तमः स्वकीयस्य चरणस्थानीयस्य आधारस्य चत्वारि स्वरूपाणि विदधाति। अक्षर-ब्रह्म, कालः, कर्म, स्वभावश्च। अनेन प्रकारेण अक्षररूपं ब्रह्मण एव रूपान्तरम्।[1] अक्षररूपस्य प्रकृतिः पुरुषश्चेति रूपद्वयम्। अक्षरं ब्रह्मैव प्रधानादीनां सर्वेषां कारणानामपि कारणभूतम्।[2] अक्षरं ब्रह्म ज्ञानरूपस्य क्रियारूपस्य ज्ञानक्रियाविशिष्टरूपाणाञ्च मूलभूतं ज्ञानप्रधानं गणितानन्दं कथ्यते। एतदेव कूटस्थब्रह्म, अव्यक्तं सदसत्पदवाच्यमस्ति।[3] अक्षरं ब्रह्म भगवन्तं पुरुषोत्तमं आधारीकृत्यैव तिष्ठति। व्यापिवैकुण्ठनाम्ना चाभि-

---

१. प्रकृतिपुरुषश्चोभौ परमात्माऽभवत् पुरा।
यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते॥
—तत्त्वार्थदीपनिबन्धः, सर्वनिर्णयप्रकरणे, वल्लभाचार्यः, कारिका ९९

२. तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्।—श्रीमद्भागवतम्, ३, ११, ४१

३. एतदेव पूर्वोक्तानां त्रयाणां पूर्णरूपाणां मूलभूतं ज्ञानप्रधानं गणितानन्दं ब्रह्मकूटस्थाव्यक्तासत्सत्तम इत्यादिपदाभिधेयम्। प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६५

धीयते । ज्ञानमार्गे अक्षरमेव फलम् । ज्ञानमार्गमनुसरन्तः साधकाः अक्षरमेव ब्रह्म लब्ध्वा सानन्दा भवन्ति ।

साम्प्रतं प्रसङ्गतः काल-कर्म-स्वभावस्वरूपाणि व्याचिख्यासामि ।

( अ ) *कालः*—सत्यं हि नाम कालकर्मस्वभावाः अस्यैव अक्षर-ब्रह्मणः रूपान्तरमात्रम् । कालस्वभावौ कालस्यांशभूतौ स्तः । काल एवान्तर्भवतः कर्मस्वभावौ, इत्याशयः । वस्तुतः कालः स्वकीये आन्त-रिकस्वरूपे सच्चिदानन्दात्मको भवति, किन्तु व्यवहारस्वरूपे किञ्चि-त्सत्त्वांशात् प्रादुर्भावेण हेतुना 'कालः' कथ्यते । एतदेव कालस्य स्वरूप-लक्षणम् ।[1] अयमेव कालः अक्षरस्य स्वरूपेण प्रकटीभवति, आहोस्वि-देतत् कथयितुं शक्यते यत् सच्चिदानन्दं ब्रह्मैव कालरूपेणावतरति । अयं कालः परब्रह्मणा क्रियाशक्तिरूपकोऽस्ति । सकलजगदुत्पत्तौ काल एव निमित्तकारणम् । तथाप्ययं कालोऽव्यक्त एव । अतः नित्यपदार्थेषु विद्य-मानः सन् यत् सर्वेषां पदार्थानामाश्रयः स्यात्, यस्मात् च सर्वेषां पदार्थानामुत्पत्तिर्भवेत् स एव कालः । कालस्येदं लक्षणं कार्यानुसारि लक्षणं विद्यते । अयमेव सर्वेषां सांसारिकाणां वस्तूनां कारणं भवति । अनेनैव कालेन अतीतानगतानां व्यवहाराणामुत्पत्तिः सम्पद्यते । कालस्य सर्वप्रथमं कार्यमिदमेव यद्यं सत्त्वरजस्तमोगुणानां साम्यावस्थायां विकारमुत्पादयति[2] ।

श्रीमद्भागवतानुसारेण विषयाणां रूपान्तरमेव कालस्याकारः । कालो-ह्ययं निर्विशेषोऽनादिरनन्तश्चास्ति । अमुमेव कालं निमित्तीकृत्य भगवान्

१. एतस्यैव रूपान्तरं कालकर्मस्वभावाः कालस्यांशभूतौ कर्मस्वभावौ । तत्र अनन्तः सच्चिदानन्दो व्यवहारे ईषत्सत्त्वांशेन प्रकटः काल इति कालस्य स्वरूपलक्षणम् ।—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ. १६५

२. महता प्रयत्नेनापि नालम्भि मया महामहोपाध्यायपण्डितप्रवर श्रीहाराणचन्द्रभट्टाचार्यप्रणीतः कालविमर्शनामको ग्रन्थः । यद्यपि बहोः कालात् पूर्वमनेकधा विचारितचर एवायम् । कालविषये जिज्ञासुभिर्विद्वत्तल्लजैरवश्यमेव मननीयोऽयं ग्रन्थः ।

स्वकीयया लीलया स्वात्मानं सृष्टिरूपेण प्रकटयति[1]। अनेन प्रकारेण गुणानां व्यतिकराकारस्वरूपकः कालः इति लक्षणं पर्यवस्यति।

श्रीमद्वल्लभाचार्याणां मतेन गुणानां व्यतिकरस्यायमाशयः—अन्योन्यसंश्लेषस्यामूर्तत्वात् केवलं कार्येण तस्य लक्षणस्यानुभूतिर्विषयत्वं व्यतिकरः। अयमेव गुणव्यतिकरः कालस्याकारः स्वरूपो वा। भगवतो येन गुणेन सत्त्वरजस्तमसां व्यतिकरः सम्पद्यते, स एव गुणः कालः। कालस्यैतेन कारणगुणाः प्रथमं सत्त्वरजस्तमसां गुणानां रूपेण भिन्नभिन्नाः भवन्ति। तदनन्तरं तेषु शनैः शनैः कश्चित् क्षोभः समुत्पद्यते, येन ते परस्परं व्यामिश्रा भवन्ति। अनेन प्रकारेण वल्लभमतेन कालः गुणक्षोभयोः गुणानाञ्च संमिश्रणे हेतुः। अनेन प्रकारेण विषयाणां रूपान्तरात्मकस्य निर्विशेषस्यानादेरनन्तस्य कालस्य गतिरत्यन्तमेव सूक्ष्मा। न खलु साधारणतो दृष्टिगोचरीकर्तुं शक्यते ह्ययं कालः। कालेनैव प्रतिक्षणं शरीराणामुत्पत्तिविनाशविषयिणी क्रिया प्रचलति, तथापि सूक्ष्मातिसूक्ष्मेण रूपेण हेतुना सम्भवन्ति जन्ममरणानि नागच्छन्ति लोचनभाजनताम्।

सर्वेपि सूर्यादयो ग्रहाः, सर्वेपि लोकाः, किमधिकं निखिलमपि ब्रह्माण्डं कालस्यैवास्याधिभौतिकं स्वरूपम्। परमाणुस्तावदाध्यात्मिकं रूपम्। भगवान् स्वयमाधिदैविकं स्वरूपम्। यतः भगवान् कालमेव निमित्तीकृत्य स्वमात्मानं सृष्टिरूपेण प्रकटयति। यावत्कालपर्यन्तं सूर्यस्य रथचक्रं परमाणुमात्रप्रदेशं व्याप्नोति, स एव कालः परमाणुः कथ्यते।

---

१. गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्॥

—श्रीमद्भागवतम्, ३,१०,११

२. गुणव्यतिकराकारः कालः। गुणानां व्यतिकरोऽन्योऽन्यसंश्लेष आकारो यस्य। अमूर्तत्वात् कार्यद्वारैव लक्षणम्। कार्यं पुनः प्रकृतेः गुणसाम्यावस्थारूपायाः। येन भगवद्गुणेन गुणानां व्यतिकरो भवति, प्रथमतः सत्त्वादिरूपेण विभिन्ना भवन्ति, ततः क्षुब्धा अन्योऽन्यं च मिलिता भवन्ति, स गुणः काल इत्यर्थः।—सुबोधिनी, श्रीमद्भागवतम्, ३, १०, ११

यावता कालेन सूर्यः एकस्मिन्नणौ प्रविशति, स कालः परमाणुः कथ्यते। परमाणुस्त्वत्यन्तमेव सूक्ष्मो भवति। अस्य पुनर्विभाजनं कथमपि न सम्भाव्यते। अस्मिन् विषये वल्लभवेदान्तपरम्परा न्यायवैशेषिकमतमेवानुकरोति। सूक्ष्मस्य कालस्यैवेतेषां समेषां सम्मिलितानां सूक्ष्मातिसूक्ष्माणामंशानामेकीकरणेन दीर्घकालः समुत्पद्यते।

( ब ) *कर्म*—कर्मणः किं लक्षणमिति विचिकित्सायां वल्लभवेदान्तिनोऽधोलिखितं लक्षणं लक्षयन्ति। 'विधिनिषेधाभ्यां लौकिकाभिः क्रियाभिः कस्मिंश्चित् स्थानविशेषे अभिव्यञ्जनयोग्यक्रियैव कर्म'। एतदेव कर्ममीमांसकैरपूर्वसंज्ञया, नैयायिकैः धर्माधर्मपर्यायात्मकेनादृष्टेन नाम्ना, पौराणिकैश्च पापपुण्यपदेन परिचीयते। कालवदिदं कर्म सदा प्राकट्यं नाधिगच्छति। यावत्कालपर्यन्तं कर्मकर्त्ता फलं न प्राप्नोति तावदेव कर्मणः प्राकट्यं, तदनन्तरं विलुप्तं सञ्जायते कर्म। एवं साधारण्या रीत्या एकेनैव कर्मणा सर्वाणि कार्याणि सञ्जायन्ते।

अदृष्टमपि नात्मनो गुणः। सामान्यरूपेण फलव्यवस्थायामुत्पन्नायां सत्यामपि परमार्थतः कर्मणः नानात्वं साधयितुं न शक्यते। दानहिंसादिकर्मसु धर्माधर्मादिशब्दानां प्रयोगः, केवलमभिव्यञ्जकरूपेणोपाधिना हेतुना, भाक्त एवाभिमन्तव्यः।[1] यदि कश्चिदाशंकेत यत् कर्मणः एकत्वाङ्गीकरणपक्षे तस्य सर्वसामान्यप्रयोगः सर्वसामान्यञ्च फलं संपत्स्यते, अथ च 'पुण्यात्मानं पुण्योपलब्धिः, पापात्मानं पापोपलब्धिः' इत्येतादृशानां वाक्यानां नैरर्थक्यमापद्येत'। तत्रेदं समाधानं ब्रूमहे यत् अग्निष्टोमयागेन ज्योतिष्टोमयागेन वा तत्तद्यागरूपेण लौकिकेन कर्मभेदेन फलभेदोऽप्यवश्यम्भावीति निश्चप्रचम्। पुत्रकामनया सम्पादितेन यागेन पुत्रप्राप्तिः, स्वर्गकामनया सम्पादितेन यागेन स्वर्गप्राप्तिः, साम्राज्यकामेन सम्पादितेन राजसूयेन यागेन राज्ञः ( क्षत्रियस्य ) साम्राज्यप्राप्तिः, इन्द्रियबलकामस्य दध्ना गुणविधिना सम्पादितेन यागेन इन्द्रियबलप्राप्तिः भवत्येवेति स्फुटं विदितं मीमांसकमतं सर्वेषां दर्शनशास्त्रविशार-

---

१. 'दानहिंसादौ तु धर्माधर्मादिप्रयोगोऽभिव्यञ्जकत्वोपाधिना भाक्तः'।

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६९

दानां पण्डितवराणाम्। अतः नास्ति पूर्वोक्तशङ्कालेशप्रसङ्गोऽपि सङ्गतः। कर्मणोऽभिव्यक्तेः फलसमाप्तिपर्यन्तं कर्मणः प्राकट्यं फलभोगक्षोत्पादयिष्या क्रियया क्रमपूर्वकमाविर्भावतिरोभावौ भवतः. इयमेव स्थूलकर्मणः प्रक्रिया। वस्तुतः सर्वाण्यपि लौकिकानि कर्माणि सर्वव्यापिनि कर्मणि सम्मिश्रितानि भवन्ति। एतदेव सर्वव्यापि कर्म नानाविधास्ववस्थासु नानाविधैः स्वरूपैः प्रकटितं भवतीत्येतदेव कर्मणः स्वरूपं वल्लभवेदान्तिनां मतम्।

( स ) *स्वभावः*—यः परिवर्तयेत् स एव स्वभावः। अयःपरिमाणहेतुः कथ्यते।[1] भगवदिच्छैव स्वभावस्य स्वरूपम्, न केवलमिच्छैवापि तु पदार्थानां स्वरूपपरिवर्तयित्री भगवदिच्छैव स्वभावः। सर्वव्यापकोऽयं स्वभावः समेषां वस्तूनां पूर्वं स्वयमेव प्रकाशते। अयमेव चेतनाचेतनानां सर्वेषामाश्रयः। इयमेव स्वभावस्य स्वरूपकोटिः कथ्यते।

## २. कारणकोटिनामकं प्रमेयम्

स्वरूपकोटिनामकं प्रमेयं विविच्य साम्प्रतं कारणकोटिनामकस्य प्रमेयस्य स्वरूपं विचार्यते। वस्तुतः स्वभावस्य कारणकोटौ अष्टाविंशति संख्यकानि तत्त्वानि स्वीकृतानि सन्ति। भगवतः भगवत्कारणतैवास्मिन्संसारे अष्टाविंशतिधा प्रकटीभवति। इयं कारणता अनन्तकोटिब्रह्माण्डसृष्टेराविर्भावशक्ति धारणात्मकेन हेतुना असाधारणकारणतारूपेणाङ्गीक्रियते, न तु ईश्वरेच्छावदियं साधारणकारणता। तत्त्वानामष्टाविंशतिः अधोलिखितप्रकारेण परिगण्यते।[2] सत्त्वरजस्तमांसीति त्रयोगुणाः, पुरुषः, प्रकृतिः, महत्तत्त्वं, अहङ्कारः, शब्दस्पर्शरूपरसगन्धतन्मात्राः, आकाशवायुतेजोजलपृथ्वीतिपञ्चमहाभूतानि, पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्चेति। एतेषां अष्टाविंशति संख्याकानां तत्त्वानां विवेचनं श्रीपुरुषोत्तमप्रणीत–प्रस्थानरत्नाकरमनुसृत्य विविच्यते।

१. 'परिणामहेतुत्वं तल्लक्षणम्'। प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १६९

२. Chaitanya, His life and Doetrine, A. K. Majumdar, Bombay., 1969, P. 70

## १-३. गुणत्रयम्

( क ) *सत्त्वगुणः*—सुखमनावृण्वन् प्रकाशकः सुखात्मकः सन् यः सुखासक्त्या ज्ञानासक्त्या च देहिनः देहादिविषयिणी मासक्तिं जनयति, स एव सत्त्वगुणः। अतएव श्रीमद्भगवद्गीतायां निर्मलत्वात् सत्त्वमनामयं प्रकाशकं च मन्यते। अयं गुणः सुखासक्त्या ज्ञानासक्त्या च बन्धहेतुः सम्पद्यते।[1]

( ख ) *रजोगुणः*—रजोगुणस्य प्रकृतिरनुरागमयीत्युररीकुर्वन्ति वाल्लभीयाः। अयं गुणः प्राणिषु सङ्गेच्छातृष्णादीनुत्पादयति। प्राणिषु कर्मविषयिण्या आसक्त्या अयमपि देहिनः देहादिकं प्रत्यासक्तिमुत्पादयति।[2] रजोगुणस्य प्रकृतिस्तु राग एवेत्यत्र नास्ति विवादः। केचन अमुमेव रागमनुरागशब्देन व्याचख्यासन्ति, यथा वल्लभसम्प्रदायानुयायिनः। विशिष्टाद्वैतवादस्य प्रतिष्ठापका आचार्यप्रवराः श्रीमन्तः रामानुजाचार्या अस्यैव रागस्य 'स्त्रीपुंसयोः पारस्परिकी स्पृहा' इत्यमुमर्थं प्रत्यपादयन्।

( ग ) *तमोगुणः*—अयं अज्ञानस्य आवरणशक्तेः समुत्पद्यते।

---

१. ( क ) सुखानावरकत्वे प्रकाशकत्वे सुखात्मकत्वे च सति सुखासक्त्या ज्ञानासक्त्या च देहिनो देहाद्यासक्तिजनकं सत्त्वम्।

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७०

( ख ) तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥

—श्रीमद्भगवद्गीता, १४, ६

२. ( क ) 'रागात्मकं वा तृष्णासङ्गादिजनकं वा कर्मासक्त्या देहिनो नितरां देहाद्यासक्तिजनकं वा रजः'।

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७०

( ख ) इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥

—श्रीमद्भगवद्गीता, १४, ७

सकलप्राणिमात्रमोहकोऽयं गुणः प्राणिषु भ्रमप्रमादालस्यनिद्रादिभिः देहाद्यासक्तिं जनयति ।[1]

अत वयं किञ्चिद् विचारयामः । श्रीमता वल्लभाचार्येण सांख्यदर्शने स्वीकृता गुणपरम्परा पूर्णरूपेण नाङ्गीकृता । आचार्यप्रवरोऽयं श्रीमद्भगवद्गीतायाः श्रीमद्भागवतस्य महापुराणस्य आधारेणैव स्वकीयं मतं पुष्णाति । सांख्यमतेन गुणाः स्वयं कार्यशीलाः सन्ति । सर्वं वस्तुजातं त्रिषु गुणेष्वेव अभिव्याप्तं सत् त्रीन् गुणानेव प्रकाशयति । सर्वं कार्यञ्च गुणत्रयस्यास्य परिणाममात्रम् । शुद्धाद्वैतवादिनः कथयन्ति यत् परस्परं विरोधिस्वभावकानां गुणानामनुवर्तनं स्वतः कथमपि न सम्भाव्यते, यथा सांख्याः मन्वते ।[2] अतः स्वाभावानीश्वरवादमाश्रितस्य सांख्यस्यैतावान् भावपक्षः अनादरणीयः सम्पद्यते ।

श्रीपुरुषोत्तमानां मतेनेमे गुणा यदा भवगत उत्पद्यन्ते तदैतेषां प्रकृतिश्चिच्छक्तिस्वरूपिणी आनन्दस्वरूपिणीति च तिष्ठति ।[3] सृष्टिस्थितिलयेभ्यश्च मायाद्वारेण एतेषां गुणानां भगवति स्थितिः स्वीक्रियते । इमे गुणा दिव्यज्ञानक्रियाः समाश्रित्य मायातीतं नित्यमुक्तं पुरुषं–हेतुत्वेन निश्रित्य मायायां स्थिताः सन्तः कारणकार्येन्द्रियातीतभगवद्गुणानामावरणैः स्वकीयं स्वरूपमाच्छादयन्ति । अतएव साधा-

---

१. 'आवरणशक्तिजन्यं सर्वदेहिमोहकं प्रमादालस्यनिद्राभिर्देहिनो देहाद्यासक्तिजनकं तमः'—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७०

२. ( क ) सांख्यप्रवचनभाष्य, १, १२७–१२८ सं० ढुण्ढिराज शास्त्री, बनारस, १९८५, पृ० ६३-६४

( ख ) सांख्यकारिका (Ed. Pandurang Jawaji, Bombay, 1940) pp. 271–90

( ग ) The Three Qualities of Sāṅkhya System, Gopinath Kaviraj Abhinandna Granth, Rasik Vihari Joshi, Lucknow, 1967, pp. 127-135

३. एते च गुणा यदा भगवतः सकाशादेवोत्पद्यन्ते तदा माया चिच्छक्तिरूपा विज्ञेया । प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७१

रणाः प्राकृता जनाः गुणान्नावजानन्ति ।[1] यदा स्थित्यवस्थायां रजस्तमसो सत्त्वमाच्छादयतः, तदा सत्त्वं दुर्बलं सञ्जायते । तदानीं कार्यरूपेण वर्तमाने रजस्तमसी पराभवितुं सत्त्वं भगवन्तं प्रार्थयते, भगवतश्च स्वांशेन धर्मस्थापनार्थमवतारयितुं प्रभवति। अस्यामवस्थायां स्वयं सत्त्वमेव भगवतोऽवताररूपिणः शरीरस्य समवायिकारणं सत्, आविर्भावस्य निमित्तमपि कारणं सम्पद्यते । भगवान् सत्त्वमेवाश्रित्य अभिन्ननिमित्तोपादानकारणेन स्वयमेव नानाविधं रूपं धारयति । तदानीं सत्त्वस्य अवयवा अपि भिन्नभिन्नानि रूपाणि धारयन्ति । एवं स्वांशभूतं धर्मं स्थापयितुं भगवान् सत्त्वं प्रधानीकृत्य संसारे अवतरति। इमे गुणा मायायोत्पन्नाः स्वीक्रियन्ते । सांख्यमतेन सत्त्वादिगुणाः पदार्थाः कथ्यन्ते । सङ्घातरूपेण हेतुना प्रत्येकं गुणः परस्परं सम्मिश्रितस्तिष्ठति । अत्र शुद्धाद्वैतवादिनः विप्रतिपद्यन्ते । न खलु ते अमुं सांख्यसिद्धान्तं स्वीकर्तुमुत्सहन्ते, यतो हि तथा सति बन्धकत्वं नित्यं स्यात् ।

ईश्वरः स्वयमात्मानं मायारूपेण प्रकाशयति । भगवतो निर्गुणत्वं तु वैष्णववेदान्ते सूत्रकार्पासन्यायेन प्रतिपाद्यते । यथा कार्पासे सूत्रं नास्ति, कार्पासमेव स्वावयवानां पौर्वापर्येण सूत्रतां भजते, तथैव निर्गुणोऽपि भगवान् गुणानुत्पादयति । भगवतः सदंशात्सत्त्वं, चिदंशाद्रजः, आनन्दांशाच्च तम उत्पद्यते । साम्प्रतं स्पष्टमेतत् यत् शुद्धाद्वैतवेदान्ते गुणानां विवेचनं श्रीमद्भागवतानुसारि स्वीकृतमास्ते । प्रायः सांख्यपरम्परां स्वीकुर्वाणोऽपि वल्लभसम्प्रदायो गुणानां प्रसङ्गे कस्माद्धेतोः सांख्यसिद्धान्तमंशतः स्वीकरोतीति भारतीयदर्शनशास्त्र-विशारदैः विद्वद्वर्यैश्चिन्त्यम् ।

### ४. पुरुषः

आत्मैव पुरुषस्य लक्षणम् । परार्थभूतानि देहेन्द्रियादीनि यो

---

१. सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभो ॥

—श्रीमद्भागवतम्, २, ५, १८

व्याप्नोति, आहोस्वित् यस्तेषामधिष्ठानं स एव आत्मा ।[1] प्रस्थान-रत्नाकरे आत्मनो निम्नलिखितानि त्रीणि लक्षणानि नयनगोचरतामागच्छन्त ।

( क ) यो हि नाम अनादेर्निर्गुणः प्रकृतेः परो नियामकः सन्नपि अहंवित्तिसंवेद्यः स्यात्, अहमर्थप्रत्ययगोचरः स्यात्, स एव आत्मा । इदं प्रथमं लक्षणम् ।

( ख ) स्वयंप्रकाशस्वरूपत्वमेव आत्मनो द्वितीयं स्वरूपलक्षणम् ।

( ग ) संसारस्य गुणदोषसम्बन्धेन स्वयं सर्वथा शून्यः सन्नपि निखिलवस्तुजातसंसर्गवान् भवति, स एव आत्मा । इदं तृतीयं लक्षणं मुक्तावुपयोगि लक्षणमभिमन्यते ।[2]

गुणैरप्रभावितेन कारणेन पुरुषे सृष्टेर्विकारा असम्बद्धा भवन्ति । अयं पुरुषो देहेन्द्रियमनः प्राणादिभ्यः पृथगस्ति । अस्मिन्नेव निर्गुणे आत्मनि केवलत्वादयो गुणाः सृष्ट्यनुकूलिन्या भगवदिच्छया तथा च प्रकृत्यादीनामविवेकेन स्वीक्रियन्ते । अयमाशयः, सगुणत्वाद् आत्मन आगन्तुका धर्माः, न तु स्वाभाविका धर्माः । इदमेव वल्लभाचार्यानुयायिनां शुद्धाद्वैतवादिनां श्रीमद्भागवतमहापुराणानुसारि मतम् ।

अस्मिन् प्रसङ्गे स्मरणीयमास्ते यत् शुद्धाद्वैतवादी यदा कदा सांख्यसिद्धान्तं विरुणद्धि । यथा हि वल्लभमतेन एक एव पुरुषः, न तु सांख्यवदनेके पुरुषाः । द्वयोः केवलं एतदेवान्तरं यत् प्रस्थानरत्नाकरकाराः श्रीपुरुषोत्तमाचार्याः जीवेश्वरयोः विलक्षणतां न स्वीकुर्वन्ति । जीवेश्वरौ तु केवलमवस्थाभेदेन भिन्नौ स्तः, न तु स्वतः । अतः यत् पुरुषस्य ( जीवस्य ) लक्षणम्, तदेव ईश्वरस्य लक्षणम् । ईश्वरस्य

---

१. देहेन्द्रियादिकं सर्वं परार्थमतति, व्याप्नोत्यधिष्ठतीत्यात्मा ।

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७३

२. अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥

—श्रीमद्भागवतम्, ३, २६, ३

इच्छाशक्त्या समुत्पन्नो जीवः मायया अनेकैः रूपैः दृष्टिपथमवतरति। केवलं मिथ्यादृष्ट्या पुरुषः कर्तृरूपेण भोक्तृरूपेण वावबोध्यते। जीवेश्वरयोः वस्तुतः अणुमात्रमपि स्वाभाविको भेदो नास्ति। अवस्थाभेदस्य कारणेनैव इमौ द्वौ प्रतीयेते। एवमेव यदि प्रकृतिरपि एकैव स्वीक्रियेत, अवस्थाभेदेन भिन्नभिन्ना नानाविधा नाङ्गीक्रियेत, तदा द्वे प्रकृती स्वीकर्तव्ये स्याताम्। एका व्यामोहिका प्रकृतिः, अपरा मूलप्रकृतिः। किन्तु नेदं सिद्धान्तसङ्गतम्। भगवदिच्छया व्यामोहिकायां प्रकृतौ बद्धः सन् इच्छाव्यापारभूतायाः प्रकृतेः सम्मोहकैः गुणैः बद्धः सन् सर्वथा वशीकृतः पुरुष एव जीवावस्थां प्राप्नोति। यदा मूलप्रकृतेराश्रयेण पुरुषः स्वस्वरूपेस्थिस्तिष्ठति तदा जगतः कारणं भवति। अतस्तात्त्विकदृष्ट्या जीवेश्वरौ ( पुरुषेश्वरौ ) द्वावपि एकस्यैव तत्त्वस्य भिन्नभिन्ने नामनी स्तः। व्यावहारिकदशायां पुरुषः, पारमार्थिकदशायाञ्चेश्वरः कथ्यते। ईश्वर एव स्वयं भगवानस्ति। एवं जीव ईश्वरात्मकात् पुरुषतत्वात् भिन्नोऽस्ति यथा श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णचन्द्रेण प्रोक्तं 'ममैवांशो जीवलोके जीवभूतः सनातनः' ( श्रीमद्भगवद्गीता, १५।७ )। परन्तु चिद्रूपेण कारणेन, जीवः पुरुषस्यैवांशः। अतएव सजातीयः कथ्यते। 'त्वमात्मनात्मानमवेहि' इति श्रुतिप्रमाणेन अक्षरांशपुरुषांशभेदाभ्यां जीवोऽपि द्विधा। प्रकृतिपुरुषयोः संयोगोऽपि ईश्वरमन्तरा न सम्भाव्यते। न वायं प्रकृतिपुरुषसंयोगोऽनादिः। यतः अनादिसंयोगे स्वीकृते सति शास्त्ररोधः स्यात्, अपवर्गोऽपि नाङ्गीकर्तुं शक्यते। एवं सति न कोऽपि मोक्षे विश्वसिति, न वा कस्यापि मोक्षे इच्छा स्यात्। अयमात्मा स्वभावतः स्वतन्त्र एव। अधिगते मोक्षे पुनरयं न बन्धभाक् भवति किन्तु भगवदंशस्य विरोधेन जीवः समधिगतेऽपि मोक्षे बन्धने समापततीति वल्लभमतम्।

अनेन विवेचनेन वयं विजानीमहे यत् पुरुषस्य लक्षणस्वरूपविचारप्रकरणे पुरुषोत्तमाचार्याः सांख्ययोगमीमांसान्यायानां सिद्धान्तमुपस्थाप्य तमेव स्वमतधिया खण्डयामास। एतत् खण्डनं पुरुषोत्तमस्य स्वतन्त्रां विचारशैलीं प्रमाणयति यदयं प्रस्थानरत्नाकरकारः सांख्यशास्त्रस्य मीमांसाया वा नान्धानुकरणं विधत्ते। अयमाशयः—ये ये सिद्धान्ताः शुद्धा-

द्वैतसिद्धान्तानुकूलास्तान् स्वीकुर्वन् स्वमतप्रतिकूलान् सिद्धान्तान् खण्डयति ।

पुरुषस्तु नित्यशुद्धमुक्तचैतन्यस्वरूपोऽस्ति । प्रकृतौ महत्तत्त्वे वा प्रतिबिम्बितः सन् यः स्वात्मानं सर्वज्ञं सर्वकर्माणं मनुते, स ईश्वरः । रजस्तमोभ्यामुपरक्तोऽधर्मादियुक्तो महत्तत्त्वे प्रतिबिम्बितः सन् स एव जीवात्मा कथ्यते ।[1]

सांख्यशास्त्रिणः अव्यक्तमहत्तत्त्वाहङ्कारादीन् परार्थाख्यया प्रतिपादयन्ति । एतत् सर्वं चेतनस्य पुरुषस्य भोगाय परिकल्पिताः सन्ति । यथा पर्यङ्ककामिनीशयनस्नानादयः पदार्थाः परार्थाः कथ्यन्ते । सङ्घातस्तु सर्वथा त्रिगुणात्मकोऽविवेकी विषयः प्रसवधर्मी तथाऽचेतनो भवति, एवमेव अव्यक्तादयः सन्ति परार्थाः । यस्य कृते इमे परिकल्प्यन्ते, स एव पुरुषः ।[2] अयं पुरुषः अव्यक्तादिभ्यो विपरीतः, अतस्तेभ्यो भिन्नः । पुरुषस्त्वपरार्थोऽसङ्घातः । असङ्घातस्यायमर्थः-यदयं त्रिगुणमयो नास्ति, विवेकवानस्ति; विषयो नास्ति, सचेतनोऽस्ति, न चास्ति प्रसवधर्मी । एवं प्रकाशस्वरूप एव पुरुषः स्वीक्रियते, न तु जन्यज्ञानवान् । नो चेत् पुरुषोऽपि परिणामी भवति । सांख्यशास्त्रे अयमेव पुरुषः व्यापको नित्यः प्रतिशरीरं भिन्नभिन्नः स्वीकृतः, इति केन वा न ज्ञायते सांख्यसिद्धान्तविदा सांख्यसिद्धान्तानुमतो बहुपुरुषवादः ।[3]

पातञ्जलयोगसूत्रानुसारेण ईश्वरस्येदं लक्षणम्, 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' । परमपूज्यव्याससमाख्याभागप्रणीते व्यास-

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७८

२. सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥
Sāṅkhyakārikā 17 (Ed.) T. G. Manikar, Poona, 1964, p. 54-57

३. जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥—तत्रैव, पृ० ५७-५९

भाष्ये, भोजवृत्तौ, तत्त्ववैशारद्याञ्च अस्य सूत्रस्य अयमर्थो निश्चोतितो विद्यते। अविद्यास्मितारागद्वेषाभिनिवेशैः पञ्चभिः क्लेशैः, विहितप्रतिषिद्धव्यामिश्रैः (सुकर्मकुकर्मविकर्मादिभिः) कर्मभिः, जात्यायुर्भोगरूपैः विपाकाख्यैः कर्मफलैः, संस्कारादिभिश्च (आशयो हि नाम आसमन्ताच्छेरते संस्काराः यस्मिन्निति व्युत्पत्त्या भोजवृत्त्यनुसारेण चित्तं चित्तस्थाः संस्कारा वा), त्रिष्वपि कालेषु सर्वथाऽसंस्पृष्टः, सर्वेभ्यः पुरुषान्तरेभ्यो विशिष्टः सकलजगदुद्धरणक्षमः पुरुषविशेष एव ईश्वरः। सर्वेभ्यो बन्धनेभ्यः पञ्चभ्यः क्लेशेभ्यश्च सर्वथा शून्यः। कर्मणा कर्मविपाकेन आशयेन चाप्रभावितः। सर्वदैकरसो निर्विकारः। अस्मादेव हेतोः कर्माणि कर्मफलानि चेश्वरं न व्याप्नुवन्ति। सर्वदा पूर्णोऽनन्तोऽद्वितीयः स्वेच्छामात्रेण सर्वं जगत् परिचालयितुं प्रभवति। अनन्तशक्त्या अनन्तज्ञानेन च संयुतः सन् अनन्तकोटिब्रह्माण्डं नियमयति। इमान्येव कारणानि 'ईश्वरं' सर्वेभ्यः जीवात्मभ्यः भेदयन्ति।[1] योगशास्त्रे ईश्वरसिद्धिः अनुमानप्रमाणेन शब्दप्रमाणेन च कृता विद्यते। तत्रानुमानस्यायमाकारः—'अतीतानागतादि ज्ञानं निरतिशयज्ञानाभाववत्, सातिशयधर्मयुक्तत्वात्, महत्तत्त्वाल्पत्ववत्'। अत्र अतीतानागतादि ज्ञानं पक्षः, निरतिशयसाधनाभाववत्त्वं साध्यं, सातिशयधर्मयुक्तत्वं हेतुः, महत्तत्त्वाल्पवदिति दृष्टान्तः, इति समन्वयः। यत्र यत्र निर्विषयं ज्ञानं, यो यो निर्विषयज्ञानवान्, स एव ईश्वरः। एवं अनुमानप्रमाणेन ईश्वरस्य सामान्यरूपेण सिद्धौ सत्यां विशेषरूपेण ईश्वरस्य स्वरूपं वेदादिशास्त्राणां प्रमाणैः शुद्धाद्वैतवेदान्तसिद्धान्तविज्ञापनार्थं दार्शनिकानाञ्च आनन्दार्थमुपन्यस्यते।[2]

अयं हि तावत् सांख्यसिद्धान्तः। जडस्यापि दुग्धस्य वत्सवृद्धि-

---

१. (क) पातञ्जलयोगदर्शनम्, १, २४, सं० रामशङ्करभट्टाचार्यः, वाराणसी, १९६३

(ख) The Yoga System of Patañjali, Ed. James Hangton Woods, Cambridge, Mass, 1927, pp. 49–56

२. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १७८

निमित्तं गोस्तनात् प्रवृत्तिः सम्पद्यते। यथा गोस्तनात् जडं दुग्धं स्वतः प्रवहति, तथैव जडायाः प्रकृतेः पुरुषमोक्षनिमित्तं स्वयं प्रवृत्तिः सञ्जायते।[1] अमुं सिद्धान्तं योगिनो नाभिमन्यन्ते, सांख्यमते दृष्टान्तदार्ष्टान्तिकयोः महदन्तरत्वात्। दुग्धस्याधिष्ठात्री गौश्चेतना विद्यते। अतः चेतनाधिष्ठातृस्वरूपमीश्वरमन्तरा अचेतनायाः प्रकृतेः प्रवृत्तिरसम्भवा। सम्पूर्णाया जडायाः प्रकृतेः अधिष्ठात्रा केनापि विलक्षणेनैव पुरुषेण भाव्यम्, स एव ईश्वरः। एतादृशस्येश्वरस्य ऐश्वर्यमप्यनादि विलक्षणं निरतिशयञ्चास्ति। यतो ह्यनादिसम्बन्धस्तस्य सत्त्वोत्कर्षो भवति। अनेन प्रकारेण केवलं सात्त्विकोत्कर्षवत्परिणाम एव ईश्वरस्य भोगः सिद्धयति। यथा साधारणानां प्राणिनां चेतांसि सुखदुःखमोहरूपेण परिणतानि सन्ति निर्मलसत्त्वस्य धर्माख्ये परिणामे संक्रान्तानि भूत्वा चित्प्रतिबिम्बेन सम्बद्धानि सञ्जायन्ते, न तथेश्वरस्य सम्बन्धे काप्येतादृशी परिणतिः। अनेकेश्वरविषयिणी कल्पनापि न सङ्गच्छते, यतः ईश्वरेष्वनेकेषु सत्सु भिन्नभिन्नाभिप्राययुक्तत्वात् प्रत्येकमीश्वरस्य कार्योत्पत्तिरेव खपुष्पायिष्यते। अतएव योगशास्त्रपरम्परायां द्वे चिच्छक्ती स्वीकृते विद्येते—(क) नित्योदिता चिच्छक्तिः, (ख) अभिव्यंग्या चिच्छक्तिः। अभिव्यंग्यायाश्चिच्छक्तेः आधारभूतं सत्त्वं मोक्षप्राप्तिपर्यन्तं भोग्यं भवति। एतदेव सांख्यशास्त्रिणः सुखदुःखयोः भोक्तृरूपेण 'कर्मात्म'-पदेन व्याहरन्ति। सुखदुःखमोहात्मकस्य चित्तस्य इन्द्रियविषययोः संयोगेन विषयाकारपरिणतौ सत्यां सत्त्वे स्वाकारसमर्पणमेव 'भोगः' कथ्यते। अस्यैव भोगस्य 'सुखदुःखान्यतरसाक्षात्कारो भोगः' इत्येतादृक् लक्षणान्तरं दर्शनशास्त्रे दृष्टिपथमागच्छति। अयमेव जीवेश्वरयोः व्यवस्थाभेदः।

कुमारिलभट्टमतमनुसरन्तो भाट्टा मीमांसकाः प्राणादिहेतून्, सुखदुःखादिप्रयत्नान्, ज्ञानेन चात्मानं शरीरेन्द्रियादिभ्यो भिन्नं साधयन्ति। कोष्ठ्यवायोः उपर्यधस्तात् गमनागमनमेव प्राणापानशब्दवाच्यम्। तस्य

---

१. वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥

—Op. cit, Sāṅkhya-kārikā, 57

हेतुभूतं सुखदुःखादिज्ञानं च शरीरस्य धर्मा भवितुं न शक्नुवन्ति, यतो नेमे धर्माः शरीरस्थितिपर्यन्तस्थायिनः। अयं नियमो यत् 'ये ये गुणाः कस्यापि कार्यद्रव्यस्य विशेषगुणा भवन्ति ते ते गुणाः कार्यद्रव्यनाशेन विरोधिगुणान्तरोत्पत्त्या वा विनश्यन्ति'। प्राणादयस्तु शरीरनाशं विनापि विरोधिगुणान्तरोत्पत्त्यभावेऽपि विनश्यन्ति। अतो नेमे शरीरस्य विशेषगुणाः। एवमेव 'अयावच्छरीरभाविता', 'प्रत्ययत्वेऽपि स्वपरप्रत्यक्षता' इति हेतुद्वयं सुखदुःखादीनां शरीरगुणतां निवारयन्ति, अन्यगुणताञ्च बोधयन्ति। यः कोऽप्ययमन्यपदवाच्यः, स एव आत्मा। अयमात्मा देहेन्द्रियप्राणमनोभ्यो भिन्नः। अयमात्मा सर्वथाऽभ्रान्तः अहंवित्तिवेद्यः, ज्ञाता च योगिनां मानसप्रत्यक्षविषयतामापद्यते। अयमात्मा कदापि कस्यापि चाक्षुषप्रत्यक्षविषयतां नापद्यते। एकस्यैव ज्ञानस्य प्रत्यभिज्ञानेन आत्मन इन्द्रियेभ्यो भिन्नता सिद्ध्यति। मनस्तु सुखादिज्ञाने करणमात्रम्, अतः मनसि ज्ञातृत्वं नास्ति। एवं मीमांसकमतेन आत्मा नाना प्रतिपाद्यते।

साम्प्रतं न्यायसिद्धान्तं ब्रूमहे। नैयायिकानां सिद्धान्तेन अनुभवसंस्कारस्मृतीनां समानाधिकरण्येन कार्यकारणभावेन च आत्मनो नित्यत्वं सिद्ध्यति। यतो वयं प्रत्यक्षमनुभवामो यत् 'यमहं पूर्वमद्राक्षं तमेव स्पृशामि'। सद्योजातस्य बालकस्य स्तन्यपानादौ प्रवृत्त्याप्यात्मनो नित्यताङ्गीक्रियते। न्यायपरम्परायामात्मा विभुः। क्षपणकदिगम्बरजैनमतावलम्बिनां मतं नैयायिकाः कदर्थयन्ति। यतो मध्यमपरिमाणवादे स्वीकृते सति सङ्कोचविकासशील आत्मापि सावयवः सम्पत्स्यते। सावयवत्वाच्च हेतोर्नूनमनित्यत्वं स्यादात्मनः। द्विविधोऽयमात्मा जीवात्मपरमात्मभेदात्। नैयायिकानां परमात्मैव ईश्वरपदवाच्यः। न्यायवैशेषिकपरम्परायां अनुमानप्रमाणेन ईश्वरसिद्धिः क्रियते। यथा हि, क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत्, यद्यद् कार्यत्वावच्छिन्नं तत्तद् कर्तृजन्यत्वावच्छिन्नं यथा घटपटादयः पदार्थाः।[1] ईश्वरसिद्धावेतादृशा अनु-

१. न्यायसिद्धान्तमुक्तावली, सं० कृष्णवल्लभाचार्यः, बनारस, १९४०, पृ० १५–२३

मानाकाराः न्यायसिद्धान्तमुक्तावल्याम्, उदयनाचार्यप्रणीत-न्यायकुसुमाञ्जल्याम्, न्यायशास्त्रानुरागिभिः पण्डितवरैरनुसन्धेयाः । अनेन प्रकारेण कार्यलिङ्गकत्वेनानुमानेन सिद्ध ईश्वर एक एव, यो नित्यज्ञानस्य चिकीर्षाकृतियुतः । जीवात्मा तु प्रतिशरीरं भिन्नः । यतः सर्वे शरीरिणः 'स्थूलोऽहम्, कृशोऽहम्, श्यामोऽहम्, गौरोऽहम्, ब्राह्मणोऽहम्, पण्डितोऽहम्, युवाऽहम्' इत्यादि प्रतीतिं भजन्ते ।[1] एवं शरीरावच्छिन्न-सुखादिवैशिष्ट्येन अहंताप्रतीति विषयतागोचरे जीवात्मनि संख्या-परिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा इति चतुर्दशगुणाः स्वीक्रियन्ते, तेन च जीवात्मा नाना ।

सांख्ययोगमीमांसान्यायशास्त्रेषु जीवात्मनो नानात्वं मया सङ्क्षिप्य निरूपितम् । शुद्धाद्वैतवेदान्तिनैक एव पुरुषो जीवात्मा वेत्यमुमेव भेदं स्पष्टीकर्तुं प्रस्थानरत्नाकरे पूर्वोक्तानां शास्त्राणां मतानि विवेचितानि विद्यन्ते । अत्रेदं ध्येयं यद्यावदवध्यनुकूलस्तर्कस्तावदेव तेषां मतानां प्रामाण्यं शुद्धाद्वैतवेदान्ते स्वीकृतं मन्यते । श्रीपुरुषोत्तमाचार्याः सुस्पष्ट-मुदघोषयन् 'पूर्वोक्तेषु पक्षेषु तनुभृतां व्यापकत्वं श्रुतौ नानात्वं च यदुक्तं तन्न सङ्गच्छते' ( प्रस्थानरत्नाकरः, पृ० १८३ ) । श्रीमता वल्लभाचार्येण अणुभाष्ये, शास्त्रार्थनिबन्धे, विद्वन्मण्डने च अस्मिन्प्रसङ्गे स्वकीयः पक्षो महता फटाटोपेन संस्थापितः । तत्तेषु तेषु ग्रन्थेषु तन्मतजिज्ञासुभिरनु-सन्धीयताम् ।

शुद्धाद्वैतमतेन ब्रह्मैव जीवरूपेण प्रतीयते । आनन्दांशे तिरोहिते सति जीवत्वप्रतीतिः सम्पद्यते । समाविर्भूते च आनन्दांशे जीवः ब्रह्मवत् प्रतिभाति । जीवे सदंशे स्फुरति जीव एवाभासः कथ्यते । सच्चि-दंशयोः प्रकटितयोः सतोः प्रतिबिम्बः कथ्यते । सच्चिदानन्दांशानां प्राकट्येन जीवः ब्रह्मशब्देनाभिधीयते ।[2] जीवो हि लौकिकाभासरूपो लौकिकप्रतिबिम्बरूपो वावभासते । श्रीवल्लभाचार्या मायामनाद्यनिर्वाच्य-

---

१. सुखदुःखादिवैचित्र्याद् प्रतिशरीरं भिन्नः ।

—तर्कभाषा, सं० आचार्य विश्वेश्वर, बनारस, १९५३, पृ० १९०

२. अणुभाष्यम्, ब्रह्मसूत्रम्, २।३।५०

चिन्मात्रसम्बन्धिनीमनुमन्वते । अस्यामेव मायायां प्रतिफलितं प्रतिबिम्बं 'ईश्वरः' अभिधीयते । तथा च अस्या मायाया अविद्यारूपावरणविक्षेप-शक्तियुक्तेषु संख्यातीतेषु परिच्छिन्नप्रदेशेषु प्रतिफलितं चित्प्रतिबिम्बं 'जीवः' अभिधीयते ।

## ५. प्रकृतिः

प्रकृतिप्रधानमव्यक्तञ्चेति पर्यायाः । भगवान् जगदुपादानरूपेण प्रकृतिं विरचयामास । अतः प्रकृतिः भगवत एव मुख्यं स्वरूपम् । गुणानां साम्यावस्थायामधिगतं स्वरूपभूतं तत्त्वमेव प्रकृतिः ।[१] यथा सच्चिदानन्दस्वरूपे ब्रह्मणि क्रियाज्ञानानन्दरूपाः धर्मास्तिष्ठन्ति, तथैव त्रिगुणात्मिकायां प्रकृतौ अंशतः त्रयो गुणाः तिष्ठन्त्येव । एवं प्रकृतिगुणेषु धर्मधर्मिभावः सम्बन्धो निश्चीयते । एतदेव वल्लभीयवेदान्तस्य कापिलेय-सांख्यसिद्धान्तापेक्षया वैशिष्ट्यम् । भगवान् प्रकृतये त्रिविधां सृष्टिं विधातुं त्रीण्यैश्वर्याणि प्रदत्तवान् । इमे गुणाः सच्चिदानन्दांशाभासेन 'अंशाः' कथ्यन्ते, भगवतः समुत्पन्नायां शक्तौ प्रतिष्ठिताः सन्तस्ते प्रकृति-बोधकाः भवन्ति । केनापि कालादिना अनभिव्यक्तेयं प्रकृतिरव्यक्तशब्दा-परपर्याया । कृतौ व्यक्तायामङ्गीकृतायां सत्यामनित्यत्वमापद्येतेतिहेतुना पुनः सृष्टेरभावापत्तिः स्यादतो नित्येयं प्रकृतिः । प्रकृत्या सहैव काला-दयोऽप्युत्पद्यन्ते । प्रकृत्या सहैव कालादीनामपि स्थितिर्लयश्चेति स्पष्टम् । सदसद्रूपेयं प्रकृतिः कार्यकारणयोरभेदसम्बन्धेन ज्ञानहेतुः स्वीक्रियते । नो चेत् , संसारिणो जीवा विवेकमधिगन्तुमसमर्थाः सन्तः मुक्तिं कदापि नाधिगमिष्यन्ति । दर्शनान्तरेषु प्रकृतिपुरुषयोः स्वस्वामिभावः सम्बन्धः स्वीक्रियते, किन्तु शुद्धाद्वैतवेदान्ते तयोः संयोग एव सम्बन्धः ।

---

१. त्रिगुणमविवेकि विषय; सामान्यमचेतनं प्रसवधर्मि । व्यक्तं तथा प्रधानम्···।।

The Sāṅkhya-kārikā of Īśvara kṛiṣṇa, (Ed.) T. G. Mainkar, Poona, 1974

भगवान् साकारोऽस्ति। तेन प्रकृतिपुरुषावपि साकारौ। तयोरपि देहेन्द्रियाणि सम्भाव्यन्ते।[1]

वल्लभसम्प्रदायानुमते शुद्धाद्वैतवेदान्तानुसारिण्याः प्रकृतेऽरस्मिन् विवेचने श्रीमद्भागवतमहापुराणीयसांख्यस्य प्रभावः स्पष्टं परिलक्ष्यते। अत्र तदेव प्रधानसंज्ञकं तत्त्वं प्रकृतिः कथ्यते यत् त्रिगुणात्मकमव्यक्तं नित्यं सदसदात्मकं कार्यकारणरूपमस्ति, यस्मिंश्च निर्विशेष सत् तदेव तत्त्वं सर्वेषां विशेषधर्माणां आश्रयो भवतीति।[2]

प्रकृतेः द्वौ भेदौ स्तः। (क) व्यामोहिका मायारूपिणी प्रकृतिः। इयमज्ञानसंवलिता भवति। अनयैव विकासक्रमः समुत्पद्यते। भगवदिच्छया यदेयं मायाप्रकृतिः प्राबल्यं संदधाति, तदा पुरुषः बद्धामवस्थामापद्यते। (ख) मूलप्रकृतिः। भगवदिच्छयेयं स्वस्वरूपे स्थिता जगतः कारणं भवति। इयमीश्वरे संस्थिता, सर्वाण्यपि वस्तूनि ब्रह्माण्येवान्तर्हितानि पश्यति मनुते च। एवं जगदुत्पादनं ब्रह्मण एव प्रकृतिरित्यस्माकं सिद्धान्तनिस्यन्दः।

## ६. महत्

गुणानां क्षोभेण महदुत्पद्यते। सत्त्वरजस्तमांसि प्रकृतावुत्पद्यमाना गुणाः। एतेषु गुणेषु क्रियाशक्तिः प्रथमो विकारः, ज्ञानशक्तिर्द्वितीयो विकारः। द्वावपीमौ विकारावेकस्मिन्नेव सम्मिश्रणादेकमेव तत्त्वं स्वीकृतं विद्यते भगवान् स्वस्मिन् एकस्मादनेकभवनात्मिकायामिच्छायां सत्यां स्वमायया स्वस्वरूते संप्राप्तान् कालकर्मस्वभावान् स्वीचकार। भगवच्छक्त्या कालस्त्रीन् गुणान् क्षोभयामास। स्वभावस्तान् रूपान्तरितान् कृतवान्। कर्म च महत्तत्त्वं प्रादुर्भावयामासेतीयं प्रणाली।

महत्तत्त्वस्य किं स्वरूपं, कि शरीरमिति जिज्ञासायां हिरण्मयं स्वरूपं

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १८५–१८६

२. यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्॥—श्रीमद्भागवतम् ३।२६।१०

तेजोमयं च शरीरमिति निर्दिशामि। श्रीमद्भागवतस्य विवेचनमधिकृत्य प्रस्थानरत्नाकरकारणेन महत्तत्त्वस्य आध्यात्मिकाधिदैविकाधिभौतिक-भेदेन त्रीणि लक्षणानि स्वीकृतानि[१]। श्रीमद्भागवते प्रतिपादितसंख्यानु-सारेण यदा परमेश्वरात् मायायां चिच्छक्तिरूपेण वीर्येण तेजोमयं महत्तत्त्वमुत्पन्नं तदा लयविक्षेपशून्यं जगदङ्कुरस्वरूपं महत्तत्त्वं स्वस्मिन् संस्थितं सम्पूर्णं विश्वं प्रकटयितुं स्वस्वरूपावरणं प्रलयकालीन-मन्धकारं स्वेन तेजसा पपौ। भागवतीयेऽस्मिन् श्लोके त्रीणि पदानि विचारणीयानि सन्ति। तत्र 'कूटस्थ'-, 'जगदङ्कुरत्व'-, 'तामस'-पदैः महत्तत्त्वस्य स्वरूपलक्षणं प्रतिपाद्यते। एतदेव आध्यात्मिकं लक्षणं कथ्यते। इमानि त्रीणि पदानि यथासंख्यक्रमेण सात्त्विकराजसिकतामसि-कानि सन्ति, तथा च स्वाधारीकृतस्य विश्वस्य अभिव्यञ्जकानि तमो-नाशकानि च स्वीकृतानि सन्ति, 'यत् शुद्धसत्त्वगुणमयं स्वच्छं शान्तं भगवत्प्राप्तेः स्थानरूपं चित्तं, तदेव महत्तत्त्वम्'। एतदेव वासुदेवनाम्नाभि-ज्ञायते।[२] अस्मिन् श्लोके महत्तत्त्वस्य आधिदैविकं लक्षणं सङ्केतितं विद्यते, यतः वासुदेवस्याविर्भावस्थानं शुद्धसत्त्वात्मकं विद्यते। एतदेव निरीश्वरवादिनः सांख्यशास्त्रिणः कार्येश्वररूपेणाङ्गीचिकीर्षन्ति। 'यथा पृथिव्यादिपदार्थसंसर्गात्पूर्वमापः स्वकीयायां स्वाभाविक्यामवस्थायां स्वच्छातिस्वच्छाः विकारशून्याः परमशान्तास्तिष्ठन्ति, तथैव स्वाभावि-कधर्मदृष्ट्या चित्तमपि स्वच्छातिस्वच्छं विकारशून्यं परमशान्तं च कथ्यते'। एतन्महत्तत्त्वस्य आधिभौतिकं लक्षणम्। अध्यात्मनि महत्तत्त्वं 'चित्तं' कथ्यते, अधिभूते 'महत्तत्त्वं' कथ्यते, अधिदेवे 'वासुदेवः' कथ्यते। वासुदेव एव चित्तस्याधिष्ठाता। एवं महत्तत्त्वस्य विषय एव तस्य आध्यात्मिकं रूपम्, वासुदेव एव तस्य आधिदैविकं रूपम्, ब्रह्म-शरीरात्मकं चित्तमेव तस्य आधिभौतिकं रूपम्।

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १८७

२. विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः।
स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः॥

—श्रीमद्भागवतम् ३।२६।२०-२२

## ७. अहङ्कारः

अहङ्कारो महत्तत्त्वादुत्पद्यते। प्रकृतेर्महत्तत्त्वं, महत्तत्त्वादहङ्कारः। एवमहङ्कारो गुणानां क्षोभेण समुत्पन्नः प्रकृतेरेव विकारः। रजस्तमसोः प्रवृद्धयोः सतोः महत्तत्त्वस्य या विकृतिः, तया ज्ञानक्रियाद्रव्यरूपस्तमःप्रधानोऽहङ्कारः समुत्पन्नः। अयं तन्मात्रेन्द्रियमनसां त्रयाणां कारणं सन् चिदचिन्मयः कथ्यते। चिदाभासेन हेतुना चिदचिद्ग्रन्थिरूपोऽयम्। अस्य अहङ्कारस्य त्रयो भेदाः सन्ति ये तन्मात्रा इन्द्रियाणि मनश्चोत्पादयन्ति।[१]

( क ) *आध्यात्मिकोऽहङ्कारः*। अयं त्रिविधः।

( अ ) *सात्त्विक आध्यात्मिकोऽहङ्कारः*। अस्मिन् सत्त्वगुणस्य प्राधान्यं विजृम्भते। मनः समुत्पादयिताहङ्कारः सात्त्विकोऽहङ्कारः। अयमेव वैकृतो वैकारिको वा कथ्यते। मनःपदं देवानामुपलक्षकम्। तेन दिगाद्येकादशदेवानां उत्पत्तिरपि सात्त्विकस्यैवाहङ्कारस्य धर्मः।[२]

( आ ) *राजस आध्यात्मिकोऽहङ्कारः*। इन्द्रियाणामुत्पादयिताहङ्कारः राजसोऽहङ्कारः कथ्यते। अयं तेजसा युक्तः आधिभौतिकं रूपं भजते। अस्मिंश्च रजोगुणस्य प्राधान्यं विलसति।

( इ ) *तामस आध्यात्मिकोऽहङ्कारः*। तन्मात्रा उत्पादयिताहङ्कारस्तामसोऽहङ्कारः कथ्यते।

अनेन स्पष्टं यत् सात्त्विकादहङ्कारादेकादशानां देवानां मनसश्चोत्पत्तिः सञ्जायते। राजसादहङ्कारादिन्द्रियाणामुत्पत्तिः। तामसादहङ्कारात् पञ्चतन्मात्राणामुत्पत्तिः। अत्र कपिलप्रतिपादितात् सांख्याच्छुद्धाद्वैतवादिनां विप्रतिपत्तिः स्फुटा परिलक्ष्यते। शुद्धाद्वैतवादिनां सिद्धान्तो भागवतदर्शनेनानुप्राणितः, इत्यत्र नास्ति नः सन्देहकणिकापि।

---

१. तत्तन्मात्रेन्द्रियमनोजनकतम आदिगुणवत्त्वम्। प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १८८

२. देवास्तु, दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाश्चन्द्रश्चेत्येकादश ज्ञेयाः। तत्रैव, पृ० १८८

( ख ) *आधिदैविकोऽहङ्कारः।* अयं सङ्कर्षणरूपमधितिष्ठते। श्रीमद्भागवतस्य सांख्ये भूतेन्द्रियमनोरूपकोहङ्कार एव सङ्कर्षणनामा सहस्रशीर्षोऽनन्तदेवः कथ्यते।[1]

( ग ) *आधिभौतिकोऽहङ्कारः।* अस्मिन् अहङ्कारे कर्तृकरणकार्याणां त्रिपुटी तिष्ठति प्राणिषु सात्त्विकोऽहङ्कारः कर्तृत्वस्य लक्षणं विद्यते। अहङ्कारवशादेव जीवः कर्तारमात्मानं मनुते, तमेव च बुद्धिविषयतामापादयति। राजसोऽहङ्कारः करणत्वस्य लक्षणमस्ति। तामसोऽहङ्कारः कार्यत्वस्य लक्षणम्।[2] इमानि त्रीणि लक्षणानि धर्मपुरःसरमवगन्तव्यानि। धर्मपुरःसरे विवेचने अहङ्कारस्य भौतिकं स्वरूपं शान्तघोरविमूढमस्ति।[3] प्राणबुद्धी अस्यैव रूपान्तरे स्तः।[4] सर्वेषामिन्द्रियाणां बलप्रदानकाः प्राणाः क्रियाशक्तियुताः। अहङ्कार एव अज्ञानसृष्टेर्वैविध्यस्य मूलकारणम्। अस्तिनास्तिरूपेण, सगुणनिर्गुणरूपेण, भावाभावरूपेण, सत्यमिथ्यारूपेण यावन्तो वादा दर्शनशास्त्रपरम्परायां विकीर्णास्तेषां मूलकारणं भेददृष्टिरेवेति सत्यम्।

## ८–१२. तन्मात्राः

पञ्चभूतानां सूक्ष्मावस्था तन्मात्रा कथ्यते। इयं तामसादहङ्कारादुत्पद्यते, अन्यानि च तत्त्वानि समुत्पादयति। शब्दस्पर्शरूपरसगन्धाः पञ्च तन्मात्राः पञ्चभूतसम्बद्धाः। पञ्चभूतानां सूक्ष्मतत्त्वमेव तन्मात्रशब्देनाभिधीयते। इमास्तन्मात्रा एतावत् सूक्ष्मा भवन्ति यदेतासां चाक्षुषं प्रत्यक्षं न सम्भाव्यते। केवलमनुमेयाः। योगिनस्तासां चाक्षुषं

---

१. सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते।
सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम्॥—श्रीमद्भागवतम्, ३।२६।२५

२. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १८८–१८९

३. कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम्।
शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः॥
—श्रीमद्भागवतम्, ३।२६।२६

४. ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणश्च तेजसौ॥—तत्रैव, २।५।३१

प्रत्यक्षं कर्तुं प्रभवन्ति । सांख्यदर्शनानुसारेण साधारणानां प्राणिनां दृष्ट्या नेमा विषयाः । विशेषायामवस्थायामेवैतेषां प्रत्यक्षं सम्भवति । एतदेव मतं वल्लभसम्प्रदायेऽप्यङ्गीकृतमास्ते ।[1] एतत्स्मरणीयं यदेतासां अदृश्यसारतत्त्वभूतानां तन्मात्राणामनुमानं दृश्यमाणैः पदार्थैः सम्पद्यते । एतासु प्रत्येकं केवलमेकेनैवेन्द्रियेण सम्बद्धा भवति । मूर्तानि पञ्चभूतानि एकाधिकैरिन्द्रियैः सम्बध्यन्ते । अनेनैव कारणेन विशिष्टाद्वैतसिद्धान्ते तन्मात्रा अमूर्ततत्त्वरूपेण स्वीकृताः सन्ति ।

( क ) शब्दः । शब्दो हि नाम श्रोत्रेन्द्रियेण ग्रहणयोग्यो धर्मः । शब्दस्यापरं लक्षणमाकाशमास्ते । द्रष्टृदृश्ययोर्लिङ्गं बोधको वा शब्दः । यथा 'गतो गजः' इति शब्दश्रवणकालसमकालमेव गृहाभ्यन्तरस्थो जनो गृहात् बहिः स्थितं गजं द्रष्टुः स्वरेणानुमिनोति, यथा वा टङ्कारादिशब्दश्रवणेन तच्छब्दसमुत्पादयितुः 'धनुषः' ज्ञानं सम्पद्यते । अयं शब्दः रूपसृष्टावन्तर्गच्छति । कार्यगतत्वेन कार्यरूपत्वेन वा 'सविशेषः' भवति । अतएवायं पञ्चभूतानां गुणः, पञ्चभूतेषु च स्थितः ।

नैयायिकाः शब्दमाकाशस्य गुणमङ्गीकुर्वन्ति—'शब्दगुणकमाकाशम्' ।[2] परन्तु पौराणिकवचनप्रामाण्यपरम्पराया अनुकरणमेव कामयन्ते पुरुषोत्तमाचार्याः । यत्र यत्र पुराणानां न्यायवैशेषिकदर्शनानां वा सिद्धान्तेषु विप्रतिपत्तिरुपलभ्यते, तत्र तत्र पुरुषोत्तमाचार्याः पुराणानामेव प्रामाणिकतां स्वीकुर्वन्ति । यतो हि पुराणानि वेदानां हृदयानि सन्ति । अतः पुराणानि वेदस्वरूपभूतानि । यथा वेदाः प्रमाणम्, तथैव पुराणानि प्रमाणम् । दर्शनस्यापेक्षया पुराणानां प्राबल्येन तानि सर्वाणि

---

१. तस्य मात्रा गुणशब्दो लिङ्गं यद् द्रष्टृदृश्ययोः ।

—श्रीमद्भागवतम्, २।५।२५

2. A Primer of Indian Logic, Kuppuswāmī Śāstri, Madras, 1951, p. 6

दर्शनानि उपेक्षणीयानि यानि वेदवाक्यविरोधीनि सन्ति। वेदाविरोधि दर्शनमेव तन्त्रम्।[1]

अनेन प्रकारेण शुद्धाद्वैतवेदान्ते भेर्यादेः समुत्पन्नः शब्दः पृथिव्या गुण, यतः भेरी हि नाम पार्थिवं वस्तु। एवमेव कार्यरूपिणि वस्तुनि विद्यमानः शब्दो विसरणशीलः सावयवश्च विद्यते। कार्यगतः शब्दस्तु उदात्तानुदात्त–स्वरित–कम्पित–षड्ज–ऋषभ–गान्धार–मध्यम–पञ्चम–धैवत–निषादादि भेदेनानेकधा भवति। अयं शब्दः स्पर्शवानपि भवति। यथा गुलिकाप्रक्षेपिण्या लोहसुषेः समुत्पन्नस्य शब्दस्य, हृदयं वेधयितुर्वाक्यादुत्पन्नस्य स्पर्शस्य वा त्वचानुभवो भवति, एवमेव शब्दे स्पर्शोऽपि गुणस्तिष्ठति। एतदस्मिन्प्रसङ्गे विद्वद्भिर्ध्येयं यदियं मान्यता शुद्धाद्वैतवेदान्तस्य स्वयं स्वकीया स्वोपज्ञा मान्यता विद्यते। अस्माकं वल्लभसम्प्रदायानुयायिनां एतत्कथनं विद्यते यदेतादृशीं कल्पनां विना 'न कश्चिन्मर्मणि स्पृशेत्' इत्येतत् स्मृतिवाक्यं न सङ्गच्छेत।

कुमारिलभट्टानुयायिनो भाट्टमीमांसकाः शब्दं द्रव्यमनुमन्वते। तेषामयं तर्को यच्छब्दस्य श्रवणं प्रत्यक्षं साक्षात्सम्बन्धेन श्रोत्रेन्द्रियेण सम्पद्यते। घटपटादिपदार्थवत् सङ्कोचविकासात्मकः परिमाणत्वेन हेतुना भस्त्रावत् शब्दोऽपि द्रव्यमेव, न तु गुणः। वायोरनुसारेणैव शब्दे विकासात्मकपरिमाणस्योत्पत्तिर्भवति। यदा शब्दो वीचितरङ्गन्यायेन कदम्बकोरकन्यायेन वा श्रोत्रेन्द्रियमधिगच्छति तदा तस्य श्रावणं प्रत्यक्षं भवति। अत्र प्रस्थानरत्नाकराणामयमभिसन्धिः, यद्यपि मीमांसकानामस्यां युक्तिप्राणाल्यां महालाघवो विद्यते, तथापि प्रत्यक्षेणानधिगतपरिमाणकल्पनया शब्दस्य द्रव्यत्वं सिद्ध्यति। अतः अन्योन्याश्रयदोषप्रसङ्गः स्यात्। अपरञ्च तादृशपरिमाणवतः शब्दस्य वायुना नयनेन तुल्यस्वर-

---

१. वेदाद्यविरोधस्यैव तन्त्रत्वं, पुराणस्य तु वेदहृदयत्वात् वेदरूपत्वाच्च दर्शनापेक्षया, प्रबलत्वात् तद्दर्शनमुपेक्ष्यमेव।

—प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १९०

श्रवणप्रसङ्गोत्पत्तिः स्यात्, ह्रस्वदीर्घप्लुतादिव्यवस्थापि व्याहन्येत। अतः भाट्टमतं नैव युक्तिसङ्गतमिति शुद्धाद्वैतवादिनः।[1]

श्रीमद्वल्लभाचार्या वेदानां नित्यत्वं स्वीचक्रिरे। शब्दोऽपि वेदानामंशभूतत्वेन हेतुना नित्यः। शब्दस्य आविर्भावतिरोभावधर्मेण लोके तस्य श्रवणाश्रवणे भवतः। भगवान् हृदाकाशे नादरूपेण अभिव्यक्तो भवति। सर्वप्रथम शब्दोऽव्यक्तायामेवावस्थायां तिष्ठति। तदनन्तरं विभिन्नवर्णादिसङ्कल्पात्मकं मनोमयं सूक्ष्मं रूपं प्रपद्यते। ततश्च तदेव सूक्ष्मं तत्त्वं भगवतो मुखारविन्देन प्रकटितं सत् वर्णमात्रास्वरादिरूपेण स्थूलरूपेण प्रकटितं भवति, व्यापकत्वेन च हेतुना सर्वेषां प्राणिनामन्तः प्राणरूपेण तिष्ठति। श्रोत्रवृत्तिनिरोधेन अन्तर्यामिरूपेण विद्यतो भगवतो द्वारेणैव जीवस्तं शृणोति, अन्यथा कथमपि श्रोतुं न प्रभविष्यतीति निश्चप्रचम्।

नाद एव स्फोटः। स्फोट स्यायं सिद्धान्तो वैयाकरणानां नूनमतीव प्रशस्यः सिद्धान्तो विद्यते। अनेनैव वर्णानां पदानां वाक्यानाञ्चार्थाः परिस्फुटन्ति। नाद एव सुषुम्णा नाड्या मूलाधारे हृदाकाशे कण्ठे मुखे च परापश्यन्तीमध्यमावैखरीरूपेण प्रकटितो भवति।[2] यथा ब्रह्म सच्चिदानन्दरूपं भवति तथैव शब्दरूपिणो ब्रह्मणोऽपि वर्णपदवाक्यरूपेण त्रीणि घटकानि भवन्ति। एतत्स्मरणीयं यदिमे भेदाः काल्पनिकाः सन्ति, न तु वास्तविकाः। शब्दस्य सार्वत्रिकी गतिः। तेन अबाधिता प्रत्यभिज्ञैव प्रमाणम्। अत एकस्मिन्नेव समये अनेकेषु स्थानेषु शब्दस्योपस्थितिरनुभूयते।[3]

शब्दस्योत्पत्तिर्वायुनैव। वायुः शब्दस्योत्पत्तौ बाह्याभ्यन्तररूपेण

---

१. तथैव, पृ० १९१

२. (क) स्फोटसमाम्नायः।

—रसिकविहारी जोशी, सागरिका, १, २ पृ० १५९–६४

(ख) Notes on Guru, Dīkṣā and Mantra, Rasik Vihari Joshi, Ethnos, Stockholm, 1972, 1–4, p. 108–110.

३. तत्त्वार्थदीपनिबन्धः, सर्वनिर्णयप्रकरणे, कारिका १५४–५५

निमित्तकारणं भवति । पञ्चमहाभूतानि शब्दस्य समवायिकारणानि सन्ति। पञ्चमहाभूतेषु आकाशं विशिष्य कारणमस्ति, अवशिष्टानि च चत्वारि भूतानि सामान्यरूपेण कारणतामापद्यन्ते । शब्दो यस्मिन् स्थाने उत्पद्यते ततः किञ्चिद्दूरपर्यन्तं स्वकीयेन नैसर्गिकेण च स्वरूपेणैव गच्छति । तदनन्तरं वायुरमुमधिकाधिकं दूरं नयति । स्थानान्तरे गच्छन् शब्दःस्वकीयं कञ्चिदंशं विभिन्नेषु श्रोत्रेषु विलीनं कुर्वाणो गच्छति। अनेन विधिना शब्दस्य सर्वेष्वंशेषु विलीनेषु सत्स्वयमागच्छतां निर्गच्छताञ्च जनानां श्रावणप्रत्यक्षताभाजनतां न प्रपद्यते । अन्ततोगत्वा स्वभावेनैव कालेन वा हेतुना तिरोभवति ।

( ख ) *स्पर्शः* । त्वगिन्द्रियग्राह्यो गुणः स्पर्शः । वायोस्तन्मात्रैव स्पर्शस्य लक्षणमङ्गीक्रियते । अयं कार्यगतो विशेषश्चास्ति । कार्यरूपेणायं चतुर्णां भूतानां गुणः । अतः शब्दे व्याप्यं गुणत्वं, रूपे च व्यापकत्वं गुणत्वमेवास्य लक्षणम् । अयं स्पर्शः मात्रारूपेण मृदुकठिनशीतोष्णाभेदेन चतुर्धा भवति । गुणरूपेण तु स्पर्शो मृदु-पिच्छिल-कठिन-शीतोष्णानुष्णाशीत-लघु-गुरुसंयोगादिभेदेनानेकधा ।

मृद्वादिशब्दा धर्मवाचकाः सन्ति । प्रचुरेण प्रयोगेणेमे धर्मिणमपि बोधयन्ति । मृदुस्पर्शः कोमलातिकोमलो भवति, यथा मालतीपुष्पादावयं प्रगाढस्पर्शेन गृह्यते । पिच्छिलस्पर्शोऽपि मृदुस्पर्शस्यैव भेदः, यथा कौशाम्बरस्य स्पर्शः । अनुष्णाशीतस्पर्शस्तु वायौ पृथिव्याञ्चोपलभ्यते । लघुः स्पर्शः वायुतेजोजलभूमिषु तिष्ठति । यथा सूक्ष्मवायोः स्पर्शः, अग्नेर्ज्वालायाः स्पर्शः, तूलस्य स्पर्शः । लघुत्वेन अग्निरूर्ध्वं गच्छति जलस्य लघुस्पर्शस्यानुभवः कूपगङ्गायमुनादिसरिज्जलपानसमये मुखेन त्वाचप्रत्यक्षेण प्रतीयते । एवमेव गुरुस्पर्शोऽपि जलवायुभूमिषु तिष्ठति । यद्यपि शास्त्रान्तरेषु गुरुत्वं स्पर्शाद्भिन्नो गुणः स्वीक्रियते; तत्रायं हेतुः यत् गुरुत्वस्य ज्ञानं केवलं सन्तोलनादेव सम्भाव्यते न तु स्पर्शमात्रेण । शुद्धाद्वैतवेदान्ते गुरुत्वं स्पर्शस्येव भेदोऽभिमन्यते । करतले संस्थापितयोः फलपुष्पयोः सन्तोलनमन्तरापि नूनमनुभवः सम्पद्यते । यत्र खलु स्पर्शं विनापि गुरुत्वं परिज्ञायते, तत्र अनुमानेनैव प्रमाणेन न तु

प्रत्यक्षेणावर्थक्रियाकारितेतिसिद्धान्तः । यथा पर्वते अग्नेरुष्णस्पर्शस्य ज्ञानम् । स्पर्शवत् संयोगोऽपि गुणो वल्लभवेदान्तपरम्परायां न स्वीक्रियते । ननु संयोगस्पर्शयोः प्रयोगः कथमुपलभ्यते इति चेत् , व्यावहारिक एव प्रयोगः । संयोगजस्पर्शरूपेण वल्लभवेदान्तिनो नाङ्गीकुर्वन्ति । चक्षुर्गोचरीकृतं वस्तु त्वचापि त्वगिन्द्रियगोचरीक्रियते । अतश्चक्षुष्वपि त्वगिन्द्रियं तिष्ठति । संयोगो हि नाम स्पर्शातिरिक्तं किमपि गुणान्तरं नास्ति । एवमेव श्लेषेऽपि विभागाभाव एव । यथाङ्गुलीषु संयुक्तासु सतीषु त्रिचतुः संख्यावबोधः सम्पद्यते । अङ्गुलीषु विभक्तास्वपि सतीषु त्रिचतुः संख्यावबोधः सम्पद्यते, किन्तु सर्वथा संश्लिष्टासु तासु नैतादृशोऽवबोधः । स्नेहोऽपि स्पर्शस्यैव भेदः, यतः स्नेहस्यापि ज्ञानं त्वचैव सम्पद्यते ।[1]

(ग) रूपम् । 'चक्षुर्मात्रग्राह्यो गुणो रूपम्' इति नैयायिकाः । चक्षुर्ग्रहणयोग्यो गुणो रूपं इति वल्लभीयाः । अस्य लक्षणं तु तेजस्तन्मात्रत्वं ब्रूमहे । यस्मिन् द्रव्ये रूपं तिष्ठति तदाकृत्यनुरूपेमेवास्याप्याकृतिः । कार्यगते रूपे शुक्ल-नील-पीत-हरित-लोहित-भास्वरादिभेदेन, तेषां परस्परं सम्मिश्रणेन अनन्तभेदा रूपस्य चित्रकलाविशेषज्ञेषु सुप्रसिद्धि गताः । अतः 'स्पर्शव्याप्यगुणत्वं', 'रसव्यापकगुणत्वं च' रूपस्य लक्षणं पर्यवस्यति । चित्रमप्येकमतिरिक्तं रूपं स्वीक्रियते । भास्वरं रूपमन्यद्रूपान्तरं प्रकाशयितुं क्षमते । अतः स्वाश्रयादधिकं देशं व्याप्नोति । इदं भास्वरं रूपं विसरणशीलं भवति । यथा मणिप्रभायां रूपमिदं निश्चीयते ।[2]

(घ) रसः । रसनेन्द्रियग्राह्यो गुणो रसः । 'जलतन्मात्रत्वं' अस्य लक्षणम् । स्वकीये तन्मात्रास्वरूपे रसोऽव्यक्तो मधुरश्चास्ति । मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधो रसो न्यायवैशेषिकपरम्परायां स्वीक्रियते । वल्लभवेदान्तपरम्परायां तु कार्यरूपेण मधुराम्लकटुतिक्तक्षारकषायमिश्रभेदेन सप्तविधो रसः । अवान्तरेण तु भेदेनायमनन्तः ।

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० १९२–१९६

२. तत्रैव, पृ० १९६–२००

द्राक्षाशर्करादुग्धादिपदार्थेषु नानाविधा रसस्योपलब्धिरनुभवविषयतामापद्यते । अतः 'गन्धव्यापकगुणत्वम्' 'रूपव्याप्यगुणत्वम्' च रसस्य लक्षणम् । जलेऽव्यक्तो मधुरश्च रसः । आधारभूते वस्तुनि धर्मसम्बन्धेनापि रसान्तरप्रतीतिः सञ्जायते ।[1]

(ङ) *गन्धः ।* घ्राणेन्द्रियग्राह्यो गुणो गन्धः । पृथिवीतन्मात्रत्वं तल्लक्षणम् । व्यक्ताव्यक्तरूपेण गन्धो द्विविधः । कार्यरूपेण करम्भपूतिसौरभ्यशान्तोग्राम्लभेदेन षड्विधो गन्धः । अवान्तरास्तु भेदा अनन्ताः । रसे व्याप्यगुणत्वमप्यस्य लक्षणं कर्तुं शक्यते । करम्भस्तु मिश्रगन्धारपर-पर्यायो व्यञ्जनादिषु प्रसिद्धः । यथा दधिमिश्रितसक्तुगन्धः, सम्मिश्रितानां शाकानां वा गन्धः । लवङ्गादिषु सौरभ्यस्य सत्ता न तु पूतित्वस्य । पूतिगन्धस्तु लशुनादौ, यत्र दुर्गन्धस्योपलब्धिः, न तु सुगन्धस्य । पूतिसौरभ्ययोः शान्तोग्रभेदेन द्वौ भेदौ स्तः । पर्युषिते सूपे अम्लगन्धोपलब्धिः । एवमेव धूमधूपयोः अनेकविधो गन्ध उपलभ्यते । गन्धस्तावत् स्वाश्रयादधिकं देशं व्याप्नोति । अस्य आश्रयभूतस्य द्रव्यस्य सन्निधावनुपस्थितायामपि सत्यां तस्मिन् द्रव्ये स्थितस्य गन्धस्य भानं सम्पद्यते । यथा नीलेन्दीवराणां सुगन्धो दूरत एव घ्राणेन्द्रियगोचरो भवति । नैयायिकानां मतेन 'गुणाश्रयो द्रव्यम्' । शुद्धाद्वैतमतेन गुणो द्रव्यं परित्यज्य अन्यत्रापि गन्तुं शक्नोति । यथा पुष्पद्रव्यस्य गुणरूपी सुगन्धः पुष्पद्रव्यात् दवीयस्यपि स्थाने सम्प्राप्यते ।[2]

तन्मात्राणां सम्बन्धे एतत्स्मरणीयमास्ते यत्तन्मात्रा इन्द्रियाणां कृते तावत्कालपर्यन्तं नोत्तेजिका भवन्ति यावत्कालपर्यन्तं परमाणूनां निर्माणार्थं परस्परं संयुक्ता न भवन्ति । अयमाशयः,—अहङ्काराच्छब्दस्य तन्मात्रा समुत्पद्यते । अहङ्कारयुक्तशब्दतन्मात्रायाः स्पर्शतन्मात्रोत्पत्तिः । अस्यां द्वयोरपि शब्दस्पर्शयोः गुणा विद्यन्ते । एवमेव परवर्तिनीनां तन्मात्राणामुत्पत्तौ पूर्ववर्तिन्यस्तन्मात्राः कारणरूपेण सम्मिलन्तीति तन्मात्राविचारविमर्शः ।

---

१. तत्रैव, पृ० २००

२. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० २०२

## १३–१७. महाभूतानि

आकाशादिपञ्चकान्यतमत्वं सविशेषशब्दादिगुणयुक्तत्वं वा 'भूतस्य' लक्षणम्। आकाशवायुतेजोजलपृथिवीति पञ्चमहाभूतानि सन्ति। पञ्चतन्मात्राभ्यः पञ्चभूतान्याविर्भवन्ति। शब्दतन्मात्रात् आकाशस्योत्पत्तिः। अतएव 'शब्दगुणकमाकाशम्'। आकाशस्य गुणः शब्दः श्रोत्रेन्द्रियेण श्रूयते। स्पर्शशब्दतन्मात्राभ्यां तेजस उत्पत्तिः। यस्य गुणाः शब्दस्पर्शरूपाणि। रसतन्मात्रातः शब्दस्पर्शरूपतन्मात्राणाम्। संयोगेण जलमुत्पद्यते। यस्य गुणाः शब्दस्पर्शरूपरसाः। गन्धतन्मात्रातः शब्दस्पर्शरूपरसतन्मात्राणाम्। संयोगेण पृथिव्याः समुत्पत्तिः। यस्या गुणाः शब्दस्पर्शरूपरसगन्धाः। अयमाशयः,—प्रत्येकं परवर्तिनि भूते पूर्ववर्तिनो भूतस्य गुणाः समागच्छन्ति। प्रत्येकं तत्त्वं परस्परं सम्मिश्रितं सत् अग्रे सरति।

( क ) *आकाशम्*। 'अवकाशदातृत्वम्', 'बहिरन्तर्व्यवहारविषयत्वम्', घ्राणेन्द्रियान्तःकरणाधारत्वम्' वा आकाशस्य लक्षणम्। अस्मिन् लक्षणत्रये प्रथममवकाशदातृत्वं लक्षणमाधिदैविकं लक्षणं विद्यते। द्वितीयं आधिभौतिकं लक्षणम्। एतदेवाकाशस्य स्वरूपलक्षणम्। यच्च व्यवहारोपयोगितां लभते। तृतीयं घ्राणेन्द्रियान्तःकरणाधारत्वमाध्यात्मिकं लक्षणं विद्यते।

शुद्धाद्वैतवेदान्तानुसारेणाकाशं जन्यम्, अतएवानित्यं न तु वैशेषिकमतवन्नित्यम्। यतो ह्याकाशे विकारित्वं सिद्ध्यति। विकार एव लौकिकव्यवहारस्य विषयो भवति। 'आत्मन आकाशः सम्भूतः' इति श्रुतिप्रमाणेन आकाशस्योत्पत्तिः सिद्ध्यति। सर्वेऽपि समुत्पन्नाः पदार्था अनित्याः, यथा घटपटादयः। यदुत्पद्यते तद् विनश्यतीति नियमात्।

अस्माकं मतेनाकाशे रूपाभावः। यथा कश्चिदुपरिस्तादवलोकयञ्जनः केवलं 'आकाशं पश्यामि' इत्यनुभवति, तदा आकाशावलोकनात्मक एव प्रत्ययः सञ्जायते। 'नीलमाकाशं पश्यामि' इत्यस्मिन्ननुभवेऽपि गुणित्वेनाकाशस्य भानं न भवति, यतः गुणित्वेन नीलसत्तायाः प्रामाण्यं

नास्ति । यदि कश्चिदनुमानप्रमाणेन आकाशे नीलवर्णं साधयितुं प्रयतेत, अनुमानस्य चाकारमेव प्रतिपादयेत्, 'आकाशं नीलवर्णवत्, वायुभिन्नत्वे सति महत्परिमाणवत्वात्', इत्ययं हेतुः सद्धेतुर्नास्ति, अपि तु सत्प्रतिपक्षत्वात् हेत्वाभासमात्रं सदाकाशे रूपं साधयितुं न क्षमते। फलतः आकाशे नीलवर्णप्रतीतिः केवलं भ्रमात्मिका प्रमा। आकाशं तु परममहत्परिमाणवत्वात् 'नीरूपम्' अस्ति। आकाशे नीलवर्णप्रतीतिः केवलं चक्षुषोऽसामर्थ्यदोषादुत्पद्यते।

आकाशेऽन्धकारप्रतीतिरप्यतात्त्विकी, यतोऽन्धकारोऽपि स्वतन्त्रः पदार्थो नास्ति। यथा सर्वेषां पदार्थानां प्रत्यक्षे आलोकसहकृतचक्षुरिन्द्रियस्य कारणता भवति, न तथाविधाकारणतान्धकारप्रत्यक्षे। अन्धकारप्रत्यक्षे तु आलोकासहकृतचक्षुरिन्द्रियस्य कारणता-सापेक्षत्वम्। एवमेव चक्षुरिन्द्रियं स्वसामर्थ्यवशादेवाकाशं प्रत्यक्षीकरोति। आकाशमेव स्वसामर्थ्येन स्वयमात्मानं ग्राहयति, प्रत्यक्षीकारयति वा गन्धर्वनगरपिशाचादिप्रत्यक्षानुभववत्। शब्दोऽस्य विशेषो गुणः।

(ख) *वायुः*। वायुर्हि नाम स एव योऽरूपित्वे सति चालन-व्यूहन-मेलन-द्रव्य-शब्द-गन्धनेता सर्वेन्द्रियबलदाता च स्यात्। शाखादीनां सञ्चालनमेव चालनम्। अधःपतितानां शुष्कपत्राणां वायुना स्थानान्तरप्रापणमेव व्यूहनम्। अन्यस्मात् स्थानात् गन्धं घ्राणेन्द्रियं प्रापकं मेलनम्। द्रव्यशब्दगन्धादिनयनपदस्य किं तात्पर्यमिति चेत्, घटपटशब्दगन्धादीनां द्रव्याणामन्यत्र नयनमेव। सर्वेन्द्रियबलदातृत्वस्यायमाशयः, यद् वायोरभावे किमपीन्द्रियं कार्यं कर्तुं न प्रभवति। वायुः प्राणरूपोऽपि विद्यते। अस्य विशेषो गुणः स्पर्शः। शब्दोऽप्यस्मिन् कारणान्तरेण सम्बध्यते। अतः वायौ द्वौ विशेषौ गुणौ।[1]

(ग) *तेजः*। अग्निरेव तेजसोऽर्थः। प्रकाशन-पाचन-पान-हिममर्दन-भक्षण-शोषणेतिषड्विधानां कार्याणां कारकं तेजः। प्रकाशनस्य द्योतनमेवार्थः, द्योतनं सूर्यचन्द्रवह्न्यादिप्रकाशेन सञ्जायते। पाचन-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० २०९

मौदरेण वह्निना संपद्यते। यथा बाह्येन वह्निना तण्डुलादिपाकक्रिया, तथैवोदरानलेन भक्षितान्नस्य पाकक्रिया। तेजःपानस्य तु अयमाशयः प्रतिभाति यत् उष्णात्युष्णजल-दुग्ध-प्रभृतिपेयपानमेव तेजः पानम्। भक्षणमन्नादीनां भवति। इदमपि पानवत् औदरेण वह्निना सञ्जायते। अन्तःप्रदेशरूपे विद्यमानत्वात् वस्तुतः पानादने तुल्यमेव। हिममर्दनं हि नाम वह्निना हिमस्य गालनम्। घर्मे प्रसारितस्य वस्त्रस्य जलशोषणमेव शोषणम्। एवं पञ्चतय्य एव वृत्तयस्तेजसः। क्षुत्तृष्णा तु तेजोरूपिण्यौ स्तः रूपमस्य विशेषो गुणः शब्दस्पर्शावप्यस्मिन् कारणान्तरेण सम्बध्यन्ते। अतोऽस्मिन् त्रयो गुणाः।[1]

(घ) जलम्। जलस्य क्लेदन-पिण्डन-तृप्ति-प्राणनाप्ययन-प्रेरण-तापापनोदन-भूयस्त्वञ्चेति अष्टौ सामान्यानि लक्षणानि प्राप्यन्ते। वस्त्राणामभिगालनमेव क्लेदनम्। चूर्णीभूतं वस्तु संगृह्य पिण्डरूपेणैकत्रीकरणमेव पिण्डनं, यथा बहुघृतशर्करामिश्रितं मोदकम्। क्षुधानिवृत्त्या सम्पन्ना तुष्टिरेव तृप्तिः। कृतेऽपि भोजने जलं विना तृप्तिर्न भवति। जीवनमेव प्राणनम्। प्राणानां सन्तुष्टिरेवाप्यायनम्। प्रवाहे प्रवाहणमेव प्रेरणम्। प्रवाहेणैव शवकाष्ठादयो पदार्थास्तटमानीयन्ते। प्रवाह एव कूलङ्कषति। धर्मनिराकरणमेव तापापनोदनम्। एकस्मिन् स्थाने एकत्रीभवनमेव भूयस्त्वम्।[2] एभिरष्टाभ्यां कार्यैः संयुक्तमेवाम्भः। घृते तैले च या क्लेदत्वप्रतीतिः, सापि वस्तुतो जलधर्मस्यैव कारणेन। भूतान्तरेण प्रतिबन्धेन हेतुना घृते तैले वा जलव्यवहाराभावः। अग्निसंयोगेन घृतं द्रवीभवति। एवमेव हिमकरकयोः काठिन्यप्रतीतिरपि भ्रान्तैव। तन्निष्ठं काठिन्यं तु शीतनिमित्तकम्। अत्यधिकेन शैत्येन हेतुना जलमेव हिमरूपेण करकरूपेण च परिणमते। नगाधिराजस्य हिमालयस्योपत्यकायां प्रवहन्ती भगवती भागीरथी यदा शैत्येन हिमी-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० २१०

२. क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम्।
तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः॥—तत्रैव, पृ० २१०

भूता सर्वथा पाषाणखण्डवज्जडीभवति, तदा वयमनायासेनैव हिमतामापन्नस्य जलस्योपरिस्तात् प्रधावितुं प्रभवामः । सुदृढं घनीभूतस्य गङ्गाजलस्याभावे तु गङ्गाजलोपरि चरणस्पर्शकालसमकालमेव तरणप्लवनमजानानः पयोराशौ निमंक्ष्यति । शीतकाले निर्वाते प्रदेशे नक्तं समुन्नते स्थले मृण्मये घटे स्थापितं जलं हिमतामापद्यते, प्रत्यूषे च अधोमुखीकृतादपि घटाज्जलं नाधः पतति । एतादृशं हिमीभूतं जलं पञ्चषड्हायनाः बालाश्छुरिकया कर्तयित्वा कर्तयित्वा कलिन्दवदास्वादयन्ति । वस्तुतः हिमकरकौ जलमेव स्तः, केवलं शैत्याधिक्येन निमित्तजन्यया घनतया द्रव्यान्तरस्य भ्रमात्मिकां प्रतीतिं कारयतः । जलस्य विशेषगुणो रसः । शब्दस्पर्शरूपेषु सम्मिलितेषु रूपेषु चत्वारो गुणा अम्भस्यनुमताः ।

( ङ ) *पृथिवी* । पृथिव्याः लक्षणमिदम्—'रूपवत्त्वे सति सकलजगद्धारयित्री पृथिवी' । यथाहुः प्रस्थानरत्नाकरकाराः, 'रूपवत्त्वे सति साक्षात्सर्वजगद्धारकत्वम्' ।[1] पृथिव्याः जगद्धारकत्वं त्वनेन विधिना बोद्धव्यम् । काष्ठपाषाणादयः पदार्थाः पार्थिवत्वेन पदार्थत्वेन हेतुना पृथिवीपदव्यवहारभाजनतामुपगच्छति । तान् विना अग्नेर्प्रादुर्भावोऽशक्यः । समुद्रादयोऽपि पृथिवीमन्तरा न प्रादुर्भवितुं शक्नुवन्ति । तेषामप्याधारः पृथिव्येव । व्यञ्जनादिभिः पार्थिवैः पदार्थैर्विना वायुर्नोत्पद्यते । गर्तादिं विना आकाशो न सम्भवति । पार्थिवशरीरमन्तरेन्द्रियाणामात्मनश्च प्राकट्यं न सङ्घटते । अनेन प्रकारेण पृथिव्यैव सकलजगदाधारक्षमेति शुद्धाद्वैतवेदान्तिनां पृथिवीलक्षण सर्वथा सङ्गच्छते, इत्यत्र नास्तिसंशयलेशोऽपि ।

पञ्चमहाभूतानामुत्पत्तिविचारसम्बन्धे शुद्धाद्वैतवादिन उपनिषद्परम्परानुसारिणं विजातीयारम्भकं वादमङ्गीकुर्वन्तो नैयायिकानां सजा-

---

१. भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥
—सुबोधिनी, उद्धृतप्रस्थानरत्नाकरः, पृ० २११

तीयारम्भकं वादं खण्डयितुं प्रवर्तन्ते।[1] अस्मिन् प्रसङ्गे इमे वेदान्तानुमतं 'तस्माद्वा आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी' इत्यमुं उपनिषत् सिद्धान्तमेव प्रामाणिकं मन्वते। नैयायिकानामारम्भवादं खण्डयन्तो वल्लभवेदान्तिनस्तर्कममुं प्रस्तुन्वन्ति यत् न्यायसिद्धान्तेन तन्तोः पट उत्पद्यते किन्तु तन्तुपटौ भिन्नौ स्तः, इत्यारम्भवादे पारस्परिको विरोधः सुस्पष्ट एव। पृथिवीत्वस्य कार्पासत्वस्य वा ग्रहणेऽपि कस्यापि नियामकस्याभावात् निर्वाहो दुःशकः। अनेन प्रकारेण द्रव्याद्विजातीयस्य गुणस्य विजातीयस्य कर्मणो वा समुत्पत्तिरवलोक्यते। साकारस्थूलाग्नेरुत्पत्तावपि वायुरेव कारणरूपेण स्वीक्रियते। गोमयाद् वृश्चिकस्योत्पत्तिवद् देव-मानव-वानर-ऋक्षादीनामपि विजातीयोत्पत्तिः प्रत्यक्षप्रमाणेन शास्त्रप्रमाणेन च सिद्ध्यति। पृथिव्या विशेषगुणो गन्धः। शब्दस्पर्शरूपरसा अन्यतः सम्मिलिता। एवं पृथिव्यां पञ्चगुणाः सन्ति।

## १८–२७. इन्द्रियाणि

ज्ञानक्रिययोरन्यतरस्य यत् कारणं, तदेवेन्द्रियम्। आहोस्वित्, शरीरसंयुक्तत्वे सति यत् स्वकीयेन फलेनात्मनो ज्ञानं कारयेत्, तदेव इन्द्रियम्। एतानीन्द्रियाणि नित्यान्यणुपरिमाणवन्ति, संख्याया चैकादश परिगणितानि। तद्यथा पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि एकादशं मनः। श्रोत्र-त्वग्-नेत्र-रस-घ्राणेतिपञ्चज्ञानेन्द्रियाणि सुप्रसिद्धानि सन्ति। एतेषां बाह्यानि गोलकान्यपि प्रसिद्धान्येव। एभिः क्रमशः शब्दस्पर्शरूपरसगन्धानां ज्ञानं सञ्जायते। एतानि पञ्च बुद्धीन्द्रियाणि कथ्यन्ते, तथा च सर्वाण्यप्यहङ्कारस्य परिणामभूतानि, पुरुषस्य च निमित्तमुत्पद्यन्ते। वाग्हस्तपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि सन्ति। एतेषामपि बाह्यानि गोलकानि प्रसिद्धानि। वस्तुतः पुरुषस्य विषयोपभोगविषयिणीच्छैवेन्द्रियाणामुत्पत्तौ हेतुः। एतानि सर्वाण्यपीन्द्रियाण्यहङ्कारादुत्पन्नत्वादभौतिकानि सन्ति। एतेषां दशसंख्याकानामिन्द्रियाणां ग्रहणं राजस्या बुद्ध्या, राजसैश्च प्राणैः सम्पद्यते।

---

१. आरम्भवादः, पण्डितबद्रीनाथशुक्लः, काशी, सं० २००८

## २८. मनः

कर्मज्ञानोभयप्रकारककार्यसम्पादकत्वात् उभयात्मकं मनः । 'उभयात्मकं सङ्कल्पविकल्पात्मकं मनः' इति मनसः स्वरूपलक्षणम् । 'कामजनकत्वं' इति मनसः कार्यलक्षणम् । इयं लक्षणद्वयी मनस आध्यात्मिकं लक्षणं विद्यते । सर्वदा 'अविरुद्धाविभावस्थानवत्वम्' मनस आधिदैविकं लक्षणम् 'योगारूढैः पुरुषैः शनैः शनैः दीर्घकालपर्यन्तं संराध्यत्वम्' मनस आधिभौतिकं लक्षणम् ।

अत्र किञ्चिद्वैशिष्ट्यं विचारयामः । अर्धवैनाशिका मनो नित्यमभिमन्यन्ते । सांख्यमतानुयायिनोऽनित्यं स्वीकुर्वन्ति । वल्लभवेदान्तिनस्तु 'चन्द्रमा मनसो जातश्चक्षुः सूर्योऽजायत' इति श्रुत्या मनसोऽधिदेवश्चन्द्र इति कृत्वा नानाकिरणशालि मनः स्वीकृत्य जीवातिदेशेनाणुत्वव्यवस्थया मनोऽणुपरिमाणवत् स्वीचिकीर्षन्ति । तस्य बाह्यं गोलकं हृदयमेवेति तेषामभिसन्धिः ।

अनेन प्रकारेणाभ्यन्तरमिन्द्रियं मनः, यत् कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च स्वेषु स्वेषु विषयेषु प्रेरयति मनस्तावदत्यन्तमेव सूक्ष्ममिन्द्रियम्, एककालावच्छेदेनैवेदं विभिन्नैरिन्द्रियैः संयुज्यते । मनोऽहङ्कारबुद्ध्योन्तःकरणस्यैव धर्माः । पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि च बाह्यानि करणानि । प्राणानां क्रियान्तःकरणेन प्रवर्तते । अन्तःकरणं बाह्येन्द्रियैः प्रभावितं भवति । मनो बाह्येन्द्रियैर्गृहीतस्य निर्विकल्पकस्य प्रत्यक्षस्य स्वरूपं निर्धार्य तत्सविकल्पकेन प्रत्यक्षरूपेण परिणमयति । सुखदुःख-प्रयत्न-द्वेषादृष्ट-स्नेहादयो मनसो गुणाः, न त्वात्मनः । बाह्याभ्यन्तरेत्युभयविधानि कर्माणि मनसः सञ्जायन्ते ।[१]

अनेन प्रकारेण श्रीपुरुषोत्तमाचार्यप्रणीतप्रस्थानरत्नाकरस्य विशिष्टविवेचनेन शुद्धाद्वैतवादस्य अपरेषाञ्चनेकेषां ग्रन्थानामध्ययनेन वयं सम्यग्विजानीमहे यत् द्वितीयस्मिन् कारणकोटिनामके प्रमेये अष्टाविंशतिसंख्याकानां प्रमेयाणामत्यन्तमेव रोचकं युक्तिसङ्गतं च विवेचनं वल्लभ-

---

१. प्रस्थानरत्नाकरः, पुरुषोत्तमः, पृ० २१७–२१९

वेदान्तपरम्परायां यथोपलभ्यते न तथान्यत्र कुत्रापि भारतीयदर्शन-परम्परायामस्माकं नयनगोचरतामागच्छतीति दिष्ट्या वर्धाप्यन्ते शुद्धा-द्वैतवादिनो विद्वांसः। एतानि तत्त्वानि स्वभेदोपभेदैरनन्ताः सम्प-द्यन्ते। एतत्तु पूर्वमेवास्माभिः प्रत्यपादि यत् भगवद्भावरूपत्वेनैवैतानि तत्त्वशब्देन कथ्यन्ते। एवं वल्लभवेदान्तसिद्धान्ते भगवतः कारणतैव अष्टाविंशतिधा लोके प्रकटिता भवति।

इमान्यष्टाविंशतिसंख्याकान्येव तत्त्वानि वल्लभसम्प्रदायपरम्परायां स्वीकृतानि सन्ति। यदि कश्चिदाशङ्केत यत् संख्यादिगुणाः सामान्या-दयश्च हिरण्याण्डसृष्टेः पूर्वमप्यविद्यन्त, तर्हि कुतः खलु तत्त्वानीमान्यष्टा-विंशतिसंख्याकान्येव स्वीकुर्यामेति चेत्, वल्लभवेदान्तिनः कथयन्ति यदेतेषु तत्त्वेषु सर्वमन्तर्भवति। अण्डसृष्टेः पूर्वं सतामपि संख्यासामान्या-दीनां नैभ्यः पृथक् सत्ता। यथा शरीरसत्त्वेऽपि शरीरं करचरणातिरिक्तं पृथक् नास्ति। न्यायवैशेषिकयोरङ्गीकृतानां चतुर्विंशतिसंख्यकानां गुणा-नामन्तर्भाव एतेष्वेव तत्त्वेषु सञ्जायते। शब्दस्पर्शरूपरसगन्धानामन्त-र्भावः पञ्चतत्त्वेषु स्पष्टमेव। संयोगगुरुत्वद्रवत्वस्नेहानां स्पर्शेऽन्तर्भावः, धर्माधर्मयोश्च कर्मण्यन्तर्भावः। संख्या-परिमाण-पृथक्त्व-विभाग-परत्वापरत्व-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-वेग-स्थितिस्थापक-संस्कारोत्क्षेपणादिपञ्चकर्माण्यपि पृथक्तत्त्वानि साधयितुं न शक्यते। भावना संस्कारज्ञानेऽन्तर्भवति। एवमवशिष्टा गुणा अविद्यमानत्वेन हेतुना स्वतन्त्रा नाङ्गीक्रियन्ते, अथ च अष्टाविंशतितत्त्वान्येव कारण-कोटिनामके प्रमेयपदार्थे शुद्धाद्वैतवेदान्तिनां सिद्धान्तपक्षे स्वीक्रियन्ते।

## ३. कार्यकोटिनामकं प्रमेयम्

वल्लभीयवेदान्तसिद्धान्तधिया कार्यकोटिनामकं तृतीयं प्रमेयमास्ते। न खलु कुत्रापि केनापि कस्मिन्नपि ग्रन्थे वल्लभवेदान्तपरम्परायां प्रमेय-स्यास्य विस्तरेण विवेचनं कृतम्। यत्र यत्र केवलं सूत्ररूपेण सङ्केतितं प्रमेयमिदं निबन्धस्यास्यान्तिमे भागे सङ्केतयामि। प्रमेयमिदं जीवगण-जडगणभेदेन द्विविधम्। वल्लभसम्प्रदायपरम्परायामनियतपदार्थवादः स्वीकृतः, इति तु मया पूर्वमेव स्फुटं प्रतिपादितम्। अनियतपदार्थवाद-

स्यायमाशयः यत् कार्याण्यनन्तानि भवन्ति । जीवगणाः सच्चिदानन्दाधि-भौतिकादि भेदैः, जडगणाश्च स्वकीयैरवान्तरैर्भेदैः प्रमेयस्य बाहुल्यं दिग्दर्शयन्ति ।

श्रीमता वल्लभाचार्येण शास्त्रान्तरेषु प्रतिपादितानां सर्वेषां पदार्थानां भगवति हरिश्रीकृष्णे एवान्तर्भावः कृतः । साधारण्या दृष्ट्या जगत्तिष्ठति, किन्तु तज्जगद्रूपेण प्रमेयं न भवत् हरिश्रीकृष्णरूपेणैव प्रमेयकोटिं भजते । अतो हरिश्रीकृष्ण एव वस्तुत एकमात्रं प्रमेयः पदार्थः, इत्यलं पल्लवितेन । 'श्रीकृष्णः शरणं मम' ।[१]



१. सागरिकायाश्चतुर्दशवर्षस्य प्रथमाङ्के प्रकाशितस्य लेखस्य अन्तिमे भागे 'ॐ श्रीकृष्णः शरणम्' इत्ययं मन्त्रः प्रकाशितो विद्यते । वस्तुतः वल्लभ-सम्प्रदायस्योपासनापद्धतौ 'श्रीकृष्णः शरणं मम' इत्ययमेव मन्त्रः ।

# श्रीविद्याधरश्चक्रवर्ती

*डॉ० प्रभाकरशास्त्री*

मौगलकाले ख्यातनामा मिर्जाराजोपाधिसंवलितो जयपुरनगरस्थापनात्पूर्वं विद्यमानस्य 'अम्बापुरी' (आमेर) त्यभिधानस्य नगरस्य प्रशासकः श्री मानसिंहः प्रथमः सम्राजोऽकबरस्य प्रधानसेनापतिरासीत्, यो हि भगवत्याः कालिकायाः परमोपासको भक्तश्च बभूव। श्रूयते—मौगलकाले अकबर-जहांगीरादिशासकानां शासनकाले यशोराधिपतिः प्रतापादित्याख्यो बङ्गवीरः, अत्यन्तं दुर्धर्षः प्रबलशक्तिसमवेतश्चासीत्। महाराजेनाकबरेण अस्य दमनार्थं मिर्जाराजोपाधिसंवलितः मानसिंहो नामकः स्वीयो विश्वस्तः सेनानायकः प्रहितः। बङ्गाधिपतेः प्रतापादित्यस्य सविधे न केवलं सैन्यशक्तेराधिक्यमासीत्, स हि दैवीशक्तिसंवलितोऽप्यभूत्। अत एव स अपराजेयो बभूव। मानसिंहोऽपि सर्वतोभावेनास्यापराजेयत्वस्य कारणं विज्ञाय दैवीशक्तिं साधयितुं स्वपक्षे च संस्थापयितुं प्रायतत, साकल्यं च लब्धवान्। सगर्वो बङ्गाधिपतिः देव्या सर्वदा सपर्याविधावपि प्रमत्तो बभूव। आपत्तौ च केवलं पूजादिभिः प्रसन्नं विधातुं प्रयततेस्म। एकदा सा देवी बङ्गाधिपतिं जगाद—'राजन्! यदा त्वं स्वेच्छया त्रिवारं गदिष्यसि मां प्रतिगमनाय, नाहं पुनरागमिष्यामि त्वत्साहाय्यं कर्तुम्। त्वया च निरालसेन सपर्याविधिः कार्यः अनेन प्रवर्तमानक्रमेण नाहं संतुष्टा त्वयि—इति।' मानसिंह-स्पर्धया च संतुष्टा सा देवी (कालिका) बङ्गाधिपतिं परित्यक्तुकामा एकदा तस्य कन्यकारूपेण तस्य सविधे समुपस्थिता, यत्र हि राजा देवी सपर्यासक्तो बभूव। समुपस्थितां स्वीयां कन्यकामिव तां सपर्याविधौ विघ्न इति मत्वा तेन बङ्गाधिपेन सा त्रिवारं गमनाय समादिष्टा। एवं सा प्रतिजगाम तस्मात् स्थानात्। पुनः स्वप्ने च प्रकटीभूय जगाद तं 'राजन्, त्वया त्रिवारं निगदिताहं त्वां परित्यज्य गतास्मि। नाहं पुनरागमिष्यामि त्वत्साहाय्यार्थमिति।' प्रातरुत्थाय क्रुद्धेन राज्ञा

स देवीविग्रहः समुद्रे प्रक्षेपितः। देव्या च द्वितीयो भक्तो मानसिंहः स्वप्ने समादिष्टः, यत् स देव्याः मूर्तिं समुद्रादुद्धृत्य पूजयेदिति। मानसिंहेन सा चमत्कृतिप्रधाना देवीमूर्तिः समुद्रादन्विष्य उद्धारिता, स्वराजधान्यामामेरनगरे समानीय संस्थापिता। सा हि कच्छपवंशीयानां राज्ञां कुलदेवी, साम्प्रतमपि आमेरनगरे 'शिलादेवी'ति विख्याता विराजते। जयपुरे चैषा लोकोक्तिः प्रसिद्धाऽस्ति—

'साङ्गानेर को साङ्गो बाबो, जयपुर को हनुमान।
आम्बेर की शिल्ला देवी, ल्यायो राजा मान॥'

सोऽयं कथानकः श्री सीतारामभट्ट-पर्वणीकरेण जयपुरीये ऐतिहासिके जयवंशाख्ये महाकाव्ये एवमुपस्थापितः। अत्र हि केचन श्लोका उपस्थाप्यन्ते—

'अथ *विधातृसुतं नद*[1]*मायया* तदुपवृत्तिक'दीप'महीपतेः।
बलवतो बलिनः स जिगीषया समरभूमरभूमिमधिश्रितः॥४१॥
उपगतामभिवीक्ष्य स तां हतामकृत केवलहुङ्कृतिहेतिभिः।
भगवती बलमात्मनि बिभ्रतां कथमशक्यमशक्यमपीतरैः॥४६॥
उरसि खड्गमकोशकमक्षिपन्नरपतेरतिदुस्सहतेजसः॥
स[2] तु न सिद्धिमवाप न विस्मयो जयति सायति सा श्रियमन्तरा॥५०॥
अथ स तत्र वपुस्थमुपस्थितः प्रबलमद्रिसुतासमनुग्रहात्।
अपसरेति यदा बदतात्तव त्रिरिदमेष्यति मेष्यति नो भवान्॥५६॥

× × ×

नृपतिरथ निशीथकाललाभे जपविधिनाऽभिमुखीचकार देवीम्।
प्रणतिजनविपत्तिदुःखहन्त्रीमतिकरुणां समवृत्तिचित्तवृत्तिम्॥७३॥
अयि नृप! तव मानसप्रसादो भवतु घनात्यय! पूर्ण शीतरश्मेः।

---

१. ब्रह्मपुत्र नामके नदे।

२. स राजा 'दीपः' यं ऐतिहासिक ग्रन्थेषु 'प्रतापादित्य' नाम्ना व्यवहन्ति जनाः।

भृशमिह रिपवो हता भवेयुः समिति पराभवमाप्य तावकास्त्रैः ॥७५॥
इति वचनममुं[1] निगद्य सत्यं सपदि पुरोऽस्य तिरोबभूव देवी ।
इदमृतमुपधार्य वाक्यमस्याः शयनविधिं विदधे विशङ्कचित्तः ॥७६॥
उषसि नियमकर्म कुर्वता स्वं निजतनयाद्भुतरूपधारिणी सा ।
अनुपदमथ कुर्वती शिशुत्वं नरपतिना जगदे वपुस्थितेन ॥७७॥
अयि चपलमते ! सुते ! त्वमस्मादिहि खलु गच्छ किय प्रयाहि नूनम् ।
त्रिरिति गमनवाक्यमाकलय्योपधितनया तमुवाच वाचमित्थम् ॥७८॥
त्वयि नृप ! विहिता मया प्रतिज्ञा बहुगुण ! सम्प्रति पूर्णतामयासीत् ।
अथ निजपदमीयते मया ते सुखमनिशं भवतात् स्वरेहि जन्यात् ॥७९॥
तिरोहितायां सहसैव तस्यां चिक्षेप तस्याः प्रतिमां नदेऽसौ '
श्री मानसिंहेन युधिप्रवृत्तः नित्ये व्यसुत्वं च कलेन सार्धम ॥८१॥
स्वप्ने निशायां समुपेत्य देवी राजा नमाजानुविलम्बिबाहुम् ।
आह स्म वाचं हितवाञ्छयैव विराजमानं द्विषतां जयेन ॥८३॥
नदोज्झितां मत्प्रतिमां द्विपा ते निस्सार्य यत्नान्नरनाथ ! वत्स !
पुरे प्रतिष्ठाप्य निजावरोधे बलिप्रदानादिभिरर्चयस्व ॥८४॥
पुरीमुपेत्यात्मजजन्मनैव प्रपालितां भूपतिरुन्नतेच्छः ।
अन्तःपुरे कारितवान् मनोज्ञे सुमन्दिरं शिल्पिभिः श्रद्धबोधैः ॥८७॥

तस्यैव देवी विग्रहस्य विधिवत् सपर्यां तस्मै छागबलिञ्च विधातुं मानसिंहेन केचन बङ्गदेशीया एव पूजकाः ससम्मानमत्र जयपुरे ( आमेरे ) समानीता आसन् । तेषु श्री रत्नगर्भ सार्वभौम भट्टाचार्यस्य नाम जयपुरीय-पुरातनेषु राजकीयप्रपत्रेषु प्राप्यते । सोऽयं भट्टाचार्यः वामपन्थी तान्त्रिक आसीत्, यो हि पाश्चात्त्यवैदिकश्रेण्यां परिगण्यते । 'भट्टपल्ली' 'छलछल्' नामकैः वैदिकैः सहास्य आभिजात्यः सम्बन्धः । श्री रत्नगर्भेण स्वकन्यकानामुद्वाहार्थं स्वजातिसमुत्पन्नाः बङ्गदेशीयाः ब्राह्मणाः आमेरनगरे समाकारिताः, ते च तत्रैव गृहजामातृरूपेण संस्थापिता आसन् । बीकानेरस्थ-राजकीयाभिलेखागारे सुरक्षितेन जयपुर-नगरीयपुरातनप्रपत्रसंग्रहाधारेणैवं वक्तुं शक्यते यत् चक्रवर्त्युपाह्वौ द्वौ

१. राजानं मानसिंहम् ।

सहोदर भ्रातरौ श्री राजेन्द्र श्री रामनारायणौ श्री रत्नगर्भमहोदयानां जामानरावास्ताम्। श्री राजेन्द्र-चक्रवर्तिनः पुत्र नामधेयं श्री शान्तेन्द्र-चक्रवर्त्ती आसीत्, यो हि 'सन्तोषराम' इत्याख्यया जगति प्रसिद्धो बभूव। अयं हि फाल्गुनमासे १७५६ वैक्रमाब्दे राजा सवायीत्युपाधि-धारकेण श्री जयसिंहद्वितीयेन प्रदत्तां ५१ बीघा भूमिं लब्धवान् राजप्रतिग्रहरूपेण। १७७२ वैक्रमाब्दे सोऽयं सन्तोषरामः (शान्तेन्द्र-चक्रवर्ती) दिवङ्गतः। ततश्चास्य पुत्रः श्री विद्याधरश्चक्रवर्ती पितुरुत्तरा-धिकारे देवी पूजनकर्मणि आचार्यत्वेन नियुक्तः।

वैक्रमाब्दे १७७४ तमे वर्षे फाल्गुने मासि राज्ञा 'साहबकोट'–ग्रामस्य १२ बीघा 'साचडी' ग्रामस्य च ३६ बीघा भूमिः श्रीविद्याधरचक्रवर्तिने प्रदत्तेति प्रमाणं समुपलभ्यते।[1]

उच्यते—श्रीविद्याधर चक्रवर्तिनो मातुलः श्रीकृष्णराम नामा जयपुर-संस्थापकस्य सवाई जयसिंह द्वितीयस्य 'दीवान' आसीत्। एकदायं श्रीकृष्णरामः स्वभागिनेयेन श्री विद्याधरेण सार्द्ध राज्ञो जयसिंहस्य राजभवने स्थित आसीत्, तत्र च निर्मीयमाणस्य 'मोतीमहल' इत्या-ख्यस्य प्रासादस्य शिल्पविधौ विचारः प्रचलतिस्म। विचारणायाश्च विषय आसीत्—प्रासादस्यास्य ऊर्ध्वभागे गमनार्थं सोपानमार्गं कुत्र निर्मातुं शक्यते (निर्मातव्यम्) इति; यतोहि तत्रासीत् स्थानाभावः प्रवर्तिते विचारणाचक्रे बहोः कालो व्यतीतः, परं नासीत् कोऽपि

---

१. (सही) महाराज सावाई जयसिंह इब्न महाराजा विषन सिंह सिधि श्री महाराज अधिराज महाराज श्री सवाई जयसिंह जी देववचनात् फमेती परगना आमेर का दिशेषु प्रसादवंच्य वावत पुन्य उदकधरती बिधा ५१ गाऊं साहन कोटरा तथा रामगंज परगना आमेर की विद्याधर सन्तोषराम का ब्राह्मण चक्रवर्ती ने मिति फाल्गुन सुद पून्यू संवत् १७७४ चन्द पर वसु ऊ तिसमें संकल्प कर दिइसे तिसो थाके फरमावा छां।'

वेसाष बुदि १० संवत् १७७६ वैरिशाल किशोरदास औ साहा ताराचन्द दिवान औ नेहालचन्द वाका नवीस अलपुन्य उदक।' (नकल)

सुखदः परिणामः। तदा श्री विद्याधरेण मातुलमुद्दिश्य निगदितम्—'मह्यं दीयतां पञ्च सेटात्मकं ( सेर ) सिक्थकम् ( मोम )। अहमस्याः समस्थायाः निराकरणे प्रभुः।' तथानुष्ठिते सति तेन तस्मात् मधूच्छिष्टात् प्रासादस्यानुकृतिं निर्माय, तत्र च वर्तुलाकारः सोपानमार्गो विरचितः। नृपतिः जयसिंहस्तस्य एतादृशं बुद्धिवैलक्षण्यं वीक्ष्य भृशं प्रमुदितः, श्रीविद्याधरञ्च स्वप्रधानामात्येषु नियोजितवान्। श्रीसीतारामो भट्टः पर्वणीकरो लिखति—

'निजमन्त्रिवरं नराधिपः स हि विद्याधरनामकं सदा।
अनुकूलकरं धुरन्धरं धुरि सन्धाय सुखानि भुक्तवान्॥' १५-४० ॥

अनेनैव सार्द्धं चिरं विमृश्य राजा जयसिंहः 'जयपुर'-नामकस्य नगरस्य संस्थापनाय स्वीयां दृढां मतिमकरोत्। श्रीविद्याधरो न केवलं शिल्पविधि-विशेषज्ञ एव, अपितु मन्त्रतन्त्रार्णवे कृताभ्यासः, वास्तुशास्त्रविधावपि कृतश्रमश्चासीत्। अतएव तस्य कृतिरिदं 'जयपत्तनं' सर्वतो भावेन परिपूर्णः पाश्चात्य-पौरस्त्यशिल्पविद्भिश्च प्रशंस्यते। राजस्थानप्रान्तस्य इतिहासलेखकेन श्रीकर्नल-जेम्सटॉड-महोदयेन अस्य पत्तनस्य शिल्प-स्थापत्यादिकलादीनां भूरिभूरि प्रशंसा विहिता। जयपुर राज्यस्य इतिहासलेखकेन श्री जगदीश सिंह गहलोत-महोदयेन स्पष्टं लिखितम्—एतस्य नगरस्य सौष्ठवातिशयितं निर्माणं विद्याधरस्य कृतित्वं व्यनक्ति।

( राजपूताने का इतिहास—तृतीय भाग पृ० ३२ )

श्रीविद्याधर-चक्रवर्तिनो जीवनस्यैका घटनापि प्रस्तूयतेऽत्र, यया अस्य बुद्धिवैलक्षण्यं सिद्ध्यति। ऐतिह्यप्रधानैः ग्रन्थैः, पुरातनप्रपत्रैश्च ज्ञायते यत् योधपुरपत्तनाधीशेन श्री अभयसिंहेन विक्रमपुरे ( बीकानेर-नगरे ) आक्रमणं विहितम्। विक्रमपुराधीश्वरेण च राज्ञे सवाई जयसिंह महोदयाय साहाय्यार्थं प्रार्थितम्। यद्यपि जोधपुरनगरशासकस्य श्री अभयसिंहस्य भागिन्या सह महाराज-जयसिंहस्य विवाहः संवृत्त आसीदिति सम्बन्धमवलोक्य च विक्रमपुराय सैन्यसाहाय्यादिकं प्रेषणं

सर्वथानौचित्यकरम्, तथापि श्री विद्याधरेण तत्कृते सैन्यसाहाय्यादिकं प्रेषितम्। परतश्चैकदा परस्परालापप्रसङ्गे जोधपुराधीशेन राज्ञः जयसिंहस्य सकाशात् 'नरायना' नामको ग्रामविशेषः संयाचितः, राज्ञा च स्वीकृतमपि। यदा एतत्सम्बन्धि पत्रादिकं श्री विद्याधरस्य समीपे प्राप, तदा तेन तस्योपरि राजकीया मुद्रा नार्पिता, अवरुद्धञ्च तत् पत्रम्। यदा च कालातिपातः सञ्जातः, तदा जोधपुराधीशेन राजा जयसिंहो विलम्बार्थमुपालम्भितः। राज्ञा च यदा विलम्बकारणमन्वेषितम्, तदा श्रीविद्याधरेण कथितम्—नैतत् समीचीनं विधीयते भवता। यतो हि 'नरायना' ग्रामोऽस्माकं महत्त्वपूर्णो ग्रामः, सीमावर्तित्वात् अत्र हि नागजातीयाः सैनिकाः निवसन्ति। तस्य स्थानान्तरेण अस्माकं सैन्यशक्तेर्ह्रासो भविष्यति। एवं भवानपि जोधपुराधीशं 'विषनगढ' विषयं प्रदातुं निवेदयतु, यदि स तत्कृते स्वीकरिष्यति, तदा वयमपि 'नरायना' विषयं प्रदास्यामः। परिणामतश्च न योधपत्तनाधीशेन विषनगढविषयो जयपुराय स्वीकृतः, न च जयपत्तनाधीशेन 'नरायनाविषयः' तस्मै समर्पितः। यतोहि द्वावपि उभयराज्यानां सैन्यशक्तेः प्रधानकेन्द्रीभूतावास्ताम्।

श्री विद्याधर चक्रवर्तिनः यो विद्वान् सुहृद् आसीत्, तस्य नाम श्रीहरिहर-चक्रवर्तीति प्रसिद्धम्। कविकलानिधिना श्रीकृष्णभट्टेन स्वीये 'ईश्वरविलासाख्ये' महाकाव्ये 'पद्यमुक्तावल्याञ्च' अस्य सोल्लासेन वर्णनं विहितम्। अयं हि तन्त्रशास्त्रज्ञ आसीत्। एवं वृन्दावनतः समानीय या भगवतो गोविन्ददेवस्य मूर्तिः जयपत्तने संस्थापिता आसीत् तस्याः प्रपूजका अपि बङ्गदेशीया एव अभवन्, ये हि श्री विद्याधर-चक्रवर्तिनः जामातरः आसन्।

सवाई जयसिंहस्य परतः तस्य ज्येष्ठः पुत्रः श्री ईश्वरीसिंहो जयपत्तनाधीशः समजनि। परं, उदयपुराधीशेन राणाजगत्सिंहेन स्वभागिनेयाय श्रीजयसिंह-द्वितीयस्य द्वितीयपुत्राय राज्याधिकारो याचितः, यो हि स्वयं राज्ञा विवाहावसरे स्वीकृतः आसीत्। अस्मिन् उत्तराधिकारप्रश्ने च महान् कलहः समुत्पन्नः। एकेन जयपुर-राज्यमन्त्रिणा श्रीहरगोविन्द-नाराणी-महोदयेन प्रवञ्चितो महाराजः। तद् विश्वासेन च स (सवाई

ईश्वरीसिंहः ) स्वस्वाभिभक्तं मन्त्रिणं केशवदासनामकं विषं दाययित्वा जयपुरे हतवान्। एतेन समुत्पन्ना विषमा स्थितिः केवलं श्रीविद्याधरेणैव संरक्षिता। फलतो जयपुरनगरे रक्तपातो नाभूत्। श्रीईश्वरीसिंहे दिवङ्गते तद्वैमात्रेयः श्रीमाधवसिंहः जयपत्तनाधीशः समभूत्। श्रीहरगोविन्दनारायणीमहोदयस्य कथनमनुसृत्य एतेन राज्ञा श्रीविद्याधरचक्रवर्ती भृशं संपीडितः। स हि लक्षत्रयरूप्यकाणि दण्डितः। श्रीविद्याधर इमं राशिं झलायठक्कुराणां श्रीकुशलसिंहमहोदयानां कृपया राजकीयकोशागारे प्रदत्तवान्। कालान्तरे इयमाज्ञा निराकृता राज्ञा। श्रूयते, वृद्धावस्थायां राज्ञा श्रीविद्याधरस्य बीजापुरं विहाय सर्वे ग्रामाः पुनरायत्तीकृताः।

श्रीविद्याधरचक्रवर्तिनि दिवङ्गते न जाने किमर्थं राज्ञा तस्य भागिनेयाय एकः कूपः कश्चित् भूमिभागश्च प्रदत्तः। दानपत्रानुसारं निश्चीयते यत् श्रीविद्याधरचक्रवर्तिनो निधनं वैशाखशुक्ल-षष्ठ्यां १८०८ वैक्रमाब्दे सञ्जातम्।

श्रीगेरेटमहोदया लिखन्ति यत् "श्रीविद्याधरो भारतप्रसिद्धे ज्योतिषयन्त्रालयनिर्माणे सहायीभूतः" इति।



# कुट्टनीमते रत्नावल्याः प्रथमाङ्कस्य रङ्ग-प्रयोगः

डॉ० राधावल्लभः त्रिपाठी

श्रीमद्-दामोदर-विरचित-कुट्टनीमत-काव्ये रत्नावली-नाटिकायाः प्रथमाङ्कस्य अभिनयः कस्मिंश्चिद् वेशागारे श्रीसिंहपटभूपतेः तनयसमक्षं नर्तकाचार्येण केनचित् कारितमिति वर्णनमुपलभ्यते ।[१] राजपुत्रस्य नर्मसचिवो नर्तकाचार्येण विवदमानस्तं स्वनाट्यकलाप्रदर्शनोत्सुकं विदधाति । नर्तकाचार्यः स्वनटनटीनामभिनयकौशलमधिकृत्य ब्रवीति—

रङ्गगतापि क्षुद्रा शृणोति यत्परिचितं गृहायातम् ।
उद्दिश्य चापि कार्यं व्रजति ततः प्रकृतमुत्सृज्य ॥
आतारुण्योद्भेदात्कान्ते दृष्टिर्यथा न्यस्ता ।
सामाजिक-मध्यस्था कथमन्या समुपयाति परभागम् ॥
चेतोऽन्तरा ससत्त्वं सत्त्वे सति चारुता प्रयोगस्य ।
न भवति सा वेश्यानामल्पापि पुरुषहृतहृदयानाम् ॥
वयमपि देवनिकेतनमनङ्गहर्षे गते त्रिदिवलोकम् ।
अश्रितवन्तो गत्वा तीर्थस्थानानुरोधेन ॥
इह तु कदाचित्किञ्चिद्वृत्तिनिरोधाभिशङ्कया निरुत्साहाः ।
रत्नावल्यामेता विदधति करपादविक्षेपम् ॥
वत्सेश्वरभूमिकयोर्द्वयमनुकुरुते नरेश्वर वयस्यः ।
वासवदत्ता द्वितयप्रयोगमेषा विडम्बयति ॥
श्वसमादिष्वेवं शोभातिशयेन मदनुबन्धेन ।
अनया प्रसिद्धिराप्ता सिंहलराजात्मजानुकृतौ ॥
विविधस्थानकरचनापरिक्रमं गात्रवलनलालित्यम् ।
काकुविभक्तार्थगिरो रसपुष्टिं वासनास्थैर्यम् ॥

---

१. कुट्टनीमतम्, काव्यमाला—तृतीय-गुच्छके, द्वि० सं०, १८९६, श्लोकाः ७१४-९२७

सात्त्विकभावोन्मीलनमभिनयमनुरूपवर्तनाभरणम् ।
मिश्रामिश्रे नाट्ये लयच्युतिं वर्णयेच्च मञ्जर्याः ॥
एषाभिधानकीर्तनगुणितस्वशरीरकुसुमशररोषा ।
सहसोद्भिन्नमनोभवभावदशा सिन्दुवारविवरेण ॥
पश्यन्ती वत्सेश्वरमनुकार्याकृतिरमन्दपरितोषम् ।
साधुध्वनिमुखराननसामाजिकजनमनःसु विदधाति ॥
वत्सपतिमालिखन्ती कामावस्थाक्रमेण भजमाना ।
वेपथुपुलकस्वेदैरावहति विसंष्ठुलं हस्तम् ॥
सदृशेऽप्यनुभावगणे करुणरसं विप्रलम्भतो भिन्नम् ।
दर्शयति निरभिकाङ्क्षितसौख्यं ननु गोचरापन्ना ॥

—कु० म० ७७४-७८६

एतेन मञ्जरी नाम गणिका रत्नावलीभूमिकायां अतितरां पाटवं प्रदर्शयति स्म इति विज्ञायते । नूनं मनोभवभावदशाया प्रसह्याभिभवन्त्याः सहसाऽऽविष्करणं, सात्त्विकभावोन्मीलनं, नायकस्य चित्ररचनाकाले वेपथुपुलकस्वेदैर्विसंष्ठुलस्य स्वहस्तस्य तथा प्रदर्शनं, सदृशेष्वपि अनुभावेषु अभिनयपटुतया करुण-विप्रलम्भयोर्भेदप्रतीतिरिति नाट्यप्रयोगस्य सुदुर्लभानि वैशिष्ट्यानि मञ्जर्या स्वदक्षतया अधिगतानि ।

नर्तकाचार्यस्यैतद् विवरणं श्रुत्वा राजपुत्रस्तं प्रत्यादिशन्नाह—

नायकभूमौ भवतः कुशीलवाः कोहलादयो मुनयः ।
अप्सरसः स्त्रीलास्ये गान्धर्वे कमलजन्मनस्तनयः ॥
सुषिरस्वरप्रयोगे प्रतिपादनपण्डितो मतङ्गमुनिः ।
यदि रञ्जयति भवतो भूमिं स्पृशतां कुतः शक्तिः ॥
अभ्यधिकं धृष्टत्वं प्रायेण हि शिल्पजीविनो भवति ।
आश्रितनर्तकवृत्तेर्विशेषतो विजितरङ्गस्य ॥

(८५३-८५५)

नर्तकाचार्यस्तु तस्य वचनं श्रुत्वा स्वनाट्यकौशलस्य इदमित्थं परिचयाय रत्नावलीनाटिकायाः प्रथमाङ्कस्यैव रङ्गप्रस्तुतिमवलोकयितुं तमप्रार्थयत्—

विज्ञापयाम्यतस्त्वां नरेन्द्रनाट्यप्रजसदृशम् ।
अवलोकयाङ्कमेकं मा भवतु मम श्रमो वन्ध्यः ॥ ( ८५६ )

राजसूनुस्तस्य प्रयोगप्रदर्शनायानुमेने । ततः स समस्तमपि आतोद्यमारच्य प्रयोगं प्रारभत ।

## प्रावेशिकी

सूत्रधारस्य प्रवेशात् प्राक् प्रावेशिकी[1] विहिता । प्रावेशिक्याः स्वरूपं कुट्टनीमतगतविवरणेन सुस्पष्टं न भवति । सूत्रधारस्य प्रवेशकाले कृता परिचयगीतिरेव प्रावेशिकीति प्रतीयते । तद्यथा—

वांशिकदत्तस्थानकतद्भावितभिन्नपञ्चमे सम्यक् ।
प्रावेशिक्यवसाने द्विपदीग्रहणान्तरे विशति सूत्री ॥ ( ८५८ )

प्रावेशिक्या गुणचन्द्र-वेम[2]-नान्य[3]-प्रभृतिभिर्या परिभाषाः कृताः, ताभिः प्रावेशिकी-प्रयोगस्य विवरणमिदं सङ्गच्छते । एतद्विवरणानुसारं प्रावेशिक्यां वांशिकैः स्थानकं[4] दत्तम् । तेन पञ्चमस्वरः विभिन्न

---

१. का नाम प्रावेशिकीति प्रतिपादयन् गुणचन्द्र आह—'प्रविशतः पात्रस्य रसभावप्रकृत्यवस्थादिकं प्रवेशशब्देनोच्यते । तदनुसारेण श्लेषसमासोक्त्याद्यलङ्कृतं यद्रूपकं गीयते सा प्रावेशिकी ।

प्रवेशः प्रयोजनमस्या इतीकणि प्रावेशिकी । यथा देवीचन्द्रगुप्ते पञ्चमाङ्के स्वापायशङ्किनः कृतकोन्मत्तस्य कुमारचन्द्रगुप्तस्य चन्द्रोदयवर्णनेन प्रवेशप्रतिपादिका ।—भरतकोशे, पृ० ४०७

२. प्रवेशसूचनी या तु पात्राणामर्थयोगतः ।
नाना भावरसोपेता सा स्यात् प्रावेशिकी ध्रुवा ॥—वेमः ।

३. गीयन्ते यत्र सादृश्यादल्पावस्थानकीर्तनात् ।
रसभावानुरोधेन रागा यत्र भवन्ति हि ॥
छन्दांसि वै प्रलम्बानि पदैः श्रोत्रसुखानि च ।
सैव प्रावेशिकी ज्ञेया प्रवेशविषये मता ॥—नान्यः ।

४. स्थानकस्य स्वरूपमप्यत्र विचारणीयम् । किमेतद् रङ्गे स्थानविशेष-

इति वादनस्यात्र गायनेन संयोजनं प्रतीयते। रत्नावलीनाटिकाया मूलमातृकायां प्रावेशिकी उल्लेखं न प्राप्तवती।

प्रावेशिक्या अवसाने द्विपदीग्रहणं कृतम्। द्विपदी तु गायनस्य कोऽपि प्रकारः।[१] द्विपदीखण्डस्योल्लेखः रत्नावलीरूपकेऽपि द्वयोश्चेट्योर्नर्तनवर्णने विद्यते, किन्तु न प्रस्तावनायाः प्राक्।

## प्रस्तावना

प्रावेशिक्याः समनन्तरं सूत्रधारः सामाजिकानां समक्षमुपतस्थौ। स रूपकगतवस्तु प्रति सामाजिकानुन्मुखीकृत्य तेषां हृदयानि अरञ्जयत्।

> उत्साहभावयुक्तः सामाजिकहृदयरञ्जनं कुर्वन्।
> कविनैपुणवत्सेश्वरचरितस्य विधेयदाक्ष्यसामग्र्या ॥
>
> —कु० म० ८५६

अत्र रत्नावल्यां 'श्रीहर्षो निपुणः कविः' (१।५) इत्यादि-सूत्रधार-विहित-सम्बोधनस्य सङ्केत एव दामोदरगुप्तेनाकारि। तदनु सूत्रधारः अष्टकलापरिमाणां ध्रुवां तानलययुक्तां परिकल्प्य नटीमाहूय तया समं स्वगृहकार्यसंलापमकरोत्—

---

मुताहो अङ्गानां सन्निवेशरूपमथवा ध्वन्युत्पादकत्रिविधावयवरूपम्। स्थानकस्य स्थानस्य वा परिभाषाः पुरातनग्रन्थेषु विभिद्यन्ते। तथा हि—प्रविश्य रङ्गं स्थित्वाऽत्र चार्यादीः कुर्वते क्रियाः। नर्तका येन-तत्रादौ स्थानकमभिदध्महे ॥—कुम्भः।

अङ्गानां यस्सन्निवेशो विशेषो निश्चलो भवेत्।
तदुच्यते स्थानमिति भिद्यते तदपि त्रिधा ॥—भरतकोशे पृ० ७४७

१. शुद्धद्विपदिकापूर्वं पूर्णद्विपदिका ततः।
मानवी चन्द्रिका चाथ धृतिस्तारस्ततः परम् ॥—जगदेवः (भरतकोशे)
करणाख्येन तालेन गातव्यो गमकान्तरे।
आभोगोऽनुपदैः कार्यो न्यासस्तालद्विमानतः ॥
द्विपदी च भवेदेवम्।—हरिपालः (तत्रैव)

अष्टकलापरिमाणां ध्रुवां च परिकल्प्यतानलययुक्ताम् ।
आहूय नटीं कृत्वा तया समं स्वगृहकार्यसंलापम् ॥—कु० ८६०

ध्रुवा हि नाम सङ्गीतस्य विशिष्टा पद्धतिः । प्रकरणेऽस्मिन् रत्नावल्यां तु ध्रुवायाः न कोऽप्युल्लेखो दृश्यते । केवलं सूत्रधारस्तत्र एतदेव ब्रूते—'तद्यावद् गृहं गत्वा गृहिणीमाहूयसङ्गीतकमनुतिष्ठामि ।'[1]

कुट्टनीमतानुसारं सूत्रधारो नट्या सह गृहकार्यविषयकवार्तालापमकरोत् । कीदृशोऽसौ वार्तालाप इति न सुतरां वर्णितं तत्र । रत्नावल्यां नटी-सूत्रधारयोर्मिथः संलापः नट्या कौटुम्बिकीं चिन्तां विषयीकरोति । तथाहि—

नटी ( निःश्वस्य, सोद्वेगम् )—अज्जउत्त ! णिच्चिन्तो दाणिं सि तुमं ता कीस ण णच्चसि, मह उण मन्दभाआए एक्का ज्जेव दुहिदा । सापि तुए कहिंपि देसन्तरे दिण्णा । कहं एव्वं दूरदेसट्ठिदेण भत्तुणा सहसे पाणिग्गहणं भविस्सदि त्ति इमाए चिन्ताए अप्पावि मेण पडिहदि ।'[2]

कुट्टनीमतवर्णिताभिनयेऽपि एतादृशवार्तालापः सूत्रधारस्य नट्या सममभवदित्यनुमातुं युज्यते । तथापि उभयत्र विशेषं कमपि पश्यामः । रत्नावल्यां सूत्रधारः नटीदर्शनेच्छुः रङ्गे परिक्रमन्नेव स्वगृहं गच्छंस्तत्र प्रविशंश्च चित्रितः । तथा हि—

सूत्र०—तद्यावद् गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि । ( परिक्रम्य नेपथ्याभिमुखमवलोक्य च )—इदमस्मदीयं गृहम् । यावत्प्रविशामि । ( प्रविश्य )—आर्ये, इतस्तावत् ।

कुट्टनीमतानुसारं सूत्रधारस्य स्वगृहगमनादिकं प्रयोगकालेऽनपेक्षितमिति नाभिनीतं प्रतीयते ।

एवं गृहकार्यसंलापव्याजेन सूत्रधारो यौगन्धरायणस्यागमनमसूचयत् । ततः कानिचन पदानि निपुणं गत्वा गृहिण्या सह निःसरणगीतेन निरगच्छत्—

---

१. रत्नावली, चौखम्भा सं० १९६६, पृ० ११

२. रत्ना० पृ० ११–१२

सूचितपात्रागमनः किञ्चिद् गत्वा पदानि निपुणानि ।
निश्चक्राम गृहिण्या सार्धं निःसरणगीतेन ॥—कु० ८५१

विवरणमिदं सर्वथा रत्नावलीमनुहरति । तथापि कुट्टनीमते निःसरणगीतेन सह नटीसूत्रधारयोर्निर्गमनमुल्लिखितं, रत्नावल्यां तु निःसरणगीतं न विनिविष्टम् । अत एव नाट्याचार्येण प्रयोगे रुचिरतामाधातुं निःसरणगीतं किमपि अत्र मूलरूपकेऽनुपलभ्यमानं संयोजितमिति मन्यामहे ।[1]

## यौगन्धरायणस्य प्रवेशः

निर्गते सूत्रधारे विस्मयान्वितो यौगन्धरायणः सपदोद्घातं रङ्गं प्रविवेश । स दुर्घटघटनेन नायकस्य उदयनस्य उन्नतिः कथं भवितेत्यसूचयत् । ततः प्रासादमारुहन्तं मदनमहोत्सवमवलोकयितुं प्रविशन्तं नायकं निर्दिश्य असौ अनन्तरकरणीयसम्पादनाय निर्गतः—

आश्रित्य पदोद्घातं प्रविवेश ततः सविस्मयोऽमात्यः ।
दुर्घटघटनेन क्षितिनाथस्योदयं समुद्दिश्य ॥[2]
प्रासादमारुहन्तं कुसुमायुधपर्वचर्चरीं द्रष्टुम् ।
निर्दिश्य वत्सराजं समनन्तरकार्यसिद्धये निरगात् ॥ (८६२-८६३)

वर्णनमिदं मूलरूपके यौगन्धरायणाभिनयेन सर्वथा साम्यमावहति । तथाहि—

यौगन्ध०—अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गनिमग्नायाः फलकासादनं क्व च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः सम्भावनं रत्नमालाचिह्नायाः प्रत्यभिज्ञानादिहानयनं च । ( सहर्षं ) सर्वथा स्पृशन्ति नः स्वामिनमभ्युदयाः । ( रत्ना०, पृ० १७ )

---

१. उपर्युक्त प्रकरणेन साधु प्रतिभाति यत् रूपकस्य प्रस्तावना नाट्याचार्येण सूत्रधारेण प्रणीता—सम्पादकः ।

२. काव्यमाला-संस्करणे 'नमुद्दिश्य' इति अस्पष्टः पाठः दृश्यते । 'समुद्दिश्य' इत्यस्माकं प्रस्तावितं संशोधनम् ।

कुट्टनीमतस्थविवरणानुरूपमेव मूलरूपके यौगन्धरायणो प्रासादमारुहन्तमुदयनं सूचयति। तच्चेत्थं—'अये मधुरमभिहन्यमानमृदुमृदङ्गानुगतसङ्गीतमधुरः पुरः पौराणां समुच्चरति चर्चरीध्वनिस्तथा तर्कयामि यदेनं मदनमहीयासं पुरजनप्रमोदमवलोकयितुं प्रासादाभिमुखं प्रस्थितो देव इति। ( तत्रैव पृ० १८ )

तथा च—( ऊर्ध्वमवलोक्य ) अये कथमधिरूढ एव देवः प्रासादम्। ( तत्रैव पृ० १९ )

## मदनमहोत्सववर्णनम्

यौगन्धरायणे गते विदूषकेण सह राजा प्रविवेश। स प्रथमं स्वसैन्यसम्पत्त्या सन्तोषमभिव्यानक्।

> विस्मयति स्म नरेन्द्रः प्रासादगतः समं वयस्येन।
> अवलोकयन् प्रगाढं समुदितचेताः स्वसैन्यसम्पत्त्या॥ (कु०८६४)

अत्र 'राज्यं निर्जितशत्रु' ( १।९ ) इत्यादि मूलरूपकस्थपद्यं प्रति सङ्केतः।

तदनु राजा मदनोत्सवमवर्णयत्। कुट्टनीमतस्थविवरणे संवादानां प्रायशः सङ्क्षिप्तरूपं सङ्केतमात्रमेव वा प्रदत्तं, राज्ञः अयं संवादः पुनः सविस्तरमुल्लिखितः। तथा हि—

> विस्मयभावाकृष्टः प्रोत्फुल्लविलोचने ततो विसृजन्।
> नृत्यति पौरजनौघे प्रोवाच वयस्य पश्येति॥
> तुल्यशिशुतरुणवृद्धं समगुप्तागुप्तयुवतिसविचेष्टम्।
> अगणितवाच्यावाच्यं क्रीडन्ति जनाः प्रवृद्धहर्षेण॥
> पिष्टातकपिञ्जरितं रुचिरोच्छ्रितविविधकुसुमनिर्यूहम्।
> गात्रायासमुत्थितबहुनिःश्वासप्रकीर्णपटवासम्॥
> तूर्यरवव्यामिश्रितकरतालैरनुजनं प्रनृत्यन्तम्।
> मुहुरुपवत्सववलनं संदर्शितदार्ढ्यसौष्ठवं सुचिरम्॥
> अस्तु वसन्तः सततं स्वाधीनाभीष्टजनसमाश्लेषात्।
> इति गायन्ती रभसादालिङ्गति मदवशात्तरुणी॥

क्रोडन्त्या भ्रमरहितं शृङ्गकजलेन ताडितस्तरुणः ।
सीमन्तिन्या गायति हृष्टात्मा सुभगमात्मानम् ॥
भग्ने लज्जासेतौ पर्वावसरेण कुलवधूवदनात् ।
अग्लानोक्तिजलौघो निर्यातः वार्यते केन प्रसरन् ॥
तुल्यव्यापारगिरां ललनानां देवनप्रसक्तानाम् ।
आर्यानार्याविगमं मृदनावृतिजापिका कुरुते ॥
—[ ८६४-८७२ ]

वर्णनमिदं राजा-विदूषकाभ्यां विहिते वर्णने क्रोडीकरोति, अथ च ताभ्यामपि विस्तीर्णतरम् । केचन नूतनप्रसङ्गा अप्यत्र संयोजिताः । नहि रत्नावल्याम् अगणितवाच्यावाच्यत्वस्य कुलवधूनां निर्लज्जचर्याया देवनव्यापारस्य वा उल्लेखो विद्यते । अत एव वेश्यागारसमागतसामाजिकानां रुचिं वीक्ष्य नाट्याचार्येण स्वप्रयोगे संवादोऽयं परिवर्धितः ।

## चेटीद्वयप्रवेशः

अथ मदघूर्णितनेत्रे सहचरनिर्दिष्टे वासवदत्ताप्रहिते द्वे चेट्यौ प्रविविशतुः ( ८७३ )।[1] तेऽवलोक्य कौतूहलाक्रान्तमना महीपतिश्चलितनयनवृत्तिर्निजगाद—'अहो निर्भरं क्रीडितमनयोर्विलासिन्यो'रिति ( ८७४ ) ।

रत्नावल्यामपि एवमेव राजा कथयति—'अहो निर्भरः क्रीडारसः परिजनस्येति ( रत्ना० पृ० २६ ) ततो राजा नृत्यन्तौ चेट्यौ वर्णयति । वर्णनमिदमेकेन स्रग्धरावृत्तेनैव मूलरूपके सम्पादितम् ,[2] कुट्टनीमते तु वर्णनमेतत् पृथुलतरम् । तथा हि—

---

१. सहचरोऽत्र विदूषकः । मूलरूपके विदूषक एव चेटीद्वयं निर्दिशति—'भोः एषा खलु मदनिका······चूतलतिकया सहेत एवागच्छति ।' ( रत्ना० पृ० २७ ) । कुट्टनीमतमेतयोर्नामनी नात्र निर्दिशति, किन्तु ८७८ तमे पद्ये ते प्राप्येते ।

२. रत्ना० १।१६

मूलरूपके चेट्यौ द्विपदीखण्डं गायन्त्यौ प्रविशतः, तादृशगायनस्यात्र नास्त्युल्लेखः ।

करपीडनोपमर्दव्यतिकरसमकदर्थ्यमानोऽपि ।
स्तनमण्डले स्थितोऽहं त्वं पुनराकृष्य कुत्रचित् क्षिप्तः ॥
अधुना त्वरयसि मामिति कोपादिव बाणवारमभिरामाम् ।
वर्णचित्रपदन्यासैर्वदन्त्याहन्ति हार उच्छलितः ॥
चूतलताधम्मिल्लस्त्रानच्युतशेखरेन्दवे श्लाघ्यम् ।
अधृतपतनिर्व्यूहं न च समदनिकां वाणीम् ॥
स्तनभारावनतस्य प्रतनोर्मध्यस्य नास्ति तेऽपेक्षा ।
इत्थमिव पादलग्नौ क्रीडन्त्या नूपुरौ रसतः ॥
वहति स्म यानि तत्त्वं सपाणिकृच्छ्रेण मन्दसञ्चारम् ।
कलयति तन्नूनमयं जयति मनोजन्मनो महिमा ॥

( ८७६–८८० )

अथ विदूषकोऽपि राज्ञोऽनुमतिमुपलभ्य तयोर्मध्ये चिक्रीड (८८१) । मूलरूपके विद्यमानः[1] तस्य ताभ्यां नर्मालापोऽत्र न विवृतः । विस्तर-भिया दामोदरगुप्तेन न स वर्णित इति सम्भाव्यते, अन्यथा तादृशाला-पस्य प्रयोगे निराकरणं तु न सङ्गतिमुपैति ।

### देव्याः सन्देशनिवेदनम्

उभे अपि चेट्यौ चिरं क्रीडित्वा राजानमुपगम्य प्रद्योतस्य सुतायाः सन्देशमूचतुः ( ८८२ ) । 'देव, देवी आदिशती'त्यधोक्ते ते सलज्जमन्यो-न्यस्य मुखमवलोक्य—'नहि नहि विज्ञापयति प्रणम्य विनयेन' इति व्याजह्रतुः ( ८८३ ) । मूलरूपकेऽयं संवादस्तथैव सन्निविष्टोऽस्ति—

उभे ( परिक्रम्य, उपसृत्य च )—जेदु जेदु भट्टा । भट्टा देवी आण-वेदि ( इत्यर्धोक्ते लज्जां नाटयन्त्यौ ) णहि णहि, विण्णवेदि ।

अनन्तरं नाटिकायां राज्ञो विदूषकस्य च कथने विद्यते ।[2] तयोः

---

१. रत्ना० पृ० ३१

२. राजा—( सहर्षं विहस्य सादरम् )—मदनिके, नन्वाज्ञापयतीत्येव रमणीयम् । विशेषतोऽद्य मदनमहोत्सवे । तत्कथय किमाज्ञापयति देवी । ( तत्रैव, पृ० ३३ )

विदू०—आः दासीए धीए । किं देवी आणवेदि ।

सङ्केतो न कुट्टनीमते विहितः। एतादृशौपचारिकसंवादान् प्रति सामाजिकस्योपेक्षां वीक्ष्य ते निराकृते इति सम्भावनात्र जागर्ति।

अनन्तरं दास्यौ देव्याः सन्देशं निवेदयामासतुः—

मकरध्वजस्य पूजां त्वत्पादसरोजसन्निधौ कर्तुम्।
पृथिवीमण्डलमण्डन समीहते मे मनोवृत्तिः॥ (८८४)
प्रियरतिभोगो मदनो दयितवसन्तो मदसि वसनाम्।
भावेन भवान् सृष्टो लोकस्थित्या तु कुसुमशरपाणिः॥ (८८५)

रत्नावल्यां चेटीभ्यां निवेदितः सन्देशः सङ्क्षिप्ततरः किञ्चिद् भिन्नश्च। तथा हि—

उभे—एवं देवी विण्णवेदि—अज्ज क्खु मए मअरन्दोज्जाणे गदुअ रत्तासोअपाअवतले संठाविदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा। तहिं अज्जउत्तेण संणिहिदेण होदव्वम्।' (पृ० ३३)

अत्रापि प्रेक्षकरुच्यनुकूलं वा नायकस्य गौरवं प्रख्यापयितुं वा संवादांशः स्तोकं परिवर्धितः।

मूलनाटिकायां देव्याः सन्देशं निशम्य राजा विदूषकश्च हर्षं प्रकटयतः।[1] कुट्टनीमते तयोर्हर्षव्यञ्जकौ संवादौ नोल्लेखं गतौ।

सन्देशं दत्त्वा क्रीडन्त्यौ चेट्यौ कथं निर्जग्मतुरिति कुट्टनीमतकारश्चित्रयति—

इति दत्त्वा सन्देशं प्रकृतिवयःकालसमुचितं भ्रान्त्वा।
ते मदमदनाविष्टे बभूवतुर्जवनिकान्तरिते॥ (८८६)

उल्लेखेनानेन रङ्गपीठे जवनिकायाः संयोजनमनुमातुं शक्यते। चेट्यौ संलग्नां जवनिकां किञ्चिदाक्षिप्य तस्याः पृष्ठे तिरोबभूवतुरिति

१. राजा (सानन्दम्)—वयस्य ननु वक्तव्यमुत्सवादुत्सवान्तरमापतितमिति।
विदू०—भो वअस्स ता उठ्ठेहि। तहिं ज्जेव गच्छम्ह जेण गदस्स ममापि बम्हणस्स सोत्थिवाअणं किं वि भविस्सदि। (रत्ना० पृ० ३४)

प्रतिभाति। रत्नावल्यां तु 'निष्क्रान्त' इत्येव नाट्यनिर्देश उपलभ्यते। तेन कथं चेट्यौ निष्चक्रमतुरिति न ज्ञातुं प्रभवामः।

## देव्या अवतरणम्

अत्र उपलभ्यते रत्नावल्या मातृकायां कुट्टनीमतस्थतत्प्रयोगविवरणे च किमपि वैशिष्ट्यम्। चेटीद्वयनिर्गमनेन सह राजापि 'वयस्स, एहि अवतराव' इति कथयन् विदूषकेण सह प्रासादादवरोहणं नाटयति, तेन च निदिश्यमान—मार्गो राजा मकरन्दोद्यानं प्राप्नोति इति रत्नावली विवृणुते।[1] कुट्टनीमत तु राजाविदूषकयोः प्रासादावरोहणं मकरन्दोद्यान-प्रवेशं वा न वर्णयति; अपि तु तत्रैव देवी वासवदत्ता सपरिवारा अपनीत-तिरस्करिणी बभूवेति उल्लिखति—

अपनीततिरस्करिणी ततोऽभवन्नृपसुता समं चेट्या।
अविदितरत्नावल्या पूजोदितवस्तुहस्तयानुगता॥ ( ८८७ )

एतेन रङ्गे तिरस्करिण्याः प्रयोगो वासवदत्ताप्रवेशार्थं कृत इति ज्ञायते। वस्तुतः प्रयोगावसरे देवी प्रागेव सपरिवारपरिच्छदा तिरस्क-रिण्याः पृष्ठे स्थिता स्यात्, चेटीद्वयनिर्गमनानन्तरं तिरस्करिण्या अपनय-नेन सा सामाजिकानां दृष्टिपथमुपगता।

मूलरूपके तु राजा—विदूषकयोः प्रासादादवरोहणं मकरन्दोद्यान-प्रवेशं च चित्रयित्वा नाट्यकारः स्वकवित्वशक्तिप्रदर्शनाय उद्यानस्यातीव विस्तृतं वर्णनं तयोः संवादेषु करोति। संवादेषु एतादृश-काव्योपम-विपुल-वर्णनानि सूच्यांशमात्राणि रङ्गप्रयोगदृशा न श्लाघ्यानि। कुट्टनीमते मकरन्दोद्यानविवरणविषयकसंवादानां न जातु कश्चिदुल्लेखो

---

१. राजा—वयस्य, एहि। अवतरावः। (उभौ प्रासादावतरणं नाटयतः।) वयस्य, आदेशय, मकरन्दोद्यानस्य मार्गम्।

विदू०—एदु एदु भट्टा ( इति परिक्रामतः। )

विदू०—( अग्रतोऽवलोक्य )—एदं तं मअरन्दुज्जाणं ता एहि पविसम्ह। ( इति प्रविशतः। ) ( रत्ना० पृ० ३४–३५ )

दृश्यते । प्रयोगसौष्ठवाय तेऽपि संवादा नटैर्नाभिनीता इति सुकर-मनुमातुम् ।

रत्नावल्यां मकरन्दोद्यानवर्णनं कुर्वति राज्ञि पृष्ठतो नूपुराणां झङ्कृतिः श्रूयते । राजा तु कदाचिदशोकपादाहनिकाले नूपुररसितं श्रुत्वा इदानीं भृङ्गास्तदनुकुर्वन्तीति भ्रान्तिमापद्यते (रत्ना० १।१८) । विदूषकस्तस्य भ्रान्तिं निराकरोति—'भो वअस्स, ण एदे महुअरा णेउरसद्दं अणुहरन्ति । णेउरसद्दो ज्जेव एसो देवीए परिअणस्स ।'
(रत्ना० पृ० ३८)

अत्र सपरिजना देवी नेपथ्ये दूरादायान्ती सङ्केतिता । तथापि नूपुराणां रणनं तदागमनकृतं कथं भृङ्गाणां गुञ्जनस्य भ्रान्तिं जनयितुं शक्नोतीति स्थानेऽत्र शङ्का जागर्ति नूपुरझङ्कृति-भृङ्गरवयोः साधर्म्या-भावात् । तत्र इदं विचारयामः । नाटिकायाः प्रयोगकाले भृङ्गरवस्य प्रतीत्यै आतोद्यस्य विशेषः कश्चित् शब्दः कृतः स्यात् । वास्तविकभ्रमर-ध्वनितो भिन्नस्य तस्य शब्दस्य साम्यं नूपुररवेणापि भवितुमर्हति । तेन नूपुरशब्देन भृङ्गरवस्य भ्रान्तिर्नाट्यप्रयोगावसरे सामाजिकेषु सम्बो-भूयते । तन्मनसि अवधार्य रत्नावलीकारेण राजा—विदूषकयोः संवादौ अत्रोपनिबद्धौ । अथ प्रकृतमनुसरामः । इत्थं प्रसरति राजा—विदूषक-योर्वार्तालापे—'ततः प्रविशति वासवदत्ता काञ्चनमाला पूजोपकरणहस्ता सागरिका विभवतश्च परिवार' इति नाट्यनिर्देशानुसारं देवी प्रविशति । तस्याश्च प्रवेशस्तिरस्करिण्या अपनयनेन अथवा अन्येन केनाप्युपाये-नेति न निश्चेतुं शक्नुमः । अथ प्रविष्टापि वासवदत्ता रङ्गस्यैकदेशे स्वपरिचारिकाभिः संलपति, राजाविदूषकौ न तां प्रेक्षेते, न वा सा प्रेक्षते तौ । कियत्कालमनु राजा तामुपसरति । कुट्टनीमते तु तिरस्करि-ण्यपनयनद्वारा राजा—विदूषकयोः समक्षं देव्याः प्रकटनं वर्णितम् । वस्तुतो राजा—विदूषकयोर्भूयो भूयः परिक्रम्य एकतो मकरन्दोद्यान-प्रवेशः, अपरतश्च देव्यास्तत्र आगमनम्—एतादृशी योजना द्वयोः खण्डयोर्विभक्तं विशालं रङ्गमपेक्षते । मूलरूपकमेतादृशदीर्घरङ्गं मनसि परिकल्प्य श्रीहर्षेण रचितं स्यात् । कुट्टनीमते वर्णितः प्रयोगः वेश्या-

सद्मनि स्वल्पसामाजिकानां समक्षं लघुरङ्गे कृतः स्यात्। अत एव एकतो नायक—विदूषकयोर्मकरन्दोद्यानावलोकनव्यासक्तमनसोरितस्ततः परिक्रमणम्, अपरतश्च सपरिवारायाः देव्या आगत्य तत्रैव रक्ताशोकपादपं प्रति गमनमित्यादि तत्र अप्रदर्श्य, तिरस्करिण्यपनयनपुरस्सरं द्रुतमेव तत्र नायिका अवतारिता।

## सागरिकायाः प्रेषणम्

सागरिका देव्या अज्ञाता एव तामनुगता आसीत्। एतद्विज्ञाय देवी परिजनस्य प्रमादं निन्दित्वा जातसङ्क्षोभा काञ्चनमालां तस्याः परावर्तनाय निरदिशत्—

> अथ बुद्ध्वा सागरिकां प्रमादतः परिजनस्य निन्दित्वा।
> काञ्चनमालामवदन्नृपमहिषी जातसङ्क्षोभा॥
> प्रेषय कन्यामेनामवरोधं त्वं गृहाण कुसुमादि।
> यावन्न भवति विषये वीक्षणयोर्भूमिनाथस्य॥
> [ ८८८–८८९ ]

अत्रापि रत्नावलीतोऽन्तरं स्फुटति। तत्र काञ्चनमाला देवीं निर्दिशति—'भट्टिणि अअं खु रत्तासोअपाअवो जहिं देवी पूआं णिव्वत्तइस्सदि॥' वासवदत्ता कथयति—'तेण हि मे पूआणिमित्ता उवअरणाइ उवणेहि।' सागरिका च सत्वरं पूजोपकरणहस्ता तस्याः समक्षं स्वयमायाति। वासवदत्ता च सागरिकां तत्र वीक्ष्य विषण्णवदना मनसि कलयति—'अहो पमाओ परिअणस्स। जस्स ज्जेव दंसणपधादो पअत्तेण रक्खीअदि तस्स ज्जेव दिट्ठिगोअरे पडिदा भवे। भोदु। एवं ताव भणिस्सम्।' इति चिन्तयित्वा सा स्वयमेव सागरिकां मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वाऽत्रागमनं तवानुचितमिति पूजोपकरणानि काञ्चनमालाहस्ते समर्प्य सत्वरमितो गच्छेति समादिशति ( रत्ना० पृ० ४०–४१। )। कुट्टनीमतवर्णितप्रयोगे वासवदत्ता प्रथमं काञ्चनमालामेव समादिशति—प्रेषय कन्यामेनामवरोधं त्वं गृहाण कुसुमादीनि। काञ्चनमालां सा—सागरिकाया राज्ञो दृष्टियथावतरणं मम नितरामनभिप्रेतमित्यपि स्पष्टमवगमयति। ततः काञ्चनमाला एव सागरिकामुपगत्य देवीसन्देशावगतार्थां करोति ताम्—

उपगम्य ततश्चेटी तामभ्यवदत्किमर्थमायाता ।
मेधाविनीं विमुच्य व्रज तस्मिन् मा विलम्बस्व ॥ ( ८९० )

प्रयोगे अन्वितिं कामप्युत्पादयितुं कार्यव्यापारप्रभावं संवर्धयितुं मूलरूपकस्थमिदं प्रकरणं स्तोकं संशोधितम् । अत्र देवी वासवदत्ता स्वयं सागरिकामुद्यानादपगन्तुं न कथयित्वा आदौ नितरां स्वविश्वस्तां परिचारिकां काञ्चनमालां प्रति स्वमनोगतं निवेदयति । काञ्चनमाला सदृशी चतुरचेटी कमपि व्याजं कल्पयित्वा सागरिकामपसारयितुं प्रभवतीति रूपकस्य अग्रिमाङ्केषु काञ्चनमालायाश्चारित्र्येण सर्वथा सङ्गच्छते । अन्यच्च—सदृशमेतत् राजमहिषीणां यत् ताः स्वयं किमपि कार्यमकृत्वा स्वपरिजनेन तत् कारयेयुः । किन्तु इतोऽप्यधिकतरास्य संशोधनस्य सङ्गतिर्विद्यते । सुसङ्गता सागरिकायाः यथा प्रियसखी, नायकेन प्रच्छन्नमिलनादिकर्मसु सततं साहाय्यमाचरति, तथैव काञ्चनमाला देव्या वासवदत्ताया विश्वासैकायतनभूता सततं जागरूकतया तस्याः सहायतां विदधाति । एकतः सुसङ्गतामात्रसहाया मुग्धा सागरिका, अपरतः काञ्चनमालासहाया राज्ञी वासवदत्ता—इति उभयोरपि पक्षयोरेतयोर्द्वन्द्वेन कोऽपि चमत्कारो रूपकेऽस्मिन् दृश्यते । स तु रूपकस्य द्वितीयाङ्क एव सर्वथा स्फुटति । किन्तु दामोदरगुप्तवर्णितप्रयोगे नाट्याचार्येण प्रथमाङ्क एव 'सागरिकां नृपतेर्दृष्टिपथाद्रक्ष' इत्यभिप्रायगर्भं संवादं काञ्चनमालां प्रति वासवदत्तामुखे स्थापयित्वा द्वंद्वस्यैतस्य आधारभूमिरत्रैव सुदृढं निर्मिता ।

सागरिका देव्याः सन्देशं श्रुत्वा अनङ्गपूजावलोकनकौतूहलाक्रान्तहृदया तत्रैव निलीयत इति अंशः उभयत्र समानः ।[1]

कामपूजावसरे मूलरूपकस्था उदयनस्य वासवदत्तां प्रति उदीरिताः प्रणयगर्भोक्तयः स्वल्पपरिवर्तनेनास्मिन् नाट्यप्रयोगे सन्निवेशिताः ।

---

१. विहिते देव्यादेशे मनसीदं विधाय सा तस्थौ ।
विहगी सुसङ्गताया हस्ते दत्त्वा मनोभवसपर्याम् ॥ ( ८९६ )
अवलोकयामि तावत्तिरोहिता सिन्दुवारविटपेन ।
तातान्तःपुरिकाभिर्यथार्च्यते, किं तथैतदुत नेति ॥ ( ८९७ )

तथाहि—

परिभुक्तमपि नवत्वं शृङ्गाररसं मदनपर्वणा नीतम् ।
भजमानो भजमानां स्वागतवचसाभिनन्द्य तामूचे ।। ( ८६४ )
भर्गविलोचनपावकदाहात्यधिकां मनोभवो मन्ये ।
प्राप्स्यति तव करसङ्गमसुखविरह समुत्थितां पीडाम् ।।[1] ( ८६५ )

अस्मिन्नेव समये नग्नाचार्यः ( ? ) कश्चित् नेपथ्ये प्रशस्तिपाठं करोति ।[2] मूलरूपके तु वैतालिक एतत्कर्म सम्पादयति । प्रशस्तिः पुनरुभयत्र समाना, केवलं आर्याच्छन्दसि तस्या गुम्फनाय मनाक् परिवर्तनं दामोदरेण व्यधायि । तथाहि—

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन् ।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ।।
( रत्ना० १।२३ )

नयनानन्दमखण्डितमण्डलमभिराममभृतरश्मिमिव ।
सायन्तन आस्थाने क्षितिपतयः सन्त्युदयनं द्रष्टुम् ।।
( कु० म० ८६८ )

प्रशस्तिमिमामाकर्ण्य सागरिका उदयनं परिचिनोति, उपचीयमान-हर्षप्रकर्षा उत्पन्नरागा च साभिलाषं नृपतिमवलोकयन्ती निर्गच्छति ।

---

१. तुलनीयम्—

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न सम्प्राप्तः पाणिस्पर्शोत्सवस्तव: ।। ( रत्ना० १।२२ )

२. शृङ्गाररससमुद्रं सोत्कलिकं निपतिते तथा नृपतौ ।
तारमधुरस्फुटार्थं नग्नाचार्यः पपाठ नेपथ्ये ।। ( ८९७ )

अत्र 'नग्नाचार्य' इति भ्रष्टः पाठः प्रतीयते । 'नाट्याचार्य' इति साधीयान् स्यात् ।

राजापि सायङ्काल–वर्णनं श्रुत्वा सपरिवारो निष्क्रान्त इति प्रथमाङ्क-पर्यन्तोऽयं कथांशः मूलरूपकेण पूर्णतः संवदते ।[१]

## निष्कर्षः

रत्नावल्याः प्रयोगस्य विवरणमिदं दामोदरगुप्तेन आर्याच्छन्दसि प्रस्तुतम् । संवादांश्छन्दसि निबद्‌धु तेषु यथेच्छं परिवर्तनं कृतमिति प्रतीयते । विवरणस्यास्य ऐतिहासिकता गवेषणीया । स्वकल्पनयैव अभिनयवृत्तं कविना कुट्टनीमते संयोजितमथवा यथाभूतं प्रयोगं प्रेक्ष्य रचितमिति इदमित्थं निश्चेतुं न शक्नुमः । तथापि नाट्याचार्याः यथारङ्गं यथावसरं च प्रयोगकाले मूलरूपके परिवर्तनं कुर्वन्ति स्म इति विवरणेनानेन विज्ञायते । साकल्येन पुनः मूलरूपकतुलनायां प्रयोगस्यास्य वैशिष्ट्यानीत्थं सन्ति—

( १ ) प्रावेशिक्याः प्रयोगः कृतः । प्रस्तावनायां सूत्रधारोऽष्टकला-परिमाणां ध्रुवामकल्पयत् ।

( २ ) सूत्रधारनिर्गमनकाले निस्सरण-गीतं संयोजितम् ।

( ३ ) कथायां क्वचित् परिवर्तनं विहितं यथा सागरिकाया उद्यानाद्-पनयनप्रसङ्गे ।

( ४ ) चेट्योर्निर्गमनाय जवनिकाया, वासवदत्तायाः प्रवेशाय च तिरस्करिण्याः प्रयोगः कृतः ।

( ५ ) केचन संवादा निराकृताः । अपरे पुनः संशोधिताः, परिवर्धिता वा ।

( ६ ) सूत्रधारस्य नट्या आह्वानाय स्वगृहगमनं, नायकस्य मकरन्दोद्यानगमनं च न प्रदर्शितम् ।



१. कु० म० ९०१–९०५

# संस्कृतसाहित्ये व्यायोग-परम्परा

*आचार्यो रविनन्दनत्रिपाठी*

दशरूपकेषु व्यायोगः प्रायेण वीररसप्रधानः लोकजागरणाय व्यायोगोऽनुत्तमं काव्यसाधनम्। भरत-धनञ्जय-विश्वनाथादिभिर्नाट्याचार्यैर्व्यायोगस्य स्वग्रन्थेषु लक्षणं कृतम्। तेषां समेषां लक्षणानामधोलिखित आशयः—

( १ ) व्यायोगस्य कथावस्तुना विख्यातेन भाव्यम्।

( २ ) अस्य नायकप्रतिनायकावपि विख्यातौ धीरोद्धतकोटिकौ भवेताम्। एतदतिरिक्तं व्यायोगे बहवः पुरुषा भवेयुः, किन्तु तेषां संख्या दशाधिका न भवेत्।

( ३ ) शृङ्गारहास्यशान्तरसेषु कोऽपि रसोऽङ्गी न भवेत्। तदतिरिक्तेषु रौद्रवीरभयानकबीभत्साद्भुतेषु केनचिद् अङ्गिरसेन भाव्यम्। करुणरसस्यावस्थितिरपि गौणरूपेणैव स्वीकार्या।

( ४ ) स्त्रीभूमिका लघ्वी भवेत्।

( ५ ) गर्भ-विमर्शसन्ध्योरभावः स्यात्।

( ६ ) कैशिकीवृत्तेः प्रयोगो न स्यात्।

( ७ ) तत्र सङ्ग्रामस्य हेतुर्नारी-प्रणय-स्पर्धा न भवेत्।

( ८ ) अस्य समग्रं घटनाचक्रमेकदिवसीयं स्यात्।

( ९ ) तस्य च सम्पूर्णस्य घटनाचक्रस्योपनिबन्धनमेकस्मिन्नेवाङ्के भवेत्।

महाकविभासस्य नाटकचक्रे रूपकद्वयं व्यायोगान्तर्गतं वर्तते। तत्र प्रथमो व्यायोगो दूतवाक्यमस्ति द्वितीयश्च मध्यमव्यायोगः।

## दूतवाक्यम्

दूतवाक्यस्य कथावस्तु महाभारतस्योद्योगपर्वतः संगृहीतम् । अस्य नायकः श्रीकृष्णः प्रतिनायकश्च दुर्योधनः । अस्मिन् कुरुवंशविग्रहप्रशमनाय श्रीकृष्णो दूतरूपेण धार्तराष्ट्राणां पाण्डवैः सह सन्धिं कारयितुं प्रयतते, परन्तु दुराग्रहो दुर्योधनः प्रथमत एव स्वाविनयं तनुते । स खलु सभायां श्रीकृष्णस्य प्रवेशात् प्राक् सभ्यान् श्रीकृष्णस्य स्वागतं कर्तुं निषेधति, परन्तु प्रविशत्येव श्रीकृष्णे सर्वे सभासदः तस्य स्वागतायोत्तिष्ठन्त्येव । दुर्योधन स्वानुत्थानाय द्रौपदीवस्त्राकर्षणचित्रे दत्तदृष्टिस्तिष्ठति । सोऽपि श्रीकृष्णसभाप्रवेशसम्भ्रमादासनात् पतति ।

दूतवाक्येऽस्मिन् दुर्योधनः पाण्डवानां कुशलप्रश्नेऽपि तेषां जारजत्वं प्रस्तौति तदुत्तरे श्रीकृष्णोऽपि पौराणिकमाख्यानं प्रस्तूय तं लज्जयति । तत्र दुर्योधनसभायां कृष्णः स्वभाषणेन सर्वेषां मनोवृत्तिं पाण्डवान् प्रति अनुकूलयति । अन्ततो दुर्योधनस्य दुरभिसन्धिं विफलीकृत्य श्रीकृष्णः प्रतिनिवर्तते ।

दूतवाक्ये श्रीकृष्णदुर्योधनौ प्रायेण दैव्यासुरीसम्पदोर्मूर्तरूपौ समुपन्यस्तौ । महाकविः भासो महाभारते चित्रितस्य श्रीकृष्णस्य विचारगतव्यक्तित्वस्य, दुर्योधनस्य च दुराग्रहमूलकप्रवृत्तीनां दूतवाक्यस्यैकाङ्किनो रूपकस्य समीचीनतया वर्णनं कृतवान् ।

कविनात्र दुर्योधनस्य चरित्रचित्रणद्वारा लोकसत्यमिदमुद्घाटितं यद् कुलेन बलेन धनेन मित्रसंग्रहेण चादूरदर्शी मानवस्तथाभिमानपरो जायते यथा स्वजनैरुपन्यस्तानुत्तमोत्तमान् निर्णयानप्यवहेलयति । परिणामतः सर्वत्र स्वेच्छाचारितया शत्रुभिः पराभूतो जनतायाः सहानुभूतेरपि पात्रं न भवति ।

एवमेव श्रीकृष्णस्य चरित्रचित्रणेन महाकविर्भासो धीरस्य, वीरस्य नीतिपटोर्दूरदर्शिनो मानवस्य स्वरूप समुपस्थापितवान् । नीतिचतुष्ट-

यस्य सामयिकप्रयोगे निष्णातो मानवः कथमिव स्वस्य स्वजनानां च सामाजिकस्थितिं द्रढयति, कथमिव च जनतायाः समादरसम्भृतायाः सहानुभूतेः पात्रम् भवतीति सार्वभौमतथ्यस्याभिरामं विश्लेषणं सञ्जातम्।

## मध्यमव्यायोगः

मध्यमव्यायोगस्य कथावस्तुनः सूत्राणि महाभारतस्य वनपर्वणि सन्ति। भीमो. हिडिम्बा, घटोत्कचश्चास्मिन् महाभारतीयानि कथा-पुरुषाः सन्ति। स्त्रीपुत्रसमेतस्य केशवदासस्यावतारणा, मातुः पारणार्थं कमपि मानुषं ग्रहीतुं घटोत्कचस्य केशवदासादीनामनुसरणादिकं सर्वं महाकविभासकल्पनाप्रसूतमस्ति। भीमघटोत्कचावस्मिन् नायकप्रति-नायकौ। वीररसोऽस्याङ्गीरसः। अत्र मध्यमकौन्तेयेन भीमेन कृतस्य मध्यमब्राह्मणात्मजस्य रक्षणस्य रमणीयं नाटकीय विवेचनं वर्तते। घटोत्कचद्वारा, मध्यमब्राह्मणात्मजमुद्दिश्य 'मध्यम !' इत्याह्वाने रङ्गमञ्चे भीमस्य मध्यमकौन्तेयस्य प्रवेशः सुस्थाने सम्प्रयोगस्य कोटौ वर्तते।

### लोकशिक्षा

मध्यमव्यायोगे पुरोहितस्य केशवदासस्य शरणागतेः, भीमस्य च शरणागतवत्सलतायाश्चित्रणेन कविः प्रजाशासकयोर्व्यावहारिकीं पृष्ठभूमिं भव्यतयोपस्थापितवान्। अयमंशो लोकशिक्षणदृष्ट्यानुपमो विद्यते।

## कल्याणसौगन्धिकम्

कल्याणसौगन्धिकव्यायोगस्य रचयिता महाकविर्नीलकण्ठोऽस्ति। कविरयं कुलशेखरवर्मणः समकालिकः, केरलप्रान्तान्तर्गते परमाग्रहारे-निवसतिस्म। डॉ॰ डे॰ महोदयस्य अनुसारं नीलकण्ठो नवमशतकेऽ-विद्यत।

कल्याणसौगन्धिकस्य कथावस्तु महाभारतमुपजीवति। अस्य नायको महाभारतस्य सुपरिचितो धीरोद्धतो भीमोऽस्ति। स्वर्णसन्निभं

कान्तिसम्पन्नं वायुना समानीतं दिव्यसुगन्धं किमपि सौगन्धिकं दृष्ट्वा समाघ्राय च द्रौपदी बहूनि सौगन्धिकानि भीमं याचते। भीमोऽपि प्रेयस्याः कामनां पूरयितुं सुगन्धदिशं प्रतिष्ठते।

भीमः सौगन्धिकसम्प्राप्तिस्थलीं गत्वा, युद्धे तत्रत्यरक्षकान् यक्षराक्षसान् विद्राव्य सौगन्धिकान्यवचिनोति। ततः प्रतिनिवर्तमानस्य भीमस्य मध्येमार्गं हनुमता सह सङ्घर्षो भवति तदैव कश्चन विद्याधरः तत्रैत्य तयोः समानपितृत्वं विवृणोति। तदनन्तरं तौ सौभ्रातृकत्वं पुरस्कृत्य प्रगाढ-मैत्री बन्धने निबद्धौ। एवं पराक्रमी भीमः सन्निवर्त्य द्रौपदीमनोरथं प्रपूरयति। कविना कथानके यथेच्छ—परिवर्तनानि कृतानि। कल्याणसौगन्धिकव्यायोगे प्रस्तुतस्य भीमस्योद्धत चरित्रस्य मन्थनेन नवनीतमिव लोकसत्यमिदमुपरिष्टादेव संस्फुरतियज्जगदिदं वीरभोग्यं वर्तते। पराक्रमद्वारा अभीष्टवस्तुनः सम्प्राप्तेर्बाधाः क्रमान्निर्मूला भवन्ति। हनुमद्भीमयोः सख्यस्य स्थापनया महाकविः प्रतियोगिनो वीरान् सन्दिशति—राष्ट्रसमृद्धये वीराः पारस्परिकां स्पर्धां विहायैकसूत्रे निबद्धा भवेयुः।

## ( ४ ) निर्भयभीमम्

निर्भयभीमं व्यायोगकोटिकं रूपकमस्ति। अस्य रचनाकारः प्रबन्धशतकर्ता रामचन्द्रो विद्यते। अस्यापि कथावस्तु महाभारतमुपजीवति। संवादं रोचकं विधातुं कविर्मूलकथानकं यथावश्यकं परिवर्तितवान्।

निर्भयभीमव्यायोगस्य नायको भीम एवास्ति। भासस्य मध्यमव्यायोग इवेहापि भीमो द्विजपुत्राय प्राणदानं ददाति।

निर्भयभीमस्य सार्थकतास्मिन् विद्यते यदत्र बकेन तत्परिजनैश्च दन्तैर्दष्टोऽपि भीमो नोद्विजति। अस्य निर्भीकस्य चरित्रस्य प्रस्तुतीकरणेन कविना क्षत्रिये शासके वा लोकोत्तरशक्तिशालितया अकुतोभयस्य कामना कृता।

व्यायोगोऽयं तदा विरचितो यदा देशः संकटापन्न आसीत्। देशे यवनानामाक्रमणानि बभूवुः। देशवासिनो नैराश्यसागरे निमग्ना आसन्। तस्मिन् समये कविरिमं व्यायोगं विरचय्य, अस्मिश्च अकुतोभयस्य भीमस्य चेतोविकासि व्यक्तित्वं जनतायाः समक्षं प्रकटय्य युगधर्मस्य सम्यक् परिपालनं कृतवान्।

## पार्थपराक्रमम्

पार्थपराक्रमव्यायोगस्य रचयिता प्रह्लादनदेवो वर्तते। प्रह्लादनदेवः स्वसमये परमविख्यात आसीत्। पार्थपराक्रमव्यायोगस्य नायको महाभारतस्य सर्वश्रेष्ठो धनुर्धरोऽर्जुनोऽस्ति।

अस्य कथानकं महाभारतस्य विराटपर्वणो गोहरणखण्डमनुसरति। कविना मूलकथानकं रोचकं नाट्योचित्तं च विधातुं बहु परिवर्तनं कृतम्। अस्य भाषा प्रसादगुणयुक्ता विपुलसमाससङ्कुला चास्ते। अनुप्रासयमकनिष्ठा शैली वर्तते। समग्रायां रचनायां वर्णेषु नृत्यत्प्रायत्वं विशेषतो दर्शनीयम्।

पार्थपराक्रमस्य रचनाकालो द्वादश शतकस्य मध्ययुगमस्ति, यदा हि भारते यवनानामाक्रमणानि बभूवुः।

प्रस्तुतरूपके कविर्गवामुद्धारमिषेण भारतवसुन्धराया उद्धारं कामयते। भीष्मद्रोणयोः सवादद्वारा कविः तान् धिक्करोति ये स्वार्थसिद्धये वैदेशिकैः सह सन्धि विधाय स्वराष्ट्रस्योपरिष्टाद् अत्याचारस्य कारणं भवन्ति।

## धनञ्जयविजयम्

धनञ्जयविजयं व्यायोगकोटिकं रूपकमस्ति। अस्य प्रणेता काञ्चनाचार्यो वर्तते। द्वादश—शतकेऽस्य प्रणयनं संवृत्तम्। अस्यापि नायकोऽर्जुन एव। कथावस्तुन उपजीव्यमपि महाभारतस्य विराटपर्वणो गोहरणखण्डो विद्यते। परन्तु कविः काञ्चनाचार्यो निजप्रखरशेमुषीद्वारा

अतिशयविख्यातं बहुकविविवर्णितमपि कथानकं रोचकरोचकैः कथनोपकथनैर्भूषयामास नवतामभिरामताञ्च संवर्धयामास । रूपकस्यास्य भाषा सरसतया सरलतया च सुशोभते। लघुसमासविन्यासे रूपकं बहुशोभते।

द्वादशशतके विरचितानामन्यव्यायोगानामिव धनञ्जयविजयव्यायोगस्यापि भारतराष्ट्रवासिनां मनस्सु शौर्यादिगुणानाविकासकरणमेव कवेरभीष्टम् प्रतिभाति ।

## किरातार्जुनीयव्यायोगः

किरातार्जुनीयव्यायोगस्य प्रणेता वत्सराजोऽस्ति । वत्सराजो द्वादशशतकस्योत्तरार्धे त्रयोदशशतकस्य च पूर्वचरणेऽविद्यत ।

अस्य व्यायोगस्य कथानकं महाभारतस्य वनपर्वानुसरति । अर्जुनोऽस्य नायकः । सर्वास्त्रातिशायिनः पाशुपतस्यास्त्रस्योपलब्धये वीरवरोऽर्जुनो हिमालये शिवप्रीणनाय तपस्तपति । दुर्योधनेन प्रेषितोऽसुरो वराहरूपं धृत्वा, अर्जुनं हन्तुं तमुपसरति । भक्तवत्सलो भगवान् शूलपाणिः तपस्यतोऽर्जुनस्य रक्षायै कैरातरूपमास्थाय सपत्नीकः सगण आविर्भवति । एतस्मिन्नेव समयेऽर्जुनो दिष्ट्या आक्रमणोद्यतं वाराहं पश्यति । शिवार्जुनौ युगपदेव स्वस्वबाणेन वाराहं प्रहरतः । मम बाणेनायं वाराहो हत इति विवादः सङ्ग्राममुद्भावयति । द्वावपि परस्परं युध्यतः । अर्जुनस्य परमं पराक्रममवलोकयितुं भगवान् भवानीपतिः कैरातं रूपं विहाय दुर्योधनस्वरूपं धारयति । दुर्योधनरूपं दृष्ट्वार्जुनः तं दुर्योधनमेव मन्यमानो विनिन्दन् युध्यति । अर्जुनस्य पराक्रमेण सन्तोषितः शिवः तस्मै पाशुपतमस्त्रं प्रयच्छति ।

कविः काञ्चनाचार्यो व्यायोगोचितरसाभिज्ञतायां परं निष्णातः। कवेः भाषा पाण्डित्यपूर्णासमलङ्कृता रसवती शोभते। कविना प्रयुक्ता दीर्घसमाससङ्कुलापि पदावली रसपेशलतां नोच्छेदयति ।

राष्ट्रस्यावनतिकारणं शृङ्गरातिशयं कविर्नेच्छति। तेन नान्द्यामेव

स्वमनोभावः प्रकटितः 'प्रमोदमाविष्करोति·········करवाललता न कान्ता'।

शिवत्रिशूलमेव राष्ट्रं शत्रुभ्यो रक्षितुं शक्नोति इति कवेर्धारणा। अतः कविर्नान्द्यां स्वकीययोगक्षेमाभ्यां शिवत्रिशूलमेव स्तौति—'चन्द्रार्धाभरणस्य तद्भगवतः शूलं शिवायास्तु नः।'

## शङ्खपराभवम्

शङ्खपराभवव्यायोगस्य रचयिता महाकविर्हरिहरोऽस्ति। हरिहरो गौडदेशमधिवसति स्म। कदाचित्तीर्थयात्राप्रसङ्गेन गूर्जरभूमिं समायातः। तस्मिन्नेव समये स्तम्भतीर्थमुपलक्ष्य शङ्खवस्तुपालयोर्युद्धमभूत् यस्मिन् शङ्खः पराजितो भूत्वा पलायितः। वस्तुपालस्य पराक्रमेण प्रभावितः कविर्हरिहरः प्रस्तुतं व्यायोगं प्रणिनाय।

शङ्खपराभवव्यायोगे शङ्खवस्तुपालयोः संवादे रङ्गमञ्चस्थितैर्मागधैर्व्यावर्णितः। एवं हि व्यायोगस्य प्रायः सम्पूर्णं कथानकं सूच्यकोटिं भजते। अन्ते विजयी पक्षो नागरजनैः समं नगरदेवताया एकल्लवीरायाः (श्रीदुर्गायाः) समक्षं देव्या अर्चनां विदधाति। ब्राह्मणा वेदपाठैः, नागरिकाः साधुवादैः, नर्तक्यो नर्तनैः, वादकाश्च वाद्यैर्वस्तुपालं हर्षयन्ति देवीञ्च पूजयन्ति। पूजनेन प्रसन्ना देवी व्योमवाण्या रक्षणस्याश्वासनं प्रददाति। व्योमवाण्या देव्या आश्वासनं श्रुत्वा प्रमोदनिर्भरा जना आनन्दस्य पराङ्काष्ठां प्राप्नुवन्ति।

## सौगन्धिकाहरणम्

सौगन्धिकाहरणव्यायोगस्य लेखकः महाकविर्विश्वनाथोऽस्ति। अयं विश्वनाथः साहित्यदर्पणकाराद् विश्वनाथाद् भिन्नः। सौगन्धिकाहरणस्य प्रणयनं त्रयोदश्यां शतकेऽभवत्। कृतेर्नायको भीमोऽस्ति। कथावस्तु महाभारतस्य वनपर्वणः सङ्कलितम्। क्वचित् किञ्चित् कथावस्तुनि कविकृतं परिवर्तनमति शोभते।

प्रस्तुते व्यायोगे धीरोद्धतनायकस्य भीमस्य दर्पोक्तयः शिष्टताऽव्याप्ता विनयोपेताश्च सन्ति । प्रसङ्गानुसारम् असमास-विरलसमास-दीर्घसमासभूषिता कवेर्वर्णनाशैली क्वचिदपि सहृदयानां मनांसि न विरसयति । कृतेरध्ययनेन भावोऽयं स्वतः स्थिरो भवति—रससिद्धोऽयं कविरिति ।

अस्मिन्नपि व्यायोगे 'वीरभोग्या वसुन्धरा' इति सन्दिशन्नपि कविर्हनुमद्भीमयोर्मैत्रीं सम्पादयन् वीराणां कृते प्रतिस्पर्धाया अनुपयोगिनोऽशस्य परित्यागाय गुणग्राहकतायै च सन्दिशति ।

( क्रमशः )



## अभिनव-साहित्य-समीक्षा

### देवदूतम्

( भाषानुवादसहितम् )

लेखक : आचार्यः सुधाकरशुक्लः प्रकाशक : पङ्कजशुक्लः, कविकुलाय, दतिया ( म० प्र० ) पत्रसंख्या ५६, मूल्यम् पञ्चरूपकाः ।

महती संस्कृत-साहित्य-समृद्धिः सुधाकरशुक्लस्य सारस्वतसुर-सरिदवगाहानां सुपरिचिता वर्तते । तस्य गान्धी-सौगन्धिकं विंशति-सर्गात्मकं महाकाव्यं भारती-स्वयंवरं द्वादशसर्गात्मकं महाकाव्यं देवदूतं खण्डकाव्यं, केलिकलशः खण्डकाव्यं दुर्गादेवनं स्तोत्रमिति प्रमुखाः संस्कृतेन विनिर्मिताः कृतयः सुप्रतिष्ठिताः सन्ति ।

देवदूतमिति नव्यं गीतिकाव्यं कालिदासस्य मेघदूतमादर्शीकृत्य कविना सुप्रवर्तितम् । मेघदूतस्य रचना भारतीयेतिहासस्य स्वर्णयुगे निष्पन्ना । तदासीत् लोकानां सन्देशस्य स्वल्पोऽवसरः । तेषां कर्तव्य-मधिकृत्य किमपि ग्राहयितुं वा विमर्शोऽनपेक्षित आसीत् किन्तु वर्त्तमानयुगे देशदुर्दशा-दुर्दग्धहृदयानां सचेतसां विदुषां भावोद्रेकः स्वभावतो लोकमानसं प्राणयितुं प्रवर्तते एव । एतादृशानां सुकवीनां गणनाप्रसङ्गे सुधाकरस्य नामाविस्मरणीयमेव ।

अस्मिन् खण्डकाव्ये स्वर्गवासिनी कमलानेहरू कमपि देवमर-लोकाद् भारतं प्रति प्रेषयति । प्रसङ्गेऽस्मिन् भारतस्यातीतगौरवं सम्यग् व्याख्यातम् । भारतस्य गौरवं पारतन्त्र्येण विलोपितमेव । स्वातन्त्र्य युगेपि प्रमत्ता इव लोकाः शासनाधिकारिणश्चाजस्रं कर्तव्यपरायणा न सन्ति । अतएव राष्ट्रस्योन्नतिः न सम्यक् प्रचरति । यत् किञ्चित् देश-स्याभ्युदये बाधकं तत् सर्वं सोत्साहमुन्मूलनीयमिति सुधाकरः १३७ मन्दाक्रान्तापद्येषु सुमनोहर प्रतिपादयति । कवेर्वाणी आस्वादनीया । तद्यथा,

इत्यप्येतं प्रति जनमितस्तत्त्वतस्त्वं वितन्याः
हन्यादन्यः स्ववशरसतान्नागरोवापि वन्यः ।
पुंसः क्रोडम्परमरमणीयप्रियेव स्ववत्ता
नश्येद्यस्य स्वयमुपगता कस्त्वधन्यस्तदन्यः ॥
नेतारश्चेदपधनधियो निष्क्रियोत्कोचजीवाः
मिष्टावाचः कपटपटवोवञ्चकाः सञ्चिताशाः ।
नाशाय स्युः स्वभुविसुलभाः पेशलाः श्वेतवेशै-
र्निःसिद्धान्ताः कथय न कथं नंक्ष्यति त्वेषदेशः ॥

## राष्ट्ररत्नम् ( भाषानुवाद-सहितम् )

लेखको यज्ञेश्वरः शास्त्री, प्रकाशक : साहित्यभण्डार सुभाषबाजार, मेरठ, पृष्ठसंख्या १४६ मूल्यम् अष्टरूपकाः

महामहिम्नां राष्ट्रनिर्मातृणां सच्चरित-वर्णनया सम्यक् परिपूता विलसति लेखनी यज्ञेश्वर शास्त्रिणो गीति-काव्येऽस्मिन् । शास्त्रिणा महारानी लक्ष्मीबाई, दयानन्दः, बालगङ्गाधरः तिलकः, मदनमोहन-मालवीयः, महात्मा गान्धिः, वल्लभभाईपटेलः, लालालाजपतरायः, विनोबाभावे, राधाकृष्णन् , जवाहरलालनेहरू, सुभाषचन्द्रः, राजेन्द्र-प्रसादः, चन्द्रशेखरः आजादः, भगतसिंहः, खानअब्दुलगफ्फारः, रफी अहमदकिदवइ, सरोजिनी नायडू, वराहवेङ्कटगिरिः, लालबहादुरशास्त्री, इन्दिरागान्धी, युवराजकर्णसिंहः इति महामतीनां चारित्रिकोत्कर्षः, देशहितचिन्ता, तदर्थं तपस्विता योगदानं च सरल-सरलया संस्कृत-भारत्योपवर्णितानि । तद्यथा लक्ष्मीबाईमधिकृत्य—

सा पृष्ठदेशे स्वसुतं बबन्ध जग्राह वल्गाग्रमहो मुखेन ।
दोर्भ्यां कृपाणद्वयशोभिताभ्यां शत्रून् समुत्सारयितुं प्रवृत्ता ॥
स्वमातृभूमेः परिरक्षणाय स्वर्गप्रदं स्यान्मरणं नराणाम् ।
इति स्म धीरा वदति स्ववीरान् , स तर्जनी-तर्जनमीरयन्ती ॥

चन्द्रशेखरमधिकृत्य—

अये वीर ते जीवनं यावदासीन् न तावत् पराधीनता-पाशबद्धम् ।
पुरोवर्तिनं चापि मृत्युं निशाम्य मियेऽहं स्वयं नूनमाजाद भूत्वा ॥

धन्या साजननी धन्यो जनकोऽपि स तादृशः
याभ्यामनर्थनाशाय प्रसूतश्चन्द्रशेखरः ॥

राष्ट्रनिर्माणधिया लोकानां चारित्रिकविकासार्थं राष्ट्ररत्नस्य महती उपयोगितानुग्राह्या शिक्षाविद्भिः ।

## अनुनयः

लेखको डा० वीरभद्रमिश्रः प्रकाशक : सहृदय-प्रकाशनं लक्ष्मण-पुरम् ( लखनऊ ), पृष्ठसंख्या ३० मूल्यमेकरूपकः ।

गीतिकाव्यमिदं सहृदयानन्दनिर्झरो वर्त्तमानशृङ्गारितयुवकानां हितोपदेशाय भवेन्नवा किन्तु सत्यं सम्यगुद्घाटयतीति निश्प्रचम् । अत्र कश्चिद् युवा प्रणयी कस्याश्चिल्लौकिकाप्सरसः प्रेमतामसिकपाशाबद्धो निशां नयति । तमनापृच्छ्यैव सा बहुप्रिया तं विलपन्तं परित्यज्य कस्यचिदपरस्य प्रणयिनो धन-प्रणय-समुत्सुका दृश्यते । तद्यथा,

युवा विलपति—
क्व गतासि गतासुमाह मां विदधाना परिवृत्यनैषि किम् ।
किमुतासि शितासिवीक्षणे कृतमाना मयि सापराधके ॥

अथ कटिकृतहस्ता सुन्दरेणापरेण
पुलकिततनुरच्छस्पष्टमुक्तोपहासा ।
पलमिव विलगन्ती द्वारि दूरङ्गता सा
क्व न विदधति नार्यः क्रूरकार्या अनार्यम् ॥

प्राचीन युगेऽपीदृशीनां बहुप्रियाणां नागरकाणां च गरलप्रेमविधायि-नामभावो नासीत् , किन्तु न किमपि काव्यमेतादृशं मर्मशूलशल्यायित-परं निष्पादितं सुकविभिः ।

## श्रमण-शतकम् ( भाषापद्यानुवाद-संवलितम् )

लेखको विद्यासागर आचार्यः, सम्पादक : डा० प्रभाकर शास्त्री, धर्मशास्त्राचार्यः, प्रकाशक : कैलासचन्दपाटनी, नसियाँ मार्ग, अजमेर ( राज० ) पृष्ठसंख्या ६५ मूल्यम् रु० २—५०

श्रमणशतकस्य प्रणेता विद्यासागरः कन्नडदेशोत्पन्नः नववर्षीय एव शान्तिसागराचार्यस्योपदेशामृतं पायं पायं स्वल्पे वयसि गृहं परित्यज्य जयपुरमागत्याजीवनं ब्रह्मचर्यव्रतं स्वीकृतवान् । पश्चात् आचार्येण देशभूषणेन सह बहूनां तीर्थानां यात्रा पद्धत्यामकरोत् । अजयमेरुमागत्य ज्ञानसागराचार्यात् जैनागमानामध्ययनमकरोत् । तत्रैव द्वाविंशेवर्षे स्वल्पे वयसि निर्ग्रन्थ मुनिदीक्षा-मवाप्तवान् । केवलं पञ्चवर्षमेव संस्कृत-हिन्दीं चाधीत्यानेन मुनिना श्रमणशतकम् संस्कृतेन तस्य पद्यानुवादश्च हिन्दीभाषया विरचितः । निःसन्देहमेव कापि विलक्षणया प्रतिभया सम्पन्नोऽयं मुनिराध्यात्मिकानि तत्त्वानि सरलरीत्या पाठकानां हृदयङ्गमं करोति । आचार्य वचांसि सुग्राह्याणि सन्ति । तद्यथा,

पदं कुदृष्ट्यै देहि मा सास्ति भवेऽत्र दुःखप्रदेऽहिः ।
त्वमित्थमवेहि देहिंस्तां त्यजस्वसम्पदं यदेहि ।। ६२ ।।

एतस्यानुवादः

मिथ्यात्व को हृदय में मन ठाँव देना
है दुष्ट व्याल वह क्यों दुःख मोल लेना ।
छोड़ो उसे, निकट भी उसके न जाओ,
तो शीघ्र ही अतुल सम्पति–धाम पाओ ।।

## लघुनिबन्धाः

लेखक : एन्० सी० एस० वेङ्कटाचार्यः, विशारदः, शतावधानी, प्रकाशकः शास्त्ररत्नमाला १. ८. १५८ चिक्कडपल्ली हैदराबाद ५०००२०, पत्रसंख्या १२८ मूल्यम् पञ्चरूपकाः ।

काले काले वेङ्कटाचार्येण विरचिता कतिपयनिबन्धाः पुस्तकेऽस्मिन् सङ्गृहीताः । ते हि पद्यात्मकाः—श्रीयादवगिरिलक्ष्मीनरसिंह-प्रपत्तिः, नवमालिका । गद्यात्मकाश्च संस्कृताध्यापनशैली, लिखनम्—लेखनम् आन्ध्रप्रदेशस्य मुख्यमन्त्री श्री पी० वी० नरसिंहारायः आन्ध्रप्रदेशे संस्कृत-

विश्वविद्यालयः क निवेशनीयः, महाकविः कालिदासः कदासीत् , संस्कृत-व्याकरणशास्त्रे महेन्द्र-महेशसम्प्रदायौ, शासनेषु संस्कृतकवित्वम् , वयं वा सभ्या उताद्यपुरुषाः, वक्षोमुखाङ्गेषु, अन्तरिक्षपरिशोधनम् । सारस्वतव्याकरणञ्च । तर्कसङ्गतं निबन्धनं भावानां प्रवर्तितं वेङ्कटाचार्येणेति अधोलिखित सन्दर्भेण प्रमीयते—

यथाङ्गलभाषायाः बोधनं प्रश्नोत्तरं चाङ्गलभाषयैव भवति तथा संस्कृतभाषायामपि यदि भवेत् तदा ह्येषा दयनीया स्थितिः स्वयमेवापसरेदिति विदितं भवति । काञ्चिदपि भाषामभ्यस्यतः स्वभाषया आलोचनं ततः स्वभाषातोऽभ्यस्यमानभाषायामनुवादकरणमित्येषा पद्धतिः द्रुतव्यवहारनिरोधिन्येवभवतीति बोधनकलाविदां समयः ।

## श्रीमहागणपति-प्रादुर्भावः

लेखकप्रकाशकश्च गोकर्णसाम्बदीक्षितः श्रृङ्गार-मुद्रणालय होन्नावर ( उत्तर कर्नाटक ) । पृष्ठसंख्या ५६ । मूल्यम् रूप्यकद्वयम् ।

विंशशतकस्यानुत्तमेषु रूपकेष्वन्यतममिदं पञ्चाङ्गात्मकं नाटकं नाट्यगुणभूषितं मनोहरतममेव संवादेन, कार्यव्यापारेण च । वेदव्याकरणविद्वद्वरपण्डितेन साम्बदीक्षितेन सरलसरलयाभाषयालोकसंस्काराय सम्यक् प्रणीतमिदं कलात्मकं प्रेक्षणकम् । देशस्य चारित्रिकनिर्माणाय दुष्कृतां विनाशाय च लोकप्रवृत्तिः सौविध्येन प्रवाहितास्मिन् नाटके । संवादस्तु सम्भ्रमोत्पादकः । तद्यथा,

ईश्वरः—मदान्ध शूरोऽहमिति ते गर्वः । इदं शूलं पश्य ।

सिन्धूरः—ईश, मम गदया ते शिरःकुट्टनं भवति । सर्वान् देवान् स्मर ।

## बाणभट्टका साहित्यिक अनुशीलन

लेखक : अमरनाथपाण्डेयः, प्रकाशकः—भारतीय-विद्याप्रकाशन, वाराणसी-दिल्ली, पृष्ठसंख्या ४०० मूल्यं ४० रूपकाः ।

प्रयाग-विश्वविद्यालयस्य डी० फिल० उपाधिकृते निष्पादितेऽस्मिन्

निबन्धे बाणभट्टस्य कालः, जीवनवृत्तं, कृतयः, कथापुरुषाः, रसाभिव्यक्तिः, अलङ्कारः, शैली, भाषा, प्रकृति-चित्रणं, प्रेम, सौन्दर्यं, संस्कृतिः, समाजः परवर्तिकवीनामुपजीव्यता इत्यादि-विषयाः शोधसरणिमवलम्ब्य सम्यक् परिशीलताः। अत्र पदे-पदे लेखकस्य बहुज्ञता प्रतीयते, यया बाणभट्टस्य पाण्डित्यं साधु प्रबोधितम्। संस्कृतशोधच्छात्राणां कृते आदर्शोऽयं ग्रन्थो विद्याभिलाषुकाणामपि बाणभट्टीयज्ञानाम्बुधिवगाहं प्रस्तौति। अमरनाथस्यलेखनीतरेषामपि संस्कृतमहाकवीनामरकृतीनां समीक्षाद्वारेण काव्यास्वादपरायणानां परितृप्तिमजस्रं विदधातु इति भूयो भूयो भारती समालोचकानामुच्चरति।

## आचार्य-मणिशङ्करद्विवेदी स्मारिका

सम्पादक : श्रीकालूरामो व्यासः, प्रकाशकः आचार्यः मणिशङ्कर द्विवेदी स्मारिका-समिति, फतहसागरकी नहर, भीमचौक, जोधपुर, पृष्ठसंख्या १०५

स्मारिकायां संस्कृतहिन्दीभाषाभ्यामाचार्यमणिशङ्करद्विवेदि-विषयका श्रद्धाञ्जलयः तस्य कृतयश्च समुद्घाटिताः। मणिशङ्करोऽयं राजस्थानप्रदेशस्य बाडमेरजनपदे लूनीनदीतटेऽवस्थिते पातनवाडाग्रामे वि० सं० १९७० भाद्रपदे कृष्णत्रयोदश्यां प्रादुरभवत्। ग्रामस्य परिसरे ब्रह्मचारिणो हरिरामशास्त्रिण आश्रम आसीत्। नातिदूरं तस्मात् सिद्धयोगिनः भारती-महाराजस्य मठो विराजते। सतां विदुषाञ्च साहचर्येण तत्रत्य-ग्रामवासिनामाध्यात्मिकाभ्युदयस्य स्वर्णावसरः सञ्जातः। पातनवाडाग्रामे स्वपितुः जयशङ्कर द्विवेदिनः चरणेषु वेदव्याकरणादीनामध्ययनं प्रारभ्य पश्चात् स्वपित्रा सह सिन्धुप्रदेशे गतवान्। तत्र हैदराबादनगरस्थ-संस्कृतपाठशालायां काशीनाथशास्त्रिणः व्याकरणं साहित्यं चाधीतवान्। बाल्यत एव मणिशङ्करोऽयं सङ्गीत-चित्रकलादिषु रुचिपरायणः स्वव्यक्तित्वं परिष्कृतवान्। मणिशङ्कर-विषये पं० मदनमोहनमालवीयस्याधोलिखितं पद्यं सार्थकमस्ति—

> सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया।
> देशभक्त्यात्मत्यागेन सम्मानार्हो सदाभव॥

सत्येन, ब्रह्मचर्येण व्यायामेन च तस्य शरीरं सुश्रीकतासम्पन्न-मासीत्। समाजसेवाव्रतेन स यावज्जीवमात्मानं पुनाति स्म।

मणिशङ्करस्य श्रेष्ठा कृतिः सिन्धुप्रदेशस्य महाकवेः शाहलतीफस्य सिन्धुभाषया 'शाहजो रिसालो' नाम्ना प्रख्यातानां ६६० पद्यानां हिन्दीभाषानुवादो विद्यते। अयमनुवादः साहित्याकादेमी दिल्लीतः प्रकाशितः। संस्कृतेन तस्य काव्यानि कौमुदीपत्रिकायां भगवान् बादरायणः, सम्राजं विक्रमादित्यं प्रति, ग्रावा, अध्यापकः, शारदी शोभा प्रकाशितानि। गद्येन स मारवाडस्य वीर्यावद्याप्रसिद्धता, भारतं भाषा-विज्ञानं च, जोधपुरम् इति निबन्धान् प्रकाशितवान्। बादरायण विषये-मणिशङ्करो वक्ति—

विभान्ति सत्यं सरसा रसाम्बुधे
वाचः पुराणा अपि ते नवा नवाः।
कवे त्वदीयाः कृतयो न केवलं
हरन्ति चेतस्तु हरन्ति किल्विषम्॥

विक्रमादित्यं प्रति

निःस्वा वयं परवशाः परशासनस्थाः
किं स्वागताय विदधीमहि तावकाय।
सप्रेम केवलमिमे प्रकृतेः प्रणामा
राजाधिराज तव सन्तु सभाजनेऽलम्॥

ग्रावात्मकथा मणिशङ्करमुखेन

तक्षा विहन्ति हृदयानि यथा यथा मे
तेषां कलाकुशलता स्मृतितां तथैमि।
गाथा-सुलेख-समये गतगौरवाणाम्
उत्कीर्णलेखवसवः किल मे सहायाः॥

एतादृशां तपस्विविदुषां सञ्चारित्र्येण सम्भरिताजीवा संस्कृतवाणी जगत्पुनातीति मणिशंकरस्य दिव्यां विभूतिं कामयामहे।

## भगवान्-महावीर-स्मृति-ग्रन्थ

प्रधानसम्पादकः ज्योतिप्रसाद जैन, प्रकाशकः शशिभूषणशरण, सचिवः, श्रीमहावीरनिर्वाण-समितिः, उत्तरप्रदेश, लखनऊ, मूल्यम् ५० रूपकाः।

श्रीमहावीर स्वामिनां पञ्चविंशतिशततमे निर्वाणमहोत्सवमुपलक्ष्य प्रणीतोऽयं भारतीय संस्कृतेः सुमनोऽञ्जलिः आयोजकानां यशोऽमरीकरोति। ग्रन्थेऽस्मिन् सप्तखण्डा विलसन्ति। तद्यथा—

१. महावीरवचनामृतम्
२. महावीर-स्तवनम्
३. महावीरस्य युगं जीवनपरिशीलनं च
४. जैनधर्मः, दर्शनं संस्कृतिश्च
५. शाकाहारः
६. उत्तरप्रदेशे जैनधर्मः
७. निर्वाणसमितेः परिचय उपलब्धयश्च।

उत्तरप्रदेशोऽयं जैन-संस्कृतेः समुन्नयनेनाप्यनुत्तर एवेति स्मृति-महाग्रन्थायोजकानामभिमतं सम्यक् फलितमेव! प्रदेशेऽस्मिन् अयोध्या-क्षेत्रं प्रथमतीर्थङ्कर ऋषभदेवोऽलङ्कृतवान्, अर-शान्तिनाथ-कुन्थुमहाभागा तीर्थङ्कराः हस्तिनापुरे सञ्जाताः। शौरीक्षेत्रं नेमिनाथस्य जन्मना पावितम्। तीर्थङ्करेण पार्श्वनाथेन स्वजनुषा वाराणसी गौरवान्विता। मथुरायोध्याकौशाम्बी-वाराणसी-श्रावस्तीषु पुरातनजैनकलाकृतयः जैन-संस्कृतेरुद्बोधिका वर्तन्ते।

खण्डशो विषयमाहात्म्यमाकलनीयम्।

तत्र महावीरवाणी खण्डे—

धम्मो सुद्धस्स चिट्ठइ। ( धर्मः शुद्धस्य तिष्ठति। )
सव्वं जगं तु समयाणुपेही। ( सर्वं जगत् तु समतानुप्रेक्षि )
अत्ता चेव अहिंसा। ( आत्मैवाहिंसा )
परिहर असन्तवयणं। ( परिहरासद्वचनम् )

सच्चं लोगम्मि सारभूयं। ( सत्यं लोके सारभूतम् )
तं सच्चं खु भगवं। ( तत् सत्यं खलु भगवान् )
सीलं मोक्खस्स सोवाणं। ( शीलं मोक्षस्य सोपानम् )
कामा दुरतिक्कमा। ( कामा दुरतिक्रमाः )
अत्थो अणत्थमूलं। ( अर्थोऽनर्थमूलम् )
लाहा लोहो पवड्ढइ। ( लाभात् लोभो प्रवर्धते )

सङ्गो महाभयम्—

विणीयतण्हो विहरे। ( विनीततृष्णो विहरेत् )
कत्तारमेव अणुजाइ कम्मं। ( कर्तारमेवानुयाति कर्म )

णाणा जीवा णाणाकम्मं णाणाविहं हवे लद्धी।
तम्हा वयणविवादं सगपरसमएहिं वज्जिज्जो॥
( नाना जीवा नानाकर्म नानाविधं भवेल्लब्धिः।
तस्माद् वचनविवादं स्वकपरसमयैः वर्ज्यः॥ )

एतेषु वचनेषु न केवलं जिनवाणी अपितु बुद्धवाणी अपि चीर्णा खलु सुरभिता।

**महावीरस्तवनखण्डे**

सुप्रभातं जिनेन्द्रस्य वीरः कमललोचनः।
येन कर्माटवी दग्धा शुक्लध्यानोग्रवह्निना॥
श्रीमते केवलज्ञानसाम्राज्यपदशालिने।
नमो वीराय भव्यौघे धर्मतीर्थप्रवर्तिने॥

हर युग के शाश्वतसत्यों को
सार तुम्हारा अमरगान है।
जितना समय बीतता जाता
बढ़ता उसका और मान है॥

**महावीरयुगखण्डे**

अस्मिन् खण्डे विद्यानन्द-विनोबा भावे-वासुदेवशरणाग्रवाल-तुलसी-

राधाकृष्णनादि महामनीषिणां महावीरस्यादर्शजीवनपथस्य भूमिका सप्रमाणं प्ररोचिता ।

## जैनधर्मदर्शनखण्डे

अत्र जैनधर्मदर्शनयोः मानवताया विकासस्य संरक्षणस्य च दिशाया माहात्म्यं कैलाशचन्द्रशास्त्रि-बनारसीदास-प्रभाकर-माचवे-कृष्णदत्तवाजपेयादिना प्रणोदितम । एतस्मिन् खण्डे हिन्दीभाषा-लेखाः वर्त्तमानयुगे महावीरस्योपदेशानां सार्थकता, जैनदर्शनस्य व्यापकता, महावीरस्याहिंसा, जैनगृहस्थादर्शो सविशेषमुपयोगिनः सन्ति ।

## शाकाहारखण्डे

खण्डेऽस्मिन् भारतीयानां वैदेशिकानां च विपश्चितां शाकाहारस्योपगितां मांसाण्डादिभोजनस्य हानिं चाभिलक्ष्य वैज्ञानिकं शोधपूर्णं विवेचनं सम्यक् प्रस्तावितम् । तथा हि—विविधपशूनां मांसे घातकं तत्त्वं यूरिकएसिड इति विषं वर्तते । तेन विषेण हृदय-रोगो यक्ष्मा, रक्ताभावः, अजीर्णमादिरोगा उत्पद्यन्ते । मांसभोजनेनास्थीनि दुर्बलानि भवन्ति । कुक्कुटाङ्गनाया बहुविधाक्षयादिरोगाः तस्याण्डैः सह भक्षकाणामुदरमधिशेरते । अण्डस्य द्रवांशो यकृते रक्तशिरासु च व्रणं कश्मलं च जनयति । शाकाहारेणायुर्वर्धते ।

विदेशेषु शाकाहारप्रचारिणी सभा संस्थापिताः सन्ति । तथा हि—

1. The Order of Golden Age, London
2. The Vegetarian Society, England
3. The National Anti-vivi section leque, London
4. The London Vegetarian Society, London
5. The Food Education Society, London
6. The Liverpool Vegetarian Society, England
7. The Scottish Vegetarian Society, Glasgow
8. The Notingham Vegetarian Society Notingham, England

9. The German Vegetarian Society, Frankfern, Germany
10. The American Human Education Society, U. S. A.
11. The Tornto Rescue league, Boston
12. The American Humān Association, U. S. A.
13. The North American Vegetarian Society
14. The World Vegetarian Congress
15. International Vegetarian Union.

अन्ताराष्ट्रियशाकाहारिसङ्घस्याधिवेशनं १६०८, '१०, '१३, '२३, '२७, '२६, '३२, '३५, '३६, '३८, '७३ ख्रीष्टसंवत्सरेऽभवत्। अनया संस्थया समविचाराणां विश्वमानवानामेकीकरणमिति प्रधानमुद्देश्यं सम्पूरयिष्यमाणं परिलक्ष्यते। अमेरिकादेशे शाकाहारस्य प्रचारो वर्धते एव। कैनाड–देशे आहारशास्त्रविदामभिमतेन शाकाहारस्य महती रुचिः प्रवर्तते। तत्र टोरण्टो-विजिटेरियन-असोसियेशनं कनाडियन-वेजिटेरियन-यूनियनमिति संस्थाद्वयं शाकाहारप्रचाराय भृशं प्रयतन्ते। ग्रेटब्रिटेनस्य विजिटेरियन-पत्रिका १८८८ ई० वर्षे समारब्धा। शाकाहारेणाध्यात्मिकजीवनस्य साहचर्यं प्रतिपाद्यमानेयं पत्रिकाभृशं प्रभवति। हालैण्डदेशेशाकाहारिणां संख्या १२००० वर्तते। तत्र शाकाहारस्य महत्त्वं प्रतिपादयन्ती पत्रिका प्रकाश्यते। इटलीदेशे पाइथोगोरसः सर्वप्रथमः शाकाहारी विदित एव। तत्रत्या धार्मिकसन्तः मांसाहारस्य दुष्कृतिं प्रवदन्ति।

## उत्तरप्रदेशे जैनधर्मः

अस्मिन् खण्डे उत्तरप्रदेशे जैनधर्मस्योदयो विकासश्च, तीर्थानि सन्तः, पत्र-पत्रिकाः, संस्थाः, उत्कीर्णलेखाः, सङ्ग्रहालयाः, मूर्तयः, कलाकेन्द्राणि इत्यादिविषया निभालिताः

स्मृति-ग्रन्थोऽयं बहुविध सुरङ्गै रेखाङ्कितैर्वा चित्रैर्न केवलमाध्यात्मिकमपितु रसात्मकमानन्दमावहति। एतस्यायोजका ज्ञानवर्धनत्वात् पुण्यशीला परं धन्यवादार्हा विलसन्तुतराम्।

## शासनप्रभावक आचार्य जिनप्रभ और उनका साहित्य

लेखकः महोपाध्याय विनयसागर प्रकाशकः अभयजैन ग्रन्थमाला, नाहटों की गवाड, बीकानेर पृष्ठसंख्या २३६ मूल्यं पञ्चरूपकाः।

आचार्यो जिनप्रभः तुगलकवंशीयं राजानं मुहम्मदं तुगलकं जैन-जीवनदर्शनस्य प्रबोधं कारयामास। आचार्योऽयं ख्रीष्टस्य त्रयोदशशतकस्यान्तिमे चरणे चतुर्दशशतकस्य पूर्वार्धे बहूनां काव्यादिग्रन्थानां निर्माणमकरोत्। तथा हि—

१. श्रेणिकचरितं महाकाव्यम् रचनाकालः १३०० ई० व्याकरणस्य प्रक्रिया प्रवर्तितास्ति काव्येऽस्मिन्।

२. कातन्त्रविभ्रमटीका—व्याकरण ग्रन्थः। प्रथमोऽयं ग्रन्थ आचार्य जिनप्रभस्य।

३. विदग्धमुखमण्डनटीका। १३१२ ख्रीष्टसंवत्सरे विरचिता।

४. तपोटमतकुट्टनशतक—अनुष्टुप्छन्दसि शतकमिदं तर्कपरम्। तपोटास्तु जैनसम्प्रदायविशेषस्यानुयायिनः।

५. स्तोत्राणि—सहस्रप्रायस्तोत्रेषु शतप्रायाणि लभ्यन्तेऽधुना। एतेषु चतुर्विंशतिजिनस्तवः प्रधानः। कतिपय स्तोत्राणि दर्शनपराणि सन्ति।

६. विविध तीर्थकल्पः—१३३२ ख्रीष्टसंवत्सरे विरचितोऽयं ग्रन्थः। एतस्यां कृतौ जैनतीर्थानामैतिहासिकं भौगोलिकं च विवरणं प्रस्तावितम्। स्वयमेव तीर्थाटोऽयं कविः नैजिकमनुभवं निहितवान्। अस्मिन् ग्रन्थे ३५६० श्लोकाः सन्ति।

ग्रन्थेऽस्मिन् जिनप्रभयुगस्य परिप्रेक्ष्यम् आचार्यस्य गुरुपरम्परा, जन्म, दीक्षा, आचार्यपदग्रहणम्, चमत्कारिकघटनाः, शिष्यपरम्परा साहित्य-सर्जनादयः वर्णिताः।

## आयुर्वेद का वैज्ञानिक इतिहास

लेखकः आचार्य प्रियव्रत शर्मा, प्रकाशकः चौखम्भा-ओरियन्टालिया, गोपालमंदिर-लेन, वाराणसी, पृष्ठसंख्या ७३५ मूल्यं ३५ रूपकाः।

भारतीयायुर्वेदो विद्याधिकारेऽनुत्तमो विलसतितरां सृष्टेः समारम्भादेव। अस्य ग्रन्थस्य नवाध्यायेषु अनादिरायुर्वेदः, संहिताग्रन्थाः, व्याख्या-वाङ्मयम्, कायचिकित्सा, द्रव्यगुणः, रसशास्त्रम्, अन्यान्यङ्गानि, इत्यादि विषयाः सन्दब्धाः सन्ति। आयुर्वेदस्य विकासमधिकृत्य बहुलिखितं वर्तते भारोपीयभाषाभिः। तथापि समालोचकानां मनसि परितोषो नास्ति, यतो हि नाम चिरकालिकाखण्डपरिशीलनेन तपोनिवेशेन च भारतीयज्ञानविज्ञानादीनां यो विकासोऽभवत् स तेनैव यथा तथैव पुरातनपद्धत्या परिबोधनीया। नैषा स्थितिर्भारतीयायुर्वेदनिदाम् इति मानसं दुनोति भारतगौरवानुष्ठायिनाम्। वृक्षायुर्वेद-विषये किञ्चिदपि न विवृतं पुस्तकेऽस्मिन्, पशुचिकित्सापि न सम्यङ्निभालिता। तथापि 'अकरणान्मन्दकरणं श्रेयः इति बुद्ध्या भारतीयायुर्वेददर्शिनां धन्यवादार्होऽयं लेखको निकटभविष्ये वैज्ञानिकदृष्ट्या प्रभविष्णुशैलीमधिकृत्यातीतं गौरवं देशस्य साधु घटयिष्यतीति कामयामहे।

समीक्षाचणः